

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NO. 1201.

# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA
## OF THE WHITE YAJURVEDA,
WITH THE
## COMMENTARY OF SĀYANĀCHĀRYA.






EDITED BY
ĀCHĀRYA SATYAVRATA SĀMASRAMÍ.
*Lecturer of Sanskrit in the University of Calcutta.*

VOL. VII, FASCICULUS I.

CALCUTTA:
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1909.





# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, *11, Grafton Street, New Bond Street, Lond*
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

*Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... Rs.
Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ...
*Agni Purāṇa, Fasc 3-14 @ /10/ each ... ...
Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ...
Aitareyālochanum, (the preface of the Ditto) by Ācarya S. V. Sāmasramī ...
*Anu Bhāshya, Fa c 2-5 @ /10/ each ... ...
Aphorisms of Sāṇdilya, (English) Fasc. 1 ... ... ...
Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ...
Acvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ...
*Ātharvana Upanishad, Fasc. 3-5 @ /10/ each ... ...
Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ...
A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each ...
Bālam Bhaṭṭī, Vol I Fasc 1-2 , Vol II Fasc I @ /10/ ... ...
Baudhāyana Srauta Sutra, Fasc. 1-3 , Vol II Fasc I @ /10/ each ...
*Bhā natī, Fasc 4-8 @ /10/- ... ... ... ...
Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/- ... ... ...
Brahma Sutra, Fasc. 1, @ /10/- ... ... ... ...
Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ...
Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ...
Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 ... ... ...
Çatadusani, Fasc. 1-2 ... ... ... ...
Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ...
Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4
Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ...
*Caturvarga Chintāmani, (Text) Vols. II, 1-25 ; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10 @ /10/ each ; Vol. IV, Fasc. 1-6 ... ...
Çlokavārtika, (English) Fasc. 1-6 @ 1/4/- ... ... ... 3
*Çrauta Sūtra of Āpastamba, Fasc. 9-17 @ /10/ each ... ...
Ditto Acvālāyan, Fasc 4-11 @ /10/ each ... ...
Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7 ; Vol. II, Fasc. 1-4 ; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ...
Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... ...
Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ...
Dān Kriyā Kaumundi, Fasc. 1-2 ... ... ... ...
Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ...
Ditto Ācārasāra, Vol II, Fasc. 1 3 ... ...
Gobhiliya G hyo Sutrum, Fasc. 4-12 @ /10/ ... ... ...
Kāla Viveka, Fasc. 1-7 ... ... ... ...
Kātantra, Fasc. 1-6 @ /12/ each ... ... ... 4
Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... 17
Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ...
Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each ... ... 3
Ditto Fasc. 3-6 @ /10/ each ... ... ...
Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... 6
Mahā-bhāṣya-pradīpōdyōta, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each ... ... ... 16
Manuṭikā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ...
Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ...
* Ditto (Text) Fasc 5-7 @ /10/ ... ... ...
*Mīmāṁsā Darcaṇa, (Text) Fasc. 6-19 @ /10/ each ... ...






# ॥ शतपथब्राह्मणम् ॥



॥ अथ ॥

## ॥ सप्तमकाण्डम् ॥

### ॥ अथ प्रथमः प्रपाठकः ॥

॥ प्रथमं ब्राह्मणम् ॥

॥ अपिवा प्रथमाध्याये प्रथमं ब्राह्मणम् ॥



॥ हरिः ॐ ॥

गार्हपत्यं चेष्यन् पलाशशाखया व्युदूहति । अवस्यति हैतद्यद् गार्हपत्यं चिनोति य ऽउ वै के चाग्निचितोऽस्यामेव तेऽवसितास्तद्यद्व्युदूहत्यवसितानेव तद् व्युदूहति नेदवसितानध्यवस्यानीति* ॥१॥ अपेत वीत वि च सर्पतात इति । अप

* '०नीति'—इति क, '०नीति'—इति ग ।

चैवेत वि चेत व्यु च सर्पतात इत्येतद्य ऽउदर-सर्पिणस्तानेतदाह ये ऽत्र स्थ पुराणा ये च नूतना इति ये,त्र स्थ सनातना ये चाधुनातना इत्येतत् * ॥ २ ॥

अदाद्यमोऽवसानं पृथिव्या इति। यमो ह वा ऽअस्या अवसानस्येष्टे स एवास्मा ऽअस्या मव-सानं ददाति † ॥ ३ ॥

अक्रन्निमं पितरो लोक मस्मा ऽइति। क्षत्रं वै यमो विशः पितरो यस्माऽउ वै क्षत्रियो विशा संविदानोऽस्या मवसानं ददाति तत् सुदत्तं तथो हास्मै क्षत्रं यमो विशा पितृभिः संविदानोऽस्या मवसानं ददाति ‡ ॥ ४ ॥

पलाशशाखया व्युदूहति। ब्रह्म वै पलाशो ब्रह्मणैव तदवसितान् व्युदूहति मन्त्रेण ब्रह्म वै मन्त्रो ब्रह्मणैव तदवसितान् व्युदूहति ता मु-दीची मुदस्यति ‡ ॥ ५ ॥

---

* 'इत्येतत्'—इति ग, 'इत्येतत्'—इति घ।

†, ‡ 'दताति'—इति क। § 'मुदस्यति'—इति क।

अथोषान्निवपति। अयं वै लोको गार्हपत्यः पशव ऊषा अस्मिंस्तल्लोके पशून् दधाति तस्मादिमेऽस्मिंल्लोके पशवः॥ ६॥

यद्वेवोषान्निवपति। प्रजापतिः प्रजा असृजत, ता नानोल्वा असृजत, ता न समजानत, सोऽकामयत सञ्जानीरन्निति, ताः समानोल्वा अकरोत्तासा मूषानुल्व मकरोत्ताः समजानत, तस्मादप्येतर्हि समानोल्बाः स मेव जानते, देवैः समानोल्बोऽसानीत्यु वै यजते यो यजते, तद्यदूषान्निवपति देवैरेव तत् समानोल्बो भवति॥ ७॥

सञ्ज्ञान मसीति। समजानत ह्येतेन, कामधरण मिति, पशवो वा ऽऊषाः, पशवः कामधरणं, मयि ते कामधरणं भूयादिति मयि ते कामधरणं भूयादिति मयि ते पशवो भूयासुरित्येतत्तैः सर्व्वं गार्हपत्यं प्रच्छादयति, योनिर्व्वै गार्हपत्या चितिरुल्ब मूषाः सर्व्वां तद्योनि मुल्वेन प्रच्छादयति *॥ ८॥

---

* 'प्रच्छादयति'—इति क।

अथ सिकता निवपति। अग्नेरेतद्वैश्वानरस्य भस्म यत् सिकता, अग्निमु वा ऽएतं व्वैश्वानरं चेष्यन् भवति न वा ऽअग्निः स्वं भस्मातिदहत्य-नतिदाहाय ॥ ९ ॥

यद्वेव सिकता निवपति। अग्नेरेतद्वैश्वानरस्य रेतो यत् सिकता अग्निमु वा ऽएतं व्वैश्वानरं चेष्यन् भवति न वा ऽअरेतस्कात् किञ्चन व्विक्रि-यतेऽस्माद्रेतसोऽधि व्विक्रियाता ऽइति ॥ १० ॥

अग्नेर्भस्मास्यग्नेः पुरीष मसीति। यातयाम वा ऽअग्नेर्भस्मायातयाम्नः सिकता अयातयाम मेवैनदेतत् करोति ताभिः सर्व्वं गार्हपत्यं प्रच्छा-दयति योनिर्व्वै गार्हपत्या चिती रेतः सिकताः सर्व्वस्यां तद्योनौ रेतो दधाति * ॥ ११ ॥

अथैनं परिश्रिद्भिः परिश्रयति। योनिर्व्वै परिश्रित इद मेवैतद्रेतः सिक्तं योन्या परि-गृह्णाति तस्माद्योन्या रेतः सिक्तं परिगृह्यते ॥ १२ ॥

यद्वेवैनं परिश्रिद्भिः परिश्रयति। अयं वै

* 'दधाति'—इति क।

लोको गार्हपत्य आपः परिश्रित, इमं तं लोक मद्भिः परितनोति, समुद्रेण हैनं तत् परितनोति सर्व्वतस्तस्मादिमं लोकꣳ सर्व्वतः समुद्रः पर्य्येति, दक्षिणावृत्तस्मादिमं लोकं दक्षिणावृत् समुद्रः पर्य्येति, खातेन, तस्मादिमं लोकं खातेन समुद्रः पर्य्येति ॥ १३ ॥

चित स्थेति। चिनोति ह्येनाः परिचित स्थेति परि ह्येनाश्चिनोत्यूर्द्धचितः श्रयध्व मित्यूर्ध्वा उपदधदाह तस्मादूर्द्ध एव समुद्रो व्विजतेऽथ यत्तिरश्चीरुपदध्यात् सकृद्धैवेदꣳ सर्व्वꣳ समुद्रो निर्म्मज्ज्यान्न * सादयत्यसन्ना ह्यापो न सूददो-हसाधिवदति ॥ १४ ॥

अस्थीनि वै परिश्रितः। प्राणः सूददोहा, न वा ऽअस्थिषु प्राणोऽस्त्येकेन यजुषा बह्वीरिष्टका उपदधात्येकꣳ ह्येतद्रूपं यदापोऽथ यद् बह्वाः परिश्रितो भवन्ति बह्व्यो ह्यापः ॥ १५ ॥

---

* 'निर्मज्ज्यान्न' इति, 'निर्म्रिज्यान्न'—इति च दृष्टं डा० वेबर-महोदयेन। 'निर्मृज्यान्न'—इति तु सायणासम्मतः पाठः।

तद्वै योनिः परिश्रितः। उल्व मूषा, रेतः सिकता, बाह्याः परिश्रितो भवन्त्यन्तरऽऊषा, बाह्या हि योनिरन्तर मुल्वं, बाह्यऽऊषा भवन्त्यन्तरा: सिकता, बाह्यं ह्युल्वं मन्तरं रेत, एतेभ्यो वै जायमानो जायते तेभ्य एवैन मेतज्जनयति* ॥ १६ ॥

अथैन मतश्चिनोति। इद मेवैतद्रेतः सिक्तं व्विकरोति, तस्माद्योनौ रेतः सिक्तं व्विक्रियते ॥ १७ ॥

स चतस्रः प्राचीरुपदधाति। द्वे पश्चात् तिरश्ची द्वे पुरस्तात्तद्याश्चतस्रः प्राचीरुपदधाति स आत्मा तद्यत्ताश्चतस्रो भवन्ति चतुर्व्विधो ह्यय मात्माथ ये पश्चात्ते सक्थ्यौ ये पुरस्तात्तौ बाहू यत्र वाऽआत्मा तदेव शिरः ॥ १८ ॥

तं वाऽएतम् †। अत्र पक्षपुच्छवन्तं व्विकरोति यादृग् वै योनौ रेतो व्विक्रियते तादृग् जायते तद्यदेत मत्र पक्षपुच्छवन्तं व्विकरोति तस्मादेषो ऽमुत्र पक्षपुच्छवान् जायते ॥ १९ ॥

---

* 'मेतज्जनयति'—इति क। † 'एतम्'—इति ग, घ।

तं वै पक्षपुच्छवन्त मेव सन्तम्। न पक्ष-पुच्छवन्त मिव पश्यन्ति तस्माद्योनौ गर्भं न यथा-रूपं पश्यन्त्यथैन ममुत्र पक्षपुच्छवन्तं पश्यन्ति तस्मा-ज्जातं गर्भं यथारूपं पश्यन्ति ॥ २० ॥

स चतस्रः पूर्वा उपदधाति। आत्मा ह्येवाग्रे सम्भवतः सम्भवति दक्षिणात उदङ्ङासीन उत्त-रार्ध्यां प्रथमा मुपदधाति तथो हास्यैषोऽभ्यात्म मेवाग्निश्चितो भवति ॥ २१ ॥

अयᳪ सो ऽअग्निः *। यस्मिन्त्सोम मिन्द्रः सुतं दध ऽइत्ययं वै लोको गार्हपत्य, आपः सो-मः सुता ऽस्मिंस्तल्लोकेऽप इन्द्रोऽधत्त जठरे वा-वशान इति मध्यं वै जठरᳪ सहस्रियं वाज-मत्यं न सप्ति मित्यापो वै सहस्रियो वाजः स-सवान्त्सन्त्स्तूयसे जातवेद इति चितः संस्तूयसे जातवेद इत्येतत् † ॥ २२ ॥

अग्ने यत्ते दिवि वर्च इति। आदित्यो

---

* 'ऽअग्निः'—इति ग, घ।

† 'इत्येतत्'—इति ग, 'इत्येतत्'—इति घ।

वा ऽअस्य दिवि व्वचः पृथिव्या मित्यय मग्निः पृथिव्याᳩ यदोषधीष्वप्स्वा यजत्रेति य एवौषधिषु चाप्सु चाग्निस्त मेतदाह येनान्तरिक्ष मुर्व्वाततन्थेति व्वायुः स त्वेषः स भानुरर्णवो नृचक्षा इति महान्त्स भानुरर्णवो नृचक्षा इत्येतत् * ॥ २३ ॥

अग्ने दिवो ऽअर्ण मच्छा जिगासीति † । आपो वा ऽअस्य दिवोऽर्णास्ता एष धूमेनाच्छैत्यच्छा-देवाᳩ२॥ ऽऊचिषे ‡ धिष्ण्या य ऽइति प्राणा वै देवा धिष्ण्यास्ते हि सर्व्वा धिय इष्णन्ति, या रोचने परस्तात् सूर्य्यस्य याश्चावस्तादुपतिष्ठन्त ऽआप इति रोचनो ह नामैष लोको यत्रैष एतत् तपति तद्याश्चैतं परेणापो याश्चावरेण ता एतदाह ॥ २४ ॥

पुरीष्यासो ऽअग्नय इति । पशव्यासो ऽग्नय

* 'इत्येतत्'—इति ग, 'इत्येतत्'—इति घ ।

† 'जिगासीति'—इति ग, घ ।

‡ 'देवांᳩ॥ऊचिषे'—इति, 'देवांᳩऊचिषे';—इति च दृष्टं वेबर-महोदयेन; परं 'देवाᳩ२॥ऽऊचिषे'—इत्येव पाठस्तत्सम्मतः ।

इत्येतत्, प्रावणेभिः सजोषस इति प्रायणरूपं, प्रायणᳫं ह्येतदग्नेर्यद् गार्हपत्यो, जुषन्तां यज्ञमद्रुहोऽ नमीवा इषो महीरिति जुषन्तां यज्ञमद्रुहोऽनशनाया इषो महीरित्येतत् * ॥ २५ ॥

नानोपदधाति। ये नानाकामा आत्मंस्तांस्तद्दधाति, सकृत् सादयत्येकं तदात्मानं करोति सूददोहसाधिवदति, प्राणो वै सूददोहाः प्राणेनैवैन मेतत् सन्तनोति सन्दधाति ॥ २६ ॥

अथ जघनेन परीत्य। उत्तरतो दक्षिणासीनोऽपरयोर्दक्षिणा मग्न ऽउपदधातीडा मग्ने पुरुदᳫंसᳫं सनिं गोरिति पशवो वा ऽइडा, पशूनामेवास्मा ऽएता माशिष माशास्ते, शश्वत्तमᳫं हवमानाय साधेति, यजमानो वै हवमानः, स्यान्नः सूनुस्तनयो विजावेति, प्रजा वै सूनुरग्ने सा ते सुमतिर्भूत्वस्मे ऽइत्याशिष माशास्ते ॥ २७ ॥

अथोत्तराम्। अयं ते योनिर्ऋत्वियो यतो जातो ऽअरोचथा इत्ययं ते योनिर्ऋतव्यः सना-

* 'महीरित्येतत्'--इति ग, घ।

२

तनो यतो जातोऽदीप्यथा इत्येतत्, तं जानन्नग्न ऽआरोहाथा नो वर्द्धया रयि मिति, यथैव यजुस्तथा बन्धुः ॥ २८ ॥

सक्थ्यावस्यैते *। ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमे सक्थ्यौ, द्वे भवतो, द्वे हीमे सक्थ्यौ, पश्चादुपदधाति पश्चाद्धीमे सक्थ्यावग्राभ्याᳪं सᳪंस्पृष्टे भवत एवᳪं हीमे सक्थ्यावग्राभ्याᳪं सᳪंस्पृष्टे ॥ २९ ॥

अथ तेनैव पुनः परीत्य। दक्षिणत उदङ्ङासीनः पूर्व्वयोरुत्तरा मग्र ऽउपदधाति, चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीदेत्यथ दक्षिणां परिचिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीदेति ॥ ३० ॥

बाहू ऽअस्यैते †। ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू, द्वे भवतो, द्वौ हीमौ बाहू पूर्व्वार्द्ध ऽउप-

* 'सक्थ्यावस्यैते'—इति ग, घ।

† 'ऽअस्यैते'—इति ग, घ।

दधाति पुरस्ताद्वीमौ बाहू ऽअग्राभ्याᳬं सᳬं-स्पृष्टे भवत एवᳬं ह्रीमौ बाहू ऽअग्राभ्याᳬं सᳬं-स्पृष्टौ स वा ऽइतीमा ऽउपदधातीतीमे, ऽइतीमे तद्दक्षिणावृत्तद्धि देवत्रा * ॥ ३१ ॥

अष्टाविष्टका उपदधाति। अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्त मेवैन मेतच्चिनोति, पञ्चकृत्वः सादयति, पञ्च-चितिकोऽग्निः पञ्चऽर्त्तवः संव्वत्सरः, संव्वत्सरोऽग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावन्त मेवैन मेतच्चिनो-त्यष्टाविष्टकाः पञ्च कृत्वः सादयति, तत्त्रयोदश, त्रयोदश मासाः संव्वत्सरस्त्रयोदशाग्नेश्चितिपुरी-षाणि यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति ॥ ३२ ॥

अथ लोकम्पृणा मुपदधाति। तस्या उपरि बन्धुस्तिस्रः पूर्व्वास्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्त मेवैन मेतच्चिनोति, दशोत्तरास्तासा मुपरि बन्धुर्द्वे वाग्रेऽथ दशायैका मेवᳬं हि चितिं चि-

* 'देवत्रा'—इति ग, घ।

न्वन्ति तास्त्रयोदश सम्पद्यन्ते तस्योक्तो बन्धुः ॥ ३३ ॥

ता उभय्य एकविꣳशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चऽर्त्तवस्त्रय इमे लोका असावादित्य एकविꣳशोऽमुं तदादित्य मस्मिन्नग्नौ प्रतिष्ठापयति * ॥ ३४ ॥

एकविꣳशतिर्वेव परिश्रितः । द्वादश मासाः पञ्चऽर्त्तवस्त्रय इमे लोका अय मग्निरमुतोऽध्येकविꣳश इमं तदग्नि ममुष्मिन्नादित्ये प्रतिष्ठापयति तस्मदेता एव मुपदधात्येतावेवैतदन्योऽन्यस्मिन् प्रतिष्ठापयति तावेतावन्योऽन्यस्मिन् प्रतिष्ठितौ तौ वा ऽएतावत्र द्वावेकविꣳशौ सम्पादयत्यत्र ह्येवेमौ तदोभौ भवत आहवनीयश्च गार्हपत्यश्च ॥ ३५ ॥

अथ पुरीषं निवपति । तस्योपरि बन्धुस्तच्चात्वालवेलाया आहरत्यग्निरेष यच्चात्वालस्तथो हास्यैतदाग्नेय मेव भवति सा समम्बिला स्यात् तस्योक्तो बन्धुः ॥ ३६ ॥

---

* 'प्रतिस्ठापयति'—इति क ।

व्याममात्री भवति। व्याममात्रो वै पुरुषः, पुरुषः प्रजापतिः प्रजापतिरग्निरात्मसम्मितां तद्यो-निं करोति परिमण्डला भवति, परिमण्डला हि योनिरथो ऽअयं वै लोको गार्हपत्यः परि-मण्डल उ वा ऽअयं लोकः * ॥ ३७ ॥

अथैनौ सन्निवपति। सञ्ज्ञा मेवाभ्या मेतत् करोति समितꣳ सङ्कल्पेथाꣳ सं वां मनाꣳसि सं व्रताग्ने त्वं पुरीष्यो भवतं नः समनसाविति शमयत्येवैनावेतदहिꣳसायै यथा नान्योऽन्यꣳ हिꣳ-स्याताम् ॥ ३८ ॥

चतुर्भिः सन्निवपति। तद्ये चतुष्पदाः पशव-स्तैरेवाभ्या मेतत् सञ्ज्ञां करोत्यथो ऽअन्नं वै पशवो-ऽन्नेनैवाभ्या मेतत् सञ्ज्ञां करोति ॥ ३९ ॥

तां न रिक्ता मवेक्षेत नेद्रिक्ता मवेक्षा ऽइति यद्रिक्ता मवेक्षेत ग्रसेत हैनम् ॥ ४० ॥

अथास्याꣳ सिकता आवपति। अग्नेरेतद्-वैश्वानरस्य रेतो यत् सिकता अग्नि मेवास्या मेतद्

* 'लोकः'—इति ग, घ।

वैश्वानरꣳ रेतो भूतꣳ सिञ्चति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥ ४१ ॥

अथैनां विमुञ्चति। अप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यत ऽएतद्वा ऽएतद्युक्ता रेतोऽभार्षीदेत मग्नि त मजीजनद्यथापरं धत्ते योषा वा ऽउखा तस्माद्यदा योषा पूर्वꣳ रेतः प्रजनयत्यथापरं धत्ते ॥ ४२ ॥

मातेव पुत्रं पृथिवी पुरीष्य मिति। मातेव पुत्रं पृथिवी पशव्य मित्येतदग्निꣳ स्वे योनाव-भारुखेत्यग्निꣳ स्वे योनावभार्षीदुखेत्येतत्तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा विमुञ्चत्वित्यृतवो वै विश्वे देवास्तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा विमुञ्चति, ता मुत्तरतो ऽग्नेर्निदधात्यरत्निमात्रे तस्योक्तो बन्धुः ॥ ४३ ॥

अथास्यां पय आनयति। एतद्वा ऽएतद्रेतो धत्तेऽथ पयो धत्ते योषा वा ऽउखा तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्तेऽधराः सिकता

भवन्त्युत्तरं पयोऽधरꣳ हि रेत उत्तरं पयस्तन्मध्य ऽआनयति यथा तत् प्रति पुरुषशीर्षमुपदध्यात् ॥ ४४ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥
उखासम्भरणाद्यं तु भस्मावहरणान्तकम् ।
चित्यस्याग्नेर्बाह्य मङ्गं प्रोक्तं षष्ठेऽथ सप्तमे ॥
इष्टकाचयनात् पूर्व मग्निस्थानस्य संस्क्रिया ।
कर्त्तव्या या समासेन सेह विस्पष्ट मीर्यते ॥

"अग्निं चिनुते"–इत्यनारभ्य विहितस्य अग्निचयनस्य * "अथातोऽग्नि मग्निष्टोमेनानुयजति"–इत्यादिवाक्येन † सोमयागशेषत्वावगतेः साग्निकस्य सम्बन्धिनां गार्हपत्यादिधिष्ण्यानां सर्वेषामेव चयनम्; संस्कार्यत्वात् ‡ तत्र धिष्ण्येषु गार्हपत्याख्यस्य धिष्ण्यस्यप्राथम्यात् तत्र प्रथमं चयनं विधित्सुस्ततः प्राच्यान् भूसंस्कारान् विधास्यन् तत्स्थानस्य समन्तकं व्युदूहनं विधत्ते— "गार्हपत्यं चेस्यन्निति । गृहपतिना संयुक्तोऽग्निः

* तै० सं० ५. ५. २, ३ अनुवाकौ द्रष्टव्यौ ।
† मी० न्या० २. ३. १० अधिकरणं द्रष्टव्यम् ।
‡ 'संस्कर्त्तव्यत्वात्'—इति च दृष्टो वेवरेण ।

गार्हपत्यः ; "गृहपतिना संयुक्ते ञ्यः"—इति * पाणिनिस्मृतेः। इह तु तस्याग्नेः आधारभूतो भूप्रदेशः। आधाराधेययोरभेदोपचारेण आधेयवाचिना शब्देनोच्यते संस्कर्त्तव्यत्वप्रतिपत्तये। अय मर्थः। यस्मादेतत् स्थानं गार्हपत्यस्याग्नेः अधिकरणम्, अतश्च चयनेन संस्कर्तव्य मित्यर्थः। संस्कारश्चात्र प्राधान्यद्योतिन्या द्वितीयया "व्रीहीन् प्रोक्षति"—इत्यादाविव प्रतिपाद्यते। चेष्यन्निति हेतौ शतृप्रत्ययः। "लक्षणहेत्वोः क्रियायाः" —इति †। यतोऽस्मिन् स्थाने चयनं कर्त्तव्यम्, अतो हेतोरेतत् स्थानं पलाशवृक्षस्य शाखया "अपेत"—इति वक्ष्यमाणेन मन्त्रेण ‡ 'व्युदूहति' लोष्टतृणादिकसम्मार्जनेनापसारयतीत्यर्थः § ॥

व्युदूहनस्य प्रयोजन माह— "अवस्यति हैतदिति। गार्हपत्यस्याऽग्नेर्यत् स्थानं चयने संस्करोति मयात्र सोमेन यष्टव्य मिति, 'तत्' तेन व्युदूहनेन 'अवस्यति' निश्चिनोत्येव। यद्वा, गार्हपत्यस्य यच्चयनं तदेव देवयजनाध्यवसानम्। तथाच 'ये केचित्' 'अग्निचितः' अग्निञ्चितवन्तो यजमानाः 'ते' 'अस्या मेव' पृथिव्या मेव 'अवसिताः' अवसानं प्राप्तास्तत्रैव प्रवर्त्तन्ते, 'तत्' तथा सति पलाशशाखया 'यत्' स्थानं 'व्युदूहति'—इति यत्. 'तत्' तेन 'अवसितानेव' तत्र स्थितान् प्राक्तनान् यजमानान् 'व्युदूहति' विविधं निरस्यति ‖ ॥

---

* पा० सू० ४. ४. ६।  † पा० सू० ३. २. १२६।

‡ अनुपद मेव द्वितीया कण्डी द्रष्टव्या।

§ का० श्रौ० सू० १७. १. ३।

‖ "व्युदूहति। गार्हपत्यस्थाने पतितं तृणादि शाखया बहिर्निस्सारयति"—इति कर्कः (का० श्रौ० सू० १७. १. ३.)।

व्युदूहनं कुर्वतो यजमानस्याभिप्राय माह— "नेदिति। अग्निचयन मनुष्ठाय तत्रैवावस्थितान् यजमानान् अत्रैव 'नेत् अध्यवस्यानि' * तेषा मुपरि अध्यवसान मवस्थानं नैव करवाणि † 'इति' अनेनाभिप्रायेणेत्यर्थः ॥ १ ॥

तस्मिन् व्युदूहने प्रतीकग्रहणेन मन्त्रं विधत्ते— "अपेतेति ‡। अत्र चापेतवीतेतिवाक्यद्वयस्यार्थ माह—"अप चैवेतेति। हे यज्ञविरोधिनो जनाः! अस्मात् स्थानात् 'अपेत' अपगच्छत, अपगमनसमयेऽपि 'वीत' विविधं गच्छत। अनयोरपगमन-विगमनयोः समुच्चयो विवक्षित इत्यमु मर्थं द्योतयितुं चकारयोः प्रयोगः। 'वि च सर्पतात'-इत्येतदनूद्य व्याचष्टे— "व्यु चेति। 'ये तु' प्राणिनः उदरेणैव सर्पन्ति गच्छन्ति, तान् सर्पसरी-सृपादीन् प्राणिनः प्रति अस्मात् स्थानात् अपगमन मनेन प्रार्थ्यते इत्यर्थः ॥

तथा च मन्त्रभागस्याय मर्थः— हे उदरेणैव सर्पणशीलाः पन्नगादयः! 'अतः' अस्मादग्निचयनस्थानाद् 'विसर्पत' विविधं गच्छतेति। द्वितीयपाद मनूद्य व्याचष्टे—"येऽत्र स्थेति। पुरा अतीतकाले भवाः 'पुराणाः'। "सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यः"-इति § पुराशब्दादव्ययात् ट्यु-प्रत्ययः, "पुराणप्रोक्तेषु"-इति ‖ निपातनात् तुडभावः, तथा च सनातना इत्यर्थो भवति। नूतना इत्यस्यार्थं

* 'अध्यवस्यामि' ङ, च, ज।

† 'करिष्यामि' ङ, च, ज।

‡ वा० सं० १२. ४५।

§ पा० सू० ४. ३. २३।

‖ पा० सू० ४. ३. १०५।

माह— "अधुनातना इति। 'अधुना' अस्मिन् वर्त्तमान-काले भवाः। तदयं मन्त्रभागस्यार्थः,— 'अत्र' अस्मिन् स्थाने ये पुराणाः सन्तः स्थ, ये च नूतना अधुनातनाः स्थ, ते सर्वे यूय मपेतेति ॥ २ ॥

तृतीयपाद मनूद्य व्याचष्टे— "अदाद्यम इति। अवस्यति अस्मिन्निति 'अवसानं' स्थानम्, 'पृथिव्याः' सम्बन्धि यत्, तत् 'यमः' अस्मभ्यम् दत्तवान्। "यमो ह वा इत्यादि। 'अस्याः' पृथिव्याः संबन्धिनः 'अवसानस्य' स्थानस्य यमः खलु 'ईष्टे', अतः स एव अस्मै यजमानाय 'अस्याः' पृथिव्याः 'अवसानं' स्थानं 'ददाति' ॥ ३ ॥

चतुर्थपाद मनूद्य व्याचष्टे— "अक्रन्निति। 'पितरः' पितृ-देवताः 'यस्मै' यजमानाय अग्निचयनार्थम् 'इमं लोकं' स्थानम् 'अक्रन्' अकुर्वत। "क्षत्रं वा इत्यादि। क्षत्रियजातिर्हि यमः, पितरस्तु तस्य 'विशः' प्रजाः। "यमः पितॄणाꣳ राजा"–इति हि श्रुतिः *। "यस्मा उ वा इति। लोके हि 'क्षत्रियः' राजा 'विशा' स्वकीयया प्रजया 'संविदानः' सञ्जानानः, ऐकमत्यं प्राप्तः सन् 'अस्यां' पृथिव्यां यस्मै पुरुषाय अवसानं 'ददाति', तस्य 'तत्' 'सुदत्तं' शोभनदत्तं भवति। यथायं दृष्टान्तः, तथैव खलु 'अस्मै' यजमानाय 'क्षत्रियः' यमोऽपि पितृरूपया स्वकीयया 'विशा' सञ्जानानः सन् 'अस्मै' यजमानाय 'अस्यां' पृथिव्याम् 'अवसानं' स्थानं 'ददाति' ॥ ४ ॥

तस्मिन् व्युदूहने पलाशशाखायाः करणत्वं यद् विहि-

---

* "यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय"— इति तै० सं० ५. १. ८. ४; ऐ० ब्रा० ८. २. ३. १ इत्याद्यपि द्रष्टव्यम्।

तम् *, तदनूद्य स्तौति— "पलाशशाखयेति। वृक्षेषु मध्ये पलाशवृक्षो 'ब्रह्म' ब्राह्मणजातिः। यद्वा, सोमाहरणसमये भूमौ पतितस्य पर्णस्य पलाशवृक्षरूपेणोत्पत्तेः † गायत्रीसम्बन्धात् पलाशवृक्षो गायत्रीमन्त्रात्मकः। तथा च तेनैव 'ब्रह्मणा' 'तत्' तत्र 'अवसितान्' अवसाय स्थितान् जनान् अस्मात् स्थानात् 'व्युदूहति' उच्चाटयति। मन्त्रकरणत्व मनूद्य स्तौति— "मन्त्रेणेति। "ब्रह्म वा इति। यद् ब्रह्म विवक्ति हि मन्त्रः, तथा च मन्त्रेण क्रियमाणं व्युदूहनं ब्रह्मणैव कृतं भवतीत्यर्थः।

तस्याः पलाशशाखाया निरसनं विधत्ते— "ता मुदीचीमिति ‡। 'उदिचीम्' उदगग्राम्, उदीचीं दिशं वा प्रति 'ताम्' पलाशशाखाम् 'उदस्यति' उत्क्षिपति, परित्यजतीत्यर्थः॥ ५॥

सम्मार्जनानन्तर मूषाणां निवपनं विधत्ते— "अथोषानिति §। क्षारमृत्तिका ऊषाः। पृथिव्याः पशुसमृद्धिहेतुत्वेनैतत् प्रशंसति— "अयं वै लोक इति। ऊषरदेशस्य पशुभिरुपजीव्यत्वादूषाणां पशुत्वव्यपदेश इति। "तस्मादिम इति। यस्मादूषाणां निवपनेन पशवोऽस्मिन् लोके स्थापिताः, तस्मादेव कारणात् इदानी मपि 'इमे' 'पशवः' गवाद्याः 'अस्मिन् लोके' समृद्धा उपलभ्यन्ते॥ ६॥

---

* प्रथमा कण्डी द्रष्टव्या (१, १६ पृ०)।

† शत० ब्रा० १. ५. ४ द्रष्टव्यम्।

‡ का० श्रौ० सू० १७. १. ४क।

§ का० श्रौ० सू० १७. १. ४ख।

ऊषनिवपनं प्रकारान्तरेण स्तोतु मनुवदति— "यद्वेवेति। ऊषाणा मुल्बरूपत्व माख्यायिकया प्रतिपादयन् सञ्ज्ञानहेतुता माह— "प्रजापतिः प्रजा इति। "ता नानोल्बा इति। नानाविधं परस्परं विभिन्न मुल्बं गर्भवेष्टनं यासान्तास्तथोक्ताः, ततो भिन्नजातीयत्वात् 'ताः' प्रजाः परस्परं 'न तं समजानत' समानज्ञानाः नाभववन्। 'सः' च प्रजापतिः 'अकामयत' इमाः प्रजाः परस्परं 'सञ्जानीरन्निति'। एवं कामयित्वा भिन्नोल्बजनितत्वं दोष मालोच्य 'ताः' प्रजाः 'समानोल्बाः' समान मेक मेवोल्बं यासां तथाविधाः 'अकरोत्'। किं तत् समान मुल्ब मिति, तदाह— "तासा मूषानिति। उत्पद्यमानानां प्रजाना मुल्बत्वेनोषान् कृतवानित्यर्थः। तथा च एकोल्बजनितत्वेन समानजातीयाः 'ताः' सर्वाः प्रजाः 'समजानत' ऐकमत्यं प्राप्ता आसन्। यस्मादेवं पुरावृत्तम्, 'तस्माद्' इदानी मपि समानोल्बाना मेकमातृकाणां प्रजानां सम्मतिर्दृश्यत इत्यर्थः। "देवैरित्यादि। देवैः सह समानजन्मा भवामीत्यनेनाभिप्रायेण हि 'यः' यजमानो 'यजते' 'तत्' तथा सति उल्बसंस्तुताना मूषाणां निवपनेन तैरेव 'देवैः' 'समानोल्बः' समानजन्मा 'भवति' इत्यर्थः ॥ ७ ॥

तस्मिन् निवपने मन्त्रं विधाय तदीयपदानि व्याचष्टे— "सञ्ज्ञान मिति *। करणे ल्युडित्याह †— "समजानतेति। 'हि' यस्माद् विप्रतिपन्नाः प्रजाः 'एतेन' ऊषरूपेणोल्बेन 'समजानत' समानज्ञाना अभवन्, तस्मात् हे ऊष! त्वम् "सञ्ज्ञान

* वा० सं० १२. ४६. १।

† पा० सू० ३. ३. ११७।

मसीतिमन्त्रेण प्रतिपाद्यत इत्यर्थः। "पशवः कामधरण मिति। कामाः ध्रियन्ते धीयन्ते अनेन गोरूपत्वेन स्तुतेनोषेणेति व्युत्पत्त्या मन्त्रगतकामधरणशब्देन पशुविषयस्य कामस्य धारणं प्रतिपाद्यत इत्यर्थः। "मयि त इत्यादि। हे ऊष! यतः त्वं कामधरण मसि, अतः 'ते' तव सम्बन्धि पशुरूपं 'कामधरणं' कामप्रापणम्। "मयि भूयादितिमन्त्रवाक्यार्थस्य पर्यवसान माह— "मयि ते पशव इति। 'ते' तव सम्बन्धिनः 'पशवः' 'मयि भूयासुः' इत्येतत् अत्र प्रतिपाद्य मित्यर्थः। न्युप्तैरूषैः प्रच्छादनं विधत्ते— "तैरिति *। 'गार्हपत्यं' गार्हपत्याग्निस्थानम्। तत् प्रच्छादनं प्रशंसति— "योनिर्वा इति। गार्हपत्याग्निसम्बन्धिनी या 'चितिः', सा 'योनिर्वै' सर्वोत्पत्तिकारणम्। गार्हपत्याग्नेराहवनीयाग्न्युत्पत्तिहेतुत्वात् तदीयचयनस्यापि उत्पत्तिहेतुत्वात् योनित्वेन स्तुतिः। "उल्ब मूषा इति। "तासा मूषानुल्ब मकरोत्"–इत्याम्नातम् †। 'तत्' तेन ऊषैः प्रच्छादनेन 'सर्वां' कृत्स्ना मेव 'योनिम्' आहवनीयाद्युत्पत्तये 'उल्बेन' प्रच्छादितवान् भवतीत्यर्थः॥ ८॥

सिकतानां निवपनं विधत्ते— "अथेति। ऊषवत् 'निवपति' निक्षिपति ‡। पृथिव्याः दाहराहित्यहेतुत्वेनैतत् स्तौति— "अग्नेरेतदिति। 'वैश्वानरस्य' विश्वनरहितस्य 'अग्नेः' 'एतद्' भस्म 'यत् सिकताः'। 'वैश्वानरं' विश्वेषु नरेषु अवस्थितं

---

* का० श्रौ० सू० १७. १. ५।

† एतत्पूर्वस्या मेव कण्डिकायां द्रष्टव्यम् ( ३ पृ० ७ प० )।

‡ का० श्रौ० सू० १७. १. ६। 'सिकताभिर्मण्डलं छादयति'— इति तत्र वृत्तिः।

हिरण्यगर्भात्मकं 'अग्नि' खल्वसौ यजमानं 'चेष्यन्' भवति यथा च चीयमानो वैश्वानरोऽग्निः पृथिवीं न दहेत् तथा च सिकतानां निवपनं पृथिव्याः 'अनतिदाहाय' अति क्रम्य अतिशयितो वा दाहोऽतिदाहः *, तद्राहित्याय भवति न खल्वग्निः स्वकीयं भस्मातीत्य दहति, किन्तु तेनैव छा सन् दाहसमर्थो भवतीत्यर्थः ॥ ९ ॥

एतदेवानूद्य प्रकारान्तरेण स्तौति— "यद्वेवेति । "सिका इति। 'यत् एतद्' 'अग्नेः' वैश्वानरस्य 'रेतः'; वर्णसादृश्यात् । " वा अरेतस्कादिति। 'न' खलु 'अरेतस्कात्' निर्वीर्यात् पुरुषात् मपीषदपि 'विक्रियते' उत्पद्यते †, अतश्चेष्यमाणोऽग्निः 'रेतसि 'अधि' उपरि चितः सन् 'विक्रियते' नानाविधफलसाध यागहेतुत्वेन विकृतो भवेत् 'इति' अनेनाभिप्रायेण सिकता निवपनं कर्त्तव्य मित्यर्थः ॥ १० ॥

तत्र मन्त्रं विदधाति— "अग्नेर्भस्मेति ‡ । "यातया वा इति। 'अग्नेर्भस्म' 'यातयाम' गतसारम्, रेतोरूपा 'सिकताः' 'अयातयाम्न्यः' अगतसाराः; तथा चैतेन सिक निवपनेन 'अयातयामम्' अगतसारम्, सारवदेव 'एतत्' चय 'करोति' इत्यर्थः ॥

सिकताभिः प्रच्छादनं विधत्ते—"ताभिरिति § । यतो रेत संस्तुताः सिकताः, तस्मात् तासां गार्हपत्यायतने सर्वत्र प्रक्षेप

---

* '०ऽतिपाकः'—इति ङ, च ।

† 'उत्पाद्यते'—इति ज ।

‡ वा० सं० १२. ४६. २ ।

§ का० श्रौ० सू० १७. १. ७ ।

सर्वस्या मेव योनौ प्रजोत्पत्तिहेतुभूतं 'रेत एव दधाति' सिक्तवान् भवति ॥ ११ ॥

शर्कराभिः परिश्रयणं विधत्ते— "अथैन मिति । 'एनं' गार्हपत्यप्रदेशं परिश्रयन्त्येभिरिति 'परिश्रितः' शर्करापर-पर्यायाः शूल्मपाषाणाः, तैः 'परिश्रयति' परितो वेष्टयति * । तत् परिश्रयणं प्रशंसति— "योनिर्वा इति । योनिस्थानीयाः । इद मेव' सिकतारूपं 'सिक्तं रेतः' 'एतत्' एतया परि-श्रिद्रूपया 'योन्या' 'परिगृह्णाति' परितो धारयति, यथा न विपद्यते । यस्मादेवं वैदिके कर्मणि, 'तस्मात्' एव कारणात् यो-षित्सु गर्भाशये 'सिक्तं रेतः' 'योन्या परिगृह्यते' परितो धार्यते । एतदुक्तं भवति,— गार्हपत्यचितिसकाशादेतदुत्पाद्यते आहव-नीयचितिः; तदुत्पत्तावत्र न्युप्ता ऊषा उल्बं सिकता रेतः परि-श्रितो योनिः; अतः परिश्रयणान्तैः संस्कारैः आहवनीयचितिः गर्भावस्था प्रतिपद्यत इति ॥ १२ ॥

एतदेव परिश्रयण मनूद्य प्रकारान्तरेण स्तौति— "यद्दे-नं मिति । "अयं वै लोक इति । 'अयं' भूलोकात्मकः खलु 'गार्हपत्यः' अग्निः; तद्वाचिन्या भूरितिव्याहृत्या आ-हितत्वात् । "आपः परिश्रित इति । परिश्रयणार्थाः शर्कराः 'आपः' उदकात्मिकाः; शर्करायुक्ते हि भूप्रदेशे खननादाप उपलभ्यन्ते । तथाच गार्हपत्यस्य परिश्रिद्भिः परिश्रयणे सति 'इमम्' एव भूलोकम् 'अद्भिः' 'परितनोति' परितो वेष्टयति । केनोपायेनाद्भिः परिवेष्टन मिति तदाह— "समुद्रे-

* 'परिश्रयन्ति, परितो वेष्टयन्ति'—इति ज ।

णेति। "तस्मादिम मिति। यस्मात् परिश्रिद्भिः गार्हपत्य परिश्रयणं भूलोकस्य समुद्रेणावरणकारणम्, 'तस्मात्' 'इमं लोकं' 'सर्वतः' सर्वासु दिक्षु 'समुद्रः' 'पर्येति' परितो व्याप्नोति। परिश्रयणस्य प्रादक्षिण्यं विधाय स्तौति— "दक्षिणावृदिति। प्रदक्षिणम् 'आवृत्' आवर्तनं यथा भवति तथा परिश्रयेदित्यर्थः 'तस्मात्' कारणभूते परिश्रयणे दक्षिणावृन्निदर्शनात् समुद्रोऽ 'इमं लोकं' 'दक्षिणावृत्' प्रदक्षिणावर्त्तनेन 'पर्येति' परितो गच्छति। खाते देशे परिश्रयणं विधाय स्तौति— "खाते नेति। गार्हपत्यायतनस्य परितः खातेन प्रदेशेन परिश्रि परिश्रयेत् ॥ १३ ॥

तस्मिन् परिश्रयणे मन्त्रं विधाय व्याचष्टे— "चितः स्थेति * 'हि' यस्मात् 'एनाः' शर्कराः 'चिनोति' स्थापयति, तस्मात् शर्कराः! यूयं 'चितः स्थ' चीयमाना भवथेति समवेतार्थो मन्त्र भागः। "परि ह्येना इति। यस्मादेताः परिश्रितश्चिनोति तस्मात् 'परिचितः स्थ' परितश्चीयमाना भवथेति ॥

"ऊर्ध्वा उददधदिति। परिश्रितः ऊर्ध्वमुखा अवस्थापय "ऊर्ध्वचितः श्रयध्व मिति' † मन्त्रभागं ब्रूयादित्यर्थः। तदेत सूचितं कात्यायनेन— "परिश्रिद्भिः परिश्रयति पूर्ववदेकवि शत्या चितः स्थेति ‡।

"समुद्रो विजत इति। अब्रूपाणां परिश्रिता मूर्ध्वमुख त्वात् तत्समुदायरूपः समुद्रोऽपि ऊर्ध्व एव विजते। "ओ विज

---

* वा० सं० १२. ४६. ३ क।
† वा० सं० १२. ४६. ३ ख।
‡ का० श्रौ० सू० १७. १. ७।

भयचलनयोः" * । कल्लोलैरूर्द्ध्वं चलति, समुद्र इत्यर्थः; न तु तिर्यक् कृत्स्नां भूमि माप्नोति † ।

तिर्यगुपधाने दोष माह— "अथ यत् तिरश्चीरिति । 'तिरश्चीः' तिर्यगञ्चनाः । "सकृदेवेद मिति । युगपदेव 'इदं सर्वं' जगत् 'समुद्रो निर्मृज्यात्' ‡ निःशेषेण प्रक्षालयेत्, सर्व्वं समुद्रे प्रविलीयेत § इत्यर्थः । सादनं सूददोहसाधिवदनञ्च इष्टकाधर्मतया प्रसक्तम्, अत्र निषेधति— "न सादयतीति । उपधानकाले मन्त्रेणोपधाय ततस्तया देवतयेत्युपहितस्य सादनम्; "ता अस्य सूददोहस इति मन्त्रः ‖ सूददोहाः, तेनाधिवदन मुपरिष्टाद् वदनम्, सर्वेष्टकासाधरणो धर्मः ¶ ; तदुभयं परिश्रिदुपधाने न कर्त्तव्यम् । तत्र हेतुः— 'असन्ना ह्यापः' क्वचित् क्वचित् सीदन्ति ; प्रवहणशीलत्वादित्यर्थः ॥ १४ ॥

सूददोहसो निषेध मुपपादयति— "अस्थीनि वा इति । अस्थ्यात्मिका हि 'परिश्रितः' शर्कराः ; तस्मादस्थ्यात् । "अस्य सूदहसः"-इति सूददोहः-शब्दयुक्तो मन्त्रः 'सूददोहाः' ; स च प्राणात्मकः खलु । सूदं शोभन मुदकम् दोग्धि, येन सिक्तं सत् रसं न शुष्यति ; यस्मिन्नङ्गे प्राणः सञ्जातो नास्ति, तत् काष्ठवत्

* तु॰ धा॰ ६ धा॰ ।

† 'ऊर्द्ध्वं एव विजते व्याप्नोति', न तु कृत्स्नां भूमि माप्नोति । विजति व्याप्तिकर्म्मा"—इति च, ज ।

‡ 'निर्म्मृज्यात्'—इति मूलपाठः ५ पृ० ११ पं० द्रष्टव्यम् ।

§ 'स च समुद्रे प्रति लीयेत'—इति ज ।

‖ वा० सं० १२. ५५ ।

¶ 'मन्त्रः'—इति ज ।

शुष्क मेव भवति ; अतः प्राण एव सूददोहाः। तथा चास्थि-संस्तुतासु परिश्रित्सु नासो कर्त्तव्यः ; न खल्वस्थिषु प्राणोऽस्ति, नाड़ीष्वेव हि तस्य सञ्चार इत्यर्थः। "चितः स्थेत्येकेनैव यजुषा * बह्ननां परिश्रितां स्थापन मुपपादयति—"एकेनेति। 'उपदधाति'-चोदितत्वात् परिश्रिता मिष्टकात्वम्। अत एवाहापस्तम्बः—"स्रुची सप्त स्वयमातृण्णाः शर्करा हिरण्येष्टकाः पञ्च घृतेष्टका दूर्वास्तम्बः कूर्म उलूखलं मुसलं शूर्प मश्मानः पशुशिराᳬंसि सर्पशिरश्चामृन्मयोरिष्टकाः"-इति †। "एकᳬ ह्येतदिति। आप इति यत्, तदेक मेव हि रूपम्, एकरूपा एव हि लक्ष्यन्ते, अतः 'एकेन यजुषा' परिश्रिद्रूपाणा मपा मुपधानं युक्त मिति।

"बह्व्यो हीति। 'हि' यस्मात् 'आपः' 'बह्वः' बहुविधाः, तस्मात् तदात्मिकाः 'परिश्रितः' अपि 'बह्व्यो भवन्ति' बहुशब्दाद् "वोतो गुणवचनात्"— "बह्वादिभ्यश्च"-इति ‡ ङीप्॥ १५॥

परिश्रिद्रूपसिकतानां बाह्याभ्यन्तरभावं विधाय स्तौति—"तद्वै योनिरित्यादिना। 'तद्वै' तत्र ऊषसिकतापरिश्रित्सु मध्ये 'परिश्रितः' शर्कराः 'योनिः' गर्भनिर्गमणमार्गः। उल्ब-संस्तुता ऊषाः, रेतः-संस्तुताः सिकताः, अतो योनि-संस्तुतानां परिश्रिता मुल्बात्मकेभ्यो बाह्यत्वम्, ऊषाणाञ्च तत आन्तरत्व मुपपन्न मित्यर्थः। "बाह्य ऊषा भवन्तीत्यादि। उल्बसंस्तुतत्वादूषाणां बाह्यदेशवर्त्तित्वम्, रेतःसंस्तुतत्वात् सिकताना मभ्यन्तरत्वं

* वा० सं० १२. ४६. ३।

† आप श्रौ० सू० १६. १३. १०।

‡ पा० सू० ४. १. ४४, ४५।

युक्त मित्यर्थः। "बाह्यं हीति। लोकप्रसिद्धयोपपादनम्। "एतेभ्यो वा इति। योन्युल्बरेतोभ्यः खलु जायमानो जन्तुर्जायते लोके। तथा च 'एनम्' अग्निं 'तेभ्य एव' योन्यादिभ्यः इदानीं 'जनयति' ॥ १६ ॥

इत्थं संस्कृतगार्हपत्यायतनस्येष्टकाभिश्चयनं विधत्ते— "अथैन मिति। 'अथ' अनन्तरम्, सिकतात्मना सिक्तस्य रेतसः यस्मात् कार्यरूपेण परिणामोऽपेक्षितः, 'अतः' कारणात् 'एनं' व्युहनादिभिः संस्कृतं गार्हपत्यदेश मिष्टकाभिः 'चिनोति'। 'इद मेव' सिकतारूपेण 'सिक्तं रेतः' 'एतत्' एतेन चयनेन 'विकरोति' विकृत मवयवयुक्तं करोति। "तस्मादिति लौकिकोदाहरणम् ॥ १७ ॥

विहितस्य चयनस्य निष्पत्तये इष्टकाना मुपधानप्रकारं विधत्ते— "स चतस्र इति। गार्हपत्यायतनस्य मध्ये प्रथमं 'चतस्रः' 'प्राचीः' प्रागायताः इष्टकाः उपदध्यात्। ततः 'पश्चात्' पश्चाद्भागे 'तिरश्च्यौ' तिर्यगायते 'द्वे' इष्टके उपदध्यात्। तथा चतसृणां 'पुरस्तात्' अपि द्वे तिरश्च्यौ उपदध्यात्। एतासु त्रिविधास्विष्टकासु अवयवक्लृप्तिं करोति— "तद्याश्चतस्र * इत्यादिना। "स आत्मेति। मध्यदेह इत्यर्थः। "चतुर्विधो ह्यय मिति। त्वगसृङ्मांसास्थिभेदेन, मनोबुद्ध्यहङ्कारचित्तैर्वा, जाग्रदाद्यवस्थाचतुष्टयेन वा आत्मनश्चातुर्विध्यम्। सक्थ्याविति। सक्थिः श्रोणिः, तेन च पादौ लक्ष्यते; पश्चादुपहिते इष्टके पादावित्यर्थः। पादपाणियुक्तस्यास्य शरीरस्य

* 'तद्यत्ताश्चतस्र'—इति सर्वमूलपुस्तकसम्मतः पाठः; भाष्ये तु सर्वत्रैव 'तद्याश्चतस्र'—इति।

किन्तर्हि शिर इत्यत आह— "यत्र वा इति। 'यत्र' खलु 'आत्मा' मध्यदेहो वर्त्तते, तत्रैव 'शिरः' आत्मन्येवान्तर्भूत मिति अतो न पृथग् वक्तव्य मित्यर्थः ॥ १८ ॥

"तं वा इत्यादि। 'अत्र' अस्मिन् गार्हपत्यस्थाने 'तम्' एव 'एतम्' अग्निं पादाभ्यां पुच्छेन च युक्त मेव 'विकरोति'; मध्ये चतस्रः, उभयपार्श्वयोः द्वे द्वे, इत्येव मुपधीयमानत्वात्। "यादृग् वा इति। 'योनौ' गर्भाशये अवस्थितं 'रेतः' गर्भः, यादृशाकारं 'विक्रियते' विशिष्टावयवं क्रियते, जननसमयेऽपि तादृशाकारविशिष्ट मेवापत्यं 'जायते'।

इत्थं लौकिकीं स्थिति मुक्त्वा प्रकृते योजयति— "तद्यदिति। 'तत्' तत्र 'एतम्' अग्निम् 'अत्र' गार्हपत्यायतनयोनौ 'यद्' यस्मात् 'पक्षपुच्छवन्तं विकरोति' सूक्ष्मरूपेण निर्मिमीते, 'तस्मात्' 'एषः' अग्निः 'अमुत्र' आहवनीयस्थाने 'पक्षपुच्छवान्' 'जायते' जायमान उपलभ्यत इत्यर्थः ॥ १९ ॥

"तं वा इति। "न पक्षपुच्छवन्त मिव पश्यन्तीति। सता मपि पक्षपुच्छाना मदर्शनं योन्या मनभिव्यक्तेर्वा भवति *। एत ल्लौकिकोदाहरणेनोपपादयति— "तस्मादिति †। "यथारूप मिति। विद्यमानं शिरःपादादिकं कृत्स्नं रूप मित्यर्थः। "अथैन ममुत्रेति। 'एनम्' अनभिव्यक्तरूप मग्निम् 'अमुत्र' आहवनीयस्थाने अभिव्यक्तं 'पक्षपुच्छवन्तं' यस्मात् 'पश्यन्ति', 'तस्मात्' एव कारणात् जननात् प्रागनभिव्यक्तावयवं गर्भजननात् ऊर्द्ध्वं 'यथारूपम्' अभिव्यक्तावयवं 'पश्यन्ति' इत्यर्थः ॥ २० ॥

---

*, † नैतद्द्वाक्यद्वयं जात्वन्येषु।

"स चतस्र इति । "आत्मा ह्येवाग्र इति । यस्मात् शिरसा युक्तो मध्यदेहः 'एव' 'सम्भवतः' उत्पद्यमानस्य प्राणिनः 'अग्रे' प्रथमतः 'सम्भवति अभिव्यक्तो भवति, तस्मादात्मसंस्तुता इष्टकाः पूर्व मुपदध्यादिति युक्तम् । तस्मिन्नुपधाने धर्मविशेष माह— "दक्षिणत इति । गार्हपत्यायतनस्य दक्षिणदेशे उदङ्मुख आसीनः चतसृणां मध्ये 'प्रथमाम्' इष्टकाम् 'उत्तरार्द्ध्याम्' उत्तरार्द्धे भवाम्, उत्तरभागेऽवस्थिता मुपदध्यात् । "दिक्पूर्वपदाठ्ठञ्चेति उत्तरार्द्धाद्यत् प्रत्ययः * । उत्तरार्द्ध्यायाः प्रथम मुपधाने प्रयोजन माह— "तथो हेति । तथैव खलु 'अस्य' दक्षिणतोऽवस्थितस्य अध्वर्योः 'एषः' अग्निः 'अध्यात्मम्' आत्माभिमुख मेव 'चितो भवति' ॥ २१ ॥

चतसृणा मुपधाने "अयꣳ सो ऽग्निरित्याद्याश्चत्वारो मन्त्राः †, इत्यभिप्रेत्य प्रतीक मुपादत्ते — "अयꣳ स इति । तथाच कात्यायनः— "मध्येऽर्द्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति, दक्षिणत उदङ्ङयꣳ सो ऽग्निरिति प्रत्यृच मिति ‡ ॥

तत्र प्रथमाया ऋचोऽय मर्थः §,— 'सः' चीयमानो गार्हपत्योऽग्निः 'अयं' भूलोक एव । 'यस्मिन्' शरीरभूतेऽस्मिन् भूलोके जठरमध्ये 'वावशानः' कामयमान इन्द्रः 'सुतम्' अभिषुतं 'सोमम्' तत्कारणभूता वृष्टिलक्षणाः अपः 'दधे'

* पा० सू० ४. ३. ६ ।

† वा० सं० १२. ४७—५० ।

‡ का० श्रौ० सू० १७. १. ८ । "अर्द्धबृहतीरिष्टकाः' ।

§ अयं पाठः,— "अयꣳ सो अग्निर्यस्मिन्त्सोम मिन्द्रः सुतं दधे जठरे वावशानः । सहस्रियं वाज मत्यन्न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः ॥"

अधत्त । 'सहस्रियं' सहस्रोपकारजनकं 'वाजम्' अन्नलक्षण मन्नम्
'सप्तिं' सरणशीलम्, 'अत्यं' सततगामिनम्, 'अत्यं न' अ
मिव। नेत्युपमार्थे *। 'ससवान्' सम्भक्तवान्। "वनप
सम्भक्तौ"-इत्यस्मात् † क्वसौ रूपम्। गार्हपत्यरूपेण प्रथमं चि
सन् हे 'जातवेदः' जातानां वेदितः अग्ने! 'स्तूयसे' आ
वनीयात्मना चीयमानः तद्वारणमन्त्रैः प्रतिपाद्यसे इत्यर्थः ॥

एतदर्थपरतां मन्त्रस्य प्रतिपादयति— "अयं वै लोक इत्या
दिना। "मध्यं वै जठर मिति। देहमध्यवाचिना जठरशब्दे
भूलोकस्य मध्य मत्र लक्ष्यते। "आपो वै सहस्रिय इति। उ
काराणां सहस्रेण सम्मितः 'सहस्रियः'। "सहस्रेण सम्मित
घः" ‡। तथाविधो वाजोऽन्न मन्नलक्षणं विवक्षितम् ॥ २२ ॥

द्वितीयं मन्त्रं भागशोऽनूद्य व्याचष्टे— "अग्ने यत्त इति
अस्य मन्त्रस्याय मर्थः §,— हे 'अग्ने!' 'यत्' 'ते' त्वदी
'वर्चः' आदित्यात्मकं ज्योतिः 'दिवि' वर्त्तते, तथा 'पृथिव्य
भूलोके 'यद्' वर्चः दाहपाकप्रकाशनसमर्थ मग्न्यात्मकं ज्योति
रस्ति, 'ओषधीषु' तरुगुल्माद्यासु, 'अप्सु' 'आ' आका
समुच्चये, उदकेषु जाठरवाडवरूपेण, हे 'यजत्र' यजनीयाग्ने
त्वदीयं यत् तेजोऽस्ति, 'येन' वाय्वात्मना तदीयेन रूपेण 'उ
विस्तीर्णम् 'अन्तरिक्षम्' 'आततन्थ' आतनोषि, हे अग्ने! 'त्वेष

---

* निरु० १. २. १।

† भ्वा० प० ४६४ धा०।

‡ पा० सू० ४. ४. १३५।

§ तस्यायं पाठः— "अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा
यजत्र। येनान्तरिक्ष मुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः"—इति

दीप्यमानो महानित्यर्थः । 'सः' अग्निः वाय्वादिरूपेण लोकत्रयं व्याप्य अवस्थितः, तदीयो 'भानुः' प्रकाशः 'अर्णवः' समुद्रोपमः सन्, 'नृचक्षाः' सर्वेषां नृणां द्रष्टा, प्रकाशको भवति ॥

अय मेवार्थः श्रुत्या प्रतिपाद्यते— "आदित्यो वा अस्य दिवि वर्च इत्यादिना ॥ २३ ॥

तृतीयं मन्त्रं व्याचष्टे *— "अग्ने दिव इत्यादि । हे 'अग्ने !' अस्य 'दिवः' अन्तरिक्षस्य सम्बन्धि 'अर्णं' मेघस्य मुदकं 'अच्छ' अभिलक्ष्य, धूमेन 'जिगासि' व्याप्नोषि । तथा अध्यात्मं 'ये' प्राणरूपाः 'देवान्' 'धिष्ण्याः' धियः 'इ॒ष्णन्ति' व्याप्नुवन्तो वर्त्तन्ते, तान् देवान् त्वं जाठराग्निरूपेण 'ऊचिषे' समवैषि । "उच समवाये" –इति † धातुः । तथा 'याः' 'आपः' 'रोचने' रोचमाने सूर्यलोके वर्त्तमानस्य 'सूर्यस्य' 'परस्तात्' उपरिभागे वर्त्तन्ते, 'याश्च' 'अवस्तात्' अधोभागे 'उपतिष्ठन्ते' वर्त्तन्ते, आसा माश्रयित्वं प्राप्नोषीति शेषः ॥

उक्तार्थपरतां मन्त्रस्य दर्शयति— "आपो वा अस्य दिवोऽर्णं इति । "एष धूमेनेति । भूम्यां पार्थिवरूपेणावस्थितः 'एषः' अग्निरित्यर्थः । "प्राणा वै देवा इति । दीव्यन्ति विषयप्रकाशान् जनयन्तीति 'देवाः प्राणाः' इन्द्रियाणि । "ते हि सर्वा इति । 'हि' यस्मात् 'ते' प्राणाः 'सर्वाः धियः' शब्दादिविषयाणि सर्वाणि ज्ञानानि 'इष्णन्ति' आभीक्ष्ण्येन व्याप्नुवन्ति । "इष आभीक्ष्ण्ये"–

* तस्यायं पाठः– "अग्ने दिवो अर्ण मच्छा जिगास्यच्छा देवाꣳ ऊचिषे धिष्ण्या ये । या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः"—इति ।

† दि० प० ११७ धा० ।

इति क्रैयादिको धातुः *। तस्मादेते धिष्ण्यशब्देन म विवक्षिताः । "याश्चैतं परेणेति । एतस्मात् सूर्याददूरेण परभा इत्यर्थः । "एनबन्यतरस्याम्"-इत्येनप् †, "एनपा द्वितीया"-इ द्वितीया ‡ ॥ २४ ॥

"पुरीष्यासो अग्नय इति । चतुर्थो मन्त्रः § । अस्याय मर्थः, पूरयति पयःप्रभृतिभिर्लोक मिति 'पुरीषं' पशवः, तेभ्यो हित 'पुरीष्याः'। "आज्जसेरसुक् ‖" । तथाविधाः 'अग्नयः', 'प्रावणेभि प्रवनसम्बन्धिभिः सम्भजनयुक्तैस्तैर्देवैः 'सजोषसः' समानप्रीत सन्तः अस्मदीयं 'यज्ञं' 'जुषन्ताम्' सेवन्ताम् । तदनन्तर 'अद्रुहः' द्रोहरहिताः, 'अनमीवाः' अमीवा अशनाया, त हिताः । 'मह्वीः' महतीः 'इषः' अन्नानि, अस्मभ्यं प्रयच्छ न्त्विति शेषः ॥

उक्तार्थपरतां मन्त्रस्य व्याचष्टे— "पशव्यासो अग्नय इत्ये दित्यादिना । "प्रायणरूप मिति । 'प्रावणेभिः'-इति मन्त्र-ग 'प्र'-शब्दः 'प्रायणरूपम्' प्रायणस्य प्रगमनस्य प्रारम्भस्य रूपम् गार्हपत्यचितिश्च 'अग्नेः' अग्निचयनस्य प्रायणम् प्रारम्भः अतः प्रशब्दोपेतो मन्त्रोऽत्र योग्य इत्यर्थः । अनमीवा इत्यस्या माह— "अनशनाया इति । अशनेच्छा अशनाया क्षुत्पीड़ा

---

* क्र्या० प० ५२ धा० ।

† पा० सू० ५. ३. ३५ ।

‡ पा० सू० २. ३. ३१ ।

§ तस्यायं पाठः— "पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः जुषन्तां यज्ञ मद्रुहोऽनमीवा इषो मह्वीः"—इति ।

‖ पा० सू० ७. १. ५० ।

न विद्यते सा यासां ताः 'अनशनायाः'। "अशनायोदन्यधनायाः" -इति * बुभुक्षायां क्यचि त्वाभावो निपात्यते ॥ २५ ॥

एतासा मिष्टकानां क्रमेण क्षत मुपधान मनूद्य स्तौति— "नानोपदधातीति। 'नाना' पृथगेकैकेष्टका मुपदध्यात्। तेन † 'ये' 'आत्मन्' आत्मनि स्थिताः नानाविधाः कामाः, तान् सर्वान् सङ्कीर्णं पृथगेव 'दधाति' स्थापयति। सादनसूददोहसोः सकृत्त्वं विधाय स्तौति— "सकृत् सादयतीत्यादिना ‡। तया देवतयेति यत् सादनम्, तत् चतसृणा मिष्टकानां सम्भूय सकृदेव कर्त्तव्यम्। 'तत्' तेन सकृत्त्वेन 'आत्मानम्' 'एकम्' एकाकारम्. संहतं 'करोति'। पृथक् सादनेन आत्मा विश्लिष्टः स्यात्, "ता अस्य सूददोहस इति § मन्त्रेण यदधिवदनम्, तदपि सादनस्य सकृत्त्वात् सकृदेव कर्त्तव्य मित्यर्थः। अत एव सर्वेष्टकोपधानस्याधारणधर्मत्वेन सादनसूददोहसी कात्यायनेनोक्तौ— "नित्ये सादनसूददोहसा ऽउपधानादुत्तरे तया देवतया ता अस्येत्यविशेषोपदेशात्"-इति ‖। "प्राणैनैवेन मिति। 'एनम्' आत्मानम् 'एतत्' एतेनाधिवदनेन 'सन्तनोति' संयोजयति। तस्यैव विवरणम्— "सन्दधातीति ॥ २६ ॥

पश्चिमार्द्धयोरिष्टकयोरुपधानप्रकार माह— "अथ जघनेनेति ¶। मध्येष्टकोपधानानन्तर्यं मथ शब्दार्थः। 'जघनेन परीत्य'

---

* पा० सू० ७. ४. ३४।

† 'ततः'—इति ज।

‡ का० श्रौ० सू० १७. १. ६।

§ वा० सं० १२. ५३।

‖ का० श्रौ० सू० १६. ७. १४, १५।

¶ का० श्रौ० सू० १७. १. ११ क।

गार्हपत्यस्थानस्य पश्चात् परिक्रम्य, 'उत्तरत:' उत्तरस्यां दि
दक्षिणामुख: 'आसीन:' सन् 'अपरयो:' पाश्चात्ययोरिष्टकयो
'दक्षिणां' दक्षिणभागस्था मिष्टकाम् 'अग्रे' प्रथमम् 'उपदधाति'
"इडा मग्न इति * मन्त्रेण ॥

तस्याय मर्थ: ,— हे 'अग्ने!' 'हवमानाय' हव
कुर्वते यजमानाय 'इडां' पशुं । जातावेकवचनम् † । गव
श्वादिपशून् 'साध' साधय । पशुरेव ‡ विशिष्यति— "पुरुद
मिति । दंस इति कर्मनाम §, बहुकर्महेतुभूतम्, अन्त्यलो
श्छान्दस: । 'शश्वत्तमं' शाश्वतिकतमञ्च पुत्रपौत्रादिरूपेण
विच्छेदेन सर्वदा वर्त्तमानम् ‖ । 'गोसनिं' गवादिपशून
दातारम् । 'अस्मै' यजमानाय 'साधय' सम्पादय । अपि
'न:' अस्माकं 'तनय:' पुत्र:, 'सूनु:' तत्पुत्रश्च, 'विजावा
विविधानां जनयिता स्यात्, उत्पादयिता मित्यर्थ: । जनेर्वि
पूर्वात् "अन्येभ्योऽपि दृश्यन्ते"-इति ¶ वनिप्, "विड्वनोरनुनासि
कस्यात्"-इत्यात्वम् ** । किं बहुना हे 'अग्ने!' त्वदीया स
'सुमति:' सर्वश्रेयोनिदानभूता कल्याणी बुद्धि: 'अस्मे' अस्मा
'भूतु' भवत्वित्यर्थ: ॥

---

* वा० सं० १२. ५१ ।

† पा० सू० १. २. ५८ ।

‡ 'एतदेव'—इति ज-पुस्तकादन्यत्र ।

§ निघ० २. १. ३ ।

‖ 'पुत्रपौत्रादिरूपेण सर्वदा वर्त्तमानम्'—इति ङ, च, छ ।

¶ पा० सू० ३. २. ७५ ।

** पा० सू० ६. ४. ४१ ।

एतदर्थपरत्वेन मन्त्रं व्याचष्टे— "पशवो वा इडेति। इडा खलु मनोर्दुहिता। तेनाप्सु हुतैर्घृतदधिमस्त्वामिक्षारूपैर्द्रव्यैरुत्पन्ना। एतच्च "तत्रापि पाकयज्ञेनेजे स घृतम्"-इत्यादिना प्रथमकाण्डे प्रतिपादितम् *। तथा च पशुप्रभवद्रव्येभ्य उत्पन्नत्वादिडायास्तद्वाचिनेडाशब्देन कारणभूताः पशव एवोच्यन्ते। पुरुदंसादिविशेषणेषु लिङ्गव्यत्ययश्छान्दसः। पशूनामेवेति कर्मणि षष्ठी; पशुविषयाम् 'आशिषं' प्रार्थनाम् 'अस्मै' यजमानाय अध्वर्युः 'आशास्ते'। "यजमानो वै हवमान इति। देवानाह्वयति, तेभ्यो जुहोतीति वा, हवमानशब्दो यजमानवाचीत्यर्थः। "प्रजा वै सूनुरिति। तनय-शब्देन पुत्रस्य प्रतिपादितत्वात् तत्पुत्रादिरूपाः प्रजाः सूनु-शब्देन प्रतिपाद्यन्त इत्यर्थः॥ २७॥

अथ पाश्चात्ययोरुत्तरस्या इष्टकाया उपधानं विधत्ते— "अथोत्तरामिति †। उपदधातीति शेषः। मन्त्रस्यायमर्थः ‡, — हे 'अग्ने!' 'ऋत्वियः' ऋतौ भवः, 'सनातनः' 'अयं' भूप्रदेशस्तव 'योनिः' उत्पत्तिकारणम्। 'यतः' यस्माद्योनेः 'जातः' सन् 'अरोचथाः' अदीप्यथाः, 'तं' योनिभूतं देशं 'जानन्' 'आरोह' प्राप्नुहि। 'अथ' अनन्तरम् 'नः' अस्माकं 'रयिं' धनं 'वर्द्धय'॥

मन्त्रस्यैतमर्थं प्रतिपादयति— "अयन्त इत्यादिना §।

---

* १ भा० ५२५ पृ० १५ पङ्क्तितो द्रष्टव्यम्।

† का० श्रौ० सू० १७. १. ११ क।

‡ वा० सं० १२. ५२।

§ का० श्रौ० सू० १७. १. ११ ख।

"ऋत्विय इति । मन्त्रपदस्यार्थः माह *— "ऋतव्य इति । ऋतौ भव इति विगृह्य "छन्दसि घस्"-इति † घस्प्रत्यये ऋत्विय इति रूपम्, तथा च ऋतव्य इति तस्यार्थो भवति ‡। 'सनातनः'-इति ऋतव्यपदव्याख्यानम्; ऋत्वात्मकस्य कालस्य सर्वदा विद्यमानत्वात् तत्र भवः अग्निः 'सनातनः' नित्य इत्यर्थः तया च 'जातः'-इति प्रादुर्भावमात्रं विवक्षितम्, नोत्पत्तिः "अदीप्यथा इत्येतदिति । "रुच दीप्तावभिप्रीत्याञ्चेति § रुचिधातोरनेकार्थत्वादत्र दीप्त्यर्थो विवक्षित इति भावः। "यथैव यजुरिति। यजुर्मन्त्रो यथैव प्रतिपादयति, तथैव तस्य 'बन्धुः' बन्धनीयं व्याख्यानम् ‖; स्पष्टार्थतया न पृथक् व्याख्यायत इत्यर्थः ॥ २८ ॥

एतयोः पाश्चात्ययोः इष्टकयोरुपधानसादनादीनां पृथक् कर्त्तव्यता माह— "सक्थ्यावित्यादिना। 'अस्य' अग्नेः 'सक्थ्यौ' स्रोण्यौ 'एते' इष्टके; अतः 'ते' 'नाना' पृथगुपदध्यात्। सादनसूददोहसाधिवदने अपि पृथक् कर्त्तव्ये। तत्र कारणं माह— "नाना होमि इति। 'इमे' मनुष्यसम्बन्धिन्यौ सक्थ्यौ 'हि' यस्मात् 'नाना' पृथगसंश्लिष्टे भवतः, तस्मात् तत् संस्-

---

* वा० सं० ३. १४; १२. ५२।

† पा० सू० ५. १. १०६।

‡ "ऋत्वियः। उत्पादनयोग्यः काल ऋतुरुच्यते। ऋतुः प्राप्तोऽस्येति ऋत्वियः। छन्दसि घसिति ऋतुशब्दात्तदस्य प्राप्त मित्यर्थे घस्, तस्य इयादेशः। सायम्प्रातःकाले उत्पादनयोग्यः"—इति मही०।

§ भ्वा० आ० ७४५ धा०। 'रुच दीप्तावभिप्रीतौ च'—इति तत्र पाठः।

‖ 'बन्धुः' वध्नीयं (? बन्धनीयं ?) व्याख्यातः'—इति ज-पाठः।

तयोः अष्टकयोरप्यसंश्लेषो युक्त इत्यर्थः। "द्वे भवत इति ॥

पश्चाद्भागोपधान मनूद्य स्तौति— "पश्चादिति। "पश्चाद्धीमे इति। 'हि' 'यस्मात्' 'इमे' दृश्यमाने पुरुषसम्बन्धिन्यौ सक्थ्यौ 'पश्चाद्' भागे शरीरस्यापरभागे भवतः, तस्मादनयोः पश्चादुपधानम् युक्तम्। अग्रप्रदेशेन तयोः परस्परसंसर्गं विधत्ते— "अग्राभ्या मिति। आत्मसमीपे अग्रदेशः, तत्रैते 'संसृष्टे' भवत इत्यर्थः। "एवं ह्योमे इति। लौकिकं निदर्शनम् ॥ २८ ॥

पूर्वार्द्धयोरुपधानप्रकार माह— "अथ तेनैवेति *। येन मार्गेण पाश्चात्ययोरुपधाने परिक्रमणं कृतम्, तेनैव पुनः 'दक्षिणतः' 'परीत्य' परिक्रम्य, तत्रोदङ्मुखः 'आसीनः' 'पूर्वयोः' इष्टकयोः मध्ये 'अग्रे' प्रथमम् 'उत्तरा मुपदधाति'। "चिदसीति तस्य मन्त्रः †। अनन्तरम्, 'दक्षिणाम्' उपदधाति "परिचिदसीति ‡॥

तन्मन्त्रयोरय मर्थः,— भोगांश्चिनोति सम्पादयतीति चित् §। हे इष्टके! त्वं 'चित्' चेतयमाना वागसि [ भोगांश्चिन्वानासि। या देवता त्वा मभिमन्यते ‖ ]। तया वाग्रूपया 'देवतया' 'अङ्गिरस्वत्' अङ्गिराः प्राणाः। "प्राणो हि वा अङ्गानां रसः"-इति ¶ तन्नामव्युत्पत्तेः। सोऽस्यास्तीत्यङ्गिरस्वत्। क्रिया-

---

* का० श्रौ० सू० १७. १. १२।

† वा० सं० १२. ५३. १।

‡ वा० सं० १२. ५३. २।

§ 'चीयत इति चित्। यद्वा'—इत्यादि महीधरः।

‖ बन्धनीचिह्नान्तःप्रदर्शितः पाठो ज-पुस्तकमात्रे अधिकः।

¶ शत० ब्रा० ६ का० १ प्र० २ ब्रा० २८ ख।

विशेषण मेतत् । "तसौ मत्वर्थे"-इति * भत्त्वादुत्वाभावः । ते युक्तं यथा भवति तथा वाग्देवतया युक्ता असीत्यर्थः । 'ध्रुवा स्थिरा सती 'सीद' निषण्णा भव ॥

परिचिदसीति द्वितीयो मन्त्रः । परितो भोगांश्चिन्वाना सम्प दयमानासीत्यर्थः † । 'सक्थ्यावस्यैते'-इतिवद् ‡ 'बाहू अस्यैते' इति व्याख्येयम् ॥

एतासा मिष्टकाना मुपधानस्य प्रादक्षिण्य मुपनये दर्शयन् स्तौति— "स वा इतीमा इति । 'इमाः' म उपधीयमानाश्चतस्र इष्टकाः आत्मन उत्तरार्द्ध मारभ्य दक्षि णा उपदधाति § । 'इमे' पाश्चात्ये इष्टके 'इति' प्रथ दक्षिणार्द्ध्याम्, पश्चादुत्तरार्द्ध्या मित्यनेन क्रमेणोपदधाति । तथ 'इमे' पौरस्त्ये इष्टके प्रथम मुत्तरार्द्ध्याम्, पश्चाद् दक्षिणार्द्ध्या मित्यनेन क्रमेणोपदधाति । 'तत्' तथा सति 'दक्षिणावृ प्रादक्षिण्येन वर्त्तनम् भवति खलु, 'देवत्रा' देवेषु योग मित्यर्थः ॥ ३०, ३१ ॥

अथोपहिताना मिष्टकानां सम्भूय सङ्ख्यां प्रशंसति— "अष्टा विष्टका इति । "गायत्रोऽग्निः"-इत्यष्टाक्षरपादेन गायत्री च्छन्दसा सह प्रजापतिमुखादुत्पन्नत्वादग्नेर्गायत्रत्वम् ‖ । सादन सङ्ख्या मनूद्य स्तौति— "पञ्च कृत्व इति । मध्ये उपधेयस्य

* पा० सू० १. ४. १६ ।

† 'परिचीयमाना वागसीत्यर्थः'—इत्येव ङ, च, छ ।

‡ नवमकाण्डे, तद्भाष्यञ्च द्रष्टव्यम् (१०, ३६ पृ० ) ।

§ का० श्रौ० सू० १७. १. १३ ।

‖ तै० सं० ७. १. १. ४ ।

इष्टकाचतुष्टयस्य एकं सादनम्, अन्यासां चत्वारीति पञ्च भवन्ति। "पञ्चचितिकोऽग्निरिति। पञ्च चितयः प्रस्ताराः यस्मिन् स तथोक्तः। "पञ्चर्त्तव इति। हेमन्तशिशिरयोः समासाभिप्रायेण *। "संवत्सरोऽग्निरिति। संवत्सरः प्रजापतिर्विराट्, तदात्मकश्चीयमानोऽग्निः प्रागुक्त इत्यर्थः। सङ्ख्याद्वयं सम्भूय प्रशंसति— "अष्टाविष्टका इति। "त्रयोदश मासा इति। संसर्गाहस्पति(? †)सञ्ज्ञकोऽधिमासस्त्रयोदशः; "अस्ति त्रयोदशो मास इति"–इति श्रुतेः ‡। "त्रयोदशाग्नेरिति। चित्यस्याग्नेश्चितिपुरीषाणि त्रयोदश भवन्ति। आदितश्चतस्रश्चितयः पुरीषनिवपनान्ताः, स्तोमभागान्ता पञ्चमी चितिः। तदनन्तरभाव्येकं पुरीषम्, नाकसत् प्रभृति पुरीषनिवपनान्ता षष्ठी चितिरिति द्वे, ततो विकर्णस्वयमातृण्णयोरुपधानं हिरण्यशकलैः प्रोक्षणं मग्न्यभ्याधानञ्चेति सप्तमी चितिः, सा त्रयोदशी, इत्यादिर्विभाग ऊह्यः § ॥ ३२ ॥

लोकम्पृणाख्याया इष्टकाया उपधानं विधत्ते— "अथेति। "अष्टा एव मष्टाविष्टका उपधाय, अनन्तर मवशिष्टे गार्हपत्यचितिस्थाने लोकम्पृणाख्या मिष्टका मुपदधाति; लोकं शिष्टं स्थानं पृण पूरयेति तन्मन्त्रे ‖ प्रतिपादनात्। "तस्या उपरि बन्धुरिति। 'तस्याः' लोकम्पृणायाः 'उपरि' उपरिष्टात्, अष्टम-

---

* ऐ० ब्रा० १. १. १।

† सर्वेष्वेव पुस्तकेष्वेव मेव पाठः।

‡ शत० ब्रा० प्र० ४. २. ५. ५।

§ द्वे इत्यादि ग्रन्थो ङ-पुस्तकादन्यत्र नास्ति।

‖ वा० सं० १२. ५४ द्रष्टव्यम्।

काण्डावसाने "असौ वा आदित्यो लोकम्पृणा"-इत्यादिः स्ताव वाक्यशेष आम्नास्यत इत्यर्थः *।

सकृदुच्चारितेन लोकं पृणेति मन्त्रेण तिसृणां युगपदुपधा विधत्ते— "तिस्रः पूर्वा इति। तत् प्रशंसति— "त्रिवृदग्नि रिति। "स श्रान्तस्तेपानो मृदꣳ शुष्काप मित्यादिना अ त्रिवृत्त्वम् प्रतिपादितम् †, अतोऽग्नेस्त्रिवृत्त्वसङ्ख्यायोगात् तिसृ मुपधानं युक्त मित्यर्थः॥

अथ तेनैव सकृदुच्चारितेनैव मन्त्रेण दशाना मिष्टका मुपधानं विधत्ते— "दशोत्तरा इति। उपदधातीति शेष उत्तरा उपरिभाविनीरित्यर्थः। "तासा मुपरीति। 'तास दशाना मिष्टकानाम्, यादृशी सङ्ख्या, ततस्तावकोऽर्थवा भविष्यतीत्यर्थः॥

पूर्वं त्रयोदशलोकम्पृणानां द्वेधा विभागेनोपधान मभि धाय, त्रेधा विभागपक्ष मप्याह— "द्वे वाग्रे इति। एतच्च पक्ष द्वयं सूत्रकृतापि दर्शितम्— "तिसृषु' लोकम्पृणासु मन्त्रो द स च द्वयोर्वा दशस्वेकस्यां वा"-इति ‡। द्वितीयं पक्षं लौकिक निदर्शनेनोपपादयति— "एवं हीति। यत्र हि काष्ठादिभि श्चितिर्निर्मीयते, तत्र एव मेव हि चितिं चिन्वन्ति। मूलाग्र भागयोर्द्वे काष्ठे प्रथमं तिर्यक् स्थापयन्ति, पश्चात्तयोरुपर्युपरि अन्यानि सर्वाणि प्रागग्राण्यवशिष्टानि स्थापयन्ति। उपरिष्टा चलनाभावायैकं पुनः स्थापयन्ति। तस्मात् तदनुसारेणायं पक्ष

* पुरस्तात् ८. ४. ३. १ द्रष्टव्यम्।

† ६ का० १ प्र० १ ब्रा० १३ ख० द्रष्टव्यम्।

‡ का० श्रौ० सू० १७. १. १७।

क्ता इत्यर्थः। तासां लोकम्पृणानां सङ्ख्यां सम्भूयानूद्य प्राक्तो वाक्यशेष इति दर्शयति— "तास्त्रयोदशेति। "त्रयो[दश] मासाः संवत्सरः"-इत्यादिरुक्तो * वाक्यशेषोऽत्रापि योजनीय [इत्य]र्थः ॥ ३३ ॥

पूर्वाभिरिष्टकाभिः सहैतासां सङ्ख्यां सम्भूय प्रशंसति— [त]ा उभय्य इति। 'उभय्यः' उभयविधाः, "अयꣳ सो ऽअग्नि-[रि]त्यादिभिर्मन्त्रैः प्रागुपहिताः † अष्टौ लोकम्पृणास्त्रयोदशेति [परि]श्रिता एकविꣳशतिर्भवन्ति। ["एकविꣳश इति, एकविंशति-[सङ्ख्]यापूरकः। "तस्य पूरणे डट्", "तिविंशतेर्डिति"-इति ‡ 'ति'-[शब्]दलोपः § ] तत् तेनैकविंशतिसङ्ख्यासम्पादनेन 'असुं' द्युलोकस्थ[म्] आदित्यम् 'अस्मिन्' चिते 'अग्नौ' प्रतिष्ठापयति। एकविंशति-[सङ्ख्]यायोगाच्चीयमानोऽग्निस्तदात्मको भवतीत्यर्थः ॥ ३४ ॥

परिश्रितां सङ्ख्या मनूद्य स्तौति— "एकविंशतिरिति। [उ]-'एव'-इत्यनयोर्यणादेशे सति 'वेव'-इति भवति। तत्र 'उ'-[शब्]दोऽप्यर्थे। 'परिश्रितः' गार्हपत्यचितिः परितः चिताः शर्करा [ए]कविंशतिसङ्ख्याका एव भवन्ति ; तत्रापि मासादिलोकान्ता[दि]गतिः पूर्ववत्। 'अयम्' एव चीयमानः 'अग्निः' 'असुतः' [अ]त्र परिश्रिते 'एकविꣳशः' एकविंशतिसङ्ख्यापूरकः। 'अधिः' [उ]पर्युपरिस्यर्थानुवादी। 'तत्' तथा सति 'इमम्' एकविंशम् 'अग्निम्' [प]रिष्टात्सुष्मिन्' एकविंशे 'आदित्ये' प्रतिष्ठापयति ॥

---

* पुरस्तात् ११ पृ० ३२ क० द्रष्टव्यम्।

† पुरस्तात् २२ क० (७, २६ पृ०) द्रष्टव्यम्।

‡ पा० सू० ५. २. ४८, ६. ४. १४२।

§ बन्धनीचिह्नान्त एष पाठस्तु ङ-पुस्तकमात्रे अधिकः।

एतदेव विवृणोति— "तद्यदिति। 'तत्' तत्र 'यत्' यस्मा[illegible] 'एताः' परिश्रितः इष्टकाश्च 'एवं' प्रत्येक मेकविंशतिसङ्ख्या[illegible] 'उपदधाति', 'एतत्' एतेन कारणेन 'एतावेव' अग्न्यादि[illegible] 'अन्योऽन्यस्मिन्' 'प्रतिष्ठापयति'। अत एवेदानीं 'तौ' 'अन्योऽन्यस्मिन् प्रतिष्ठितौ' दृश्येते। आदित्यो रात्रावग्निं प्र[illegible] प्रतितितिष्ठति, अग्निश्चोद्यन्त मादित्यं प्रविश्य प्रति[illegible] भवति। एतच्चाग्निहोत्रब्राह्मणे प्रतिपादितम् *। तयोर[illegible] रप्यत्र सन्निधान माह "तौ वा इति। परिश्रिदिष्टकासङ्[illegible] द्वयोरेकविंशयोरत्र सम्पादनात् 'इमौ' अग्न्यादित्यौ '[illegible] अपि 'अत्र' चित्याग्नौ सन्निहितौ 'भवतः'; तत्राहव[illegible] चितिरूपेणादित्यो वर्त्तते, गार्हपत्यचितिरूपेणाग्निरिति [illegible] विभाग इत्यर्थः ॥ ३५ ॥

पुरीषनिवपनं विधत्ते— "अथ पुरीष मिति †। इष्टकास[illegible] छिद्रपूरणार्थाः पांशवः पुरीषम्। तस्मात् ता मुपरि प्रचि[illegible] त्यर्थः। "तस्योपरि बन्धुरिति। 'तस्य' पुरीषनिवपनस्य प्रयो[illegible] प्रतिपादको वाक्यशेषः। "इन्द्रं विश्वा अवीवृधन्निति, त[illegible] विधिश्च उपरिष्टादष्टमकाण्डावसाने ‡ आम्नास्यत इत्यर्थः ॥

पुरीषाहरणस्थानं विधत्ते— "तच्चात्वालेति। उत्तर[illegible]

---

* "अग्निं वावादित्यः सायं प्रविशति, तस्मादग्निर्दूरान्नक्तं द[illegible] उभे हि तेजसी सम्पद्येते; उद्यन्तं वावादित्य मग्निरनुसमारोह[illegible] तस्माद् धूम एवाग्नेर्दिवा ददृशे"—इति तै० ब्रा० २. १. २. ६, उद्धृतस्यास्यैकोंऽशोऽत्र पुरस्तादग्निहोत्रब्राह्मणव्याख्यानेऽपि ( [illegible] २ प्र० ४ ब्रा० २ क०—२ भा० १२५ पृ० ) द्रष्टव्यम्।

† का० श्रौ० सू० १७. १. १८।

‡ परस्तात् ८ का० ४ प्र० ४ ब्रा० ७ क० द्रष्टव्यम्।

र्थानां पांसूनां निर्हरणस्थानं 'चात्वालः' उत्तरवेद्यंसदेशः, तस्य या वेला समीपम्, ततः पुरीष माहरेदित्यर्थः। तत् प्रशंसति— "अग्निरेष इति। आहवनीयाग्न्याधारोत्तरवेदिहेतुत्वाच्चात्वालस्याग्न्यात्मकता। "तथो हेति। तथैव खलु सति 'अस्य' चित्याग्नेः 'एतत्' पुरीष मपि 'आग्नेयम्' अग्निसम्बद्धम् 'एव भवति' ॥

इत्थं पुरीषान्ता गार्हपत्यचितिरुक्ता, अथ तस्याः प्रान्तेषु साम्य माह— "सा समबिला स्यादिति। 'सा' गार्हपत्यचितिः 'समबिला' भवेत्। 'समं' समानं बाह्याभ्यन्तरभावेन न्यूनाधिकाकाररहितं 'बिलं' परितः प्रान्तदेशो यस्याः सा तथोक्ता। "तस्योक्त इति। 'तस्य' बिलसाम्यस्य उखानिर्माणप्रस्तावे स्तावको वाक्यशेष आम्नात * इत्यर्थः॥ ३६ ॥

गार्हपत्यचितेः परिमाणं विधत्ते— "व्याममात्रीति। चतुररत्निर्व्यामः, स परिमाण मस्याः सा। "प्रमाणे द्वयसच्"— इति † मात्रच् प्रत्ययः। तत् प्रशंसति— "व्याममात्रो वा इति। तिर्यक् प्रसारितौ बाहू यावत् परिमाणौ भवतः, तस्य परिमाणस्य व्यायम्यतेऽस्मिन् बाहुद्वय मिति व्युत्पत्त्या व्यायाम इति सञ्ज्ञा; स एवात्र वर्णलोपेन व्याम इत्युच्यते। 'पुरुषो व्याममात्रः' चतुररत्निपरिमित इत्येतत् प्रसिद्धम्। विराडात्मकः 'प्रजापतिः' च तादृक् पुरुषात्मकः। "त एतान्सप्त पुरुषानेकं पुरुष मकुर्वन्निति ‡ श्रुत्या प्रतिपादितत्वात्, तादृशो

* पुरस्तात् ६. ३. ७. २०।
† पा० सू० ५. २. ५७।
‡ पुरस्तात् ६. १. १. ३ (२पृ० ७प०) द्रष्टव्यम्।

विराडात्मकः प्रजापतिरिवायं चीयमानः 'अग्निः' ; उभयोर संक्रियमाणरूपत्वसाम्यात्। "आत्मसम्मिता मिति। चेयमा स्याग्नेरुक्तरीत्या पुरुषत्वात् आत्मना स्वेनाग्निरूपपुरुषेण 'सम्मित समानपरिमाणाम्। 'तत्' तेन व्याममात्रकरणेन गार्हप चितिरूपां 'योनिं' कृतवान् भवतीत्यर्थः। परितो मण्डल कारां विधत्ते— "परिमण्डलेति। पारिमाण्डल्यं द्वेधोपप दयति— "परिमण्डला ह्येति ॥ ३७ ॥

गार्हपत्यचितिरूपस्याग्नेरुख्याग्नेश्च चतुर्भिर्मन्त्रैः संसर्ज विधत्ते— "अथैनाविति। 'अथ' गार्हपत्यचयनानन्तरम्, 'एन चित्योख्यरूपावग्नी 'सन्निवपति' सङ्गमयति, इष्टकाभिः चि गार्हपत्यधिष्ण्ये उख्य मग्निं स्थापयतीत्यर्थः। सन्निवपती संशब्दसूचित मर्थ माह— "सञ्ज्ञा मेवेति। 'आभ्याम्' 'अग्नि भ्यां'। कर्त्तरि तृतीया। 'सञ्ज्ञाम्' अग्निद्वयकर्तृकं सञ्ज्ञानम् परस्परैकमत्यम्, एतेन सन्निवपनेन करोतीत्यर्थः। करणभूतानां चतुर्णाम् मन्त्राणां प्रतीकग्रहणं करोति *- तत्र, "समित मिति प्रथमस्य प्रतीकम्, "सं वा मि द्वितीयस्य, "अग्ने त्वम् पुरीष्य इति तृतीयस्य, भवतं इति चतुर्थस्य ॥

ते च मन्त्राः † संहिताभाष्ये एव व्याख्याता द्व प्रतीक मत्र व्याख्यायते। हे चित्योख्यरूपावग्नी ! 'समि सङ्गतौ भवतम्। 'सङ्कल्पेथां' समानकल्पनौ समानसामर्थ्य एककार्यकरौ भवतम् (१)। हे 'अग्नौ' 'वां' युवयं

* का० श्रौ० सू० १७. १. १६।

† वा० सं० १२. ५७—६०।

'मनांसि' 'समकरम्' समानविषयाणि कुर्वे। तथा 'व्रता' "शेश्छन्दसि बहुल मिति * शेर्लोपः ; 'व्रतानि' युवयोः कर्माणि समानानि (२)। हे चीयमानाग्ने ! 'त्वम् पुरीष्यः' पशव्यो भवसि (३)। हे अग्नी ! 'नः' अस्माकं युवां 'समनसौ' समानमनस्कौ 'भवतम्' (४)। इति चतुर्णाम् प्रतीकाना मर्थः ॥

मन्त्राणां तात्पर्य माह— "शमयत्येवैनाविति। परस्परं विद्विषाणौ 'एनौ' अग्नी 'एतेन' मन्त्रकरणकेन निवपनेन 'शमयत्येव' शान्ताविव करोति। तच्च शमनम् 'अहिंसायै' हिंसापरिहाराय ; 'यथा' तावग्नी 'अन्योऽन्यं' परस्परं 'न हिंस्यातां' हिंसां न कुर्याता मिति ॥ ३८ ॥

चतुर्मन्त्रकरणकम् उख्याग्नेर्गार्हपत्यचितिमध्ये निवपनं विधत्ते— "चतुर्भिरिति। 'सन्निवपति' नीचैः स्थापयति। "तद्य इति। 'तत्' तेन चतुर्मन्त्रकरणकेन सन्निवपनेन 'ये' 'चतुष्पादाः पशवः' गवाश्वादयः, 'तैरेव' उपायनभूतैः 'आभ्याम्' उख्यचित्यात्मकाभ्या मग्निभ्यां 'सञ्ज्ञां' परस्परैकमत्यं 'करोति'। कारणान्तर मप्याह— "अथो इति। 'अन्नं' खलु 'पशवः', सम्भोजनीयत्वात् ; 'अन्नेन' पशुरूपेण ॥ ३९ ॥

रिक्ताया उखाया अध्वर्युकर्त्तृकं यजमानकर्त्तृकं वा अवेक्षणं निषेधति— "तां न रिक्ता मिति †। नेदिति परिभये ‡। 'रिक्ताम्' उखां 'नेदवेक्षेत' पश्यतु नैव। विपक्षे बाध माह— "यद्रिक्ता मिति। 'एनम्' अवेक्षितारं 'ग्रसेत ह' भक्षयेदेव ॥ ४० ॥

तर्हि किं कुर्यादित्यपेक्षायां रिक्ताया उखायाः सिक-

---

* पा० सू० ६. १. ७०।

† का० श्रौ० सू० १७. १. २०। ‡ निरु० १. ३. ६।

ताभिः समगर्त्तत्वकरणं विधत्ते— "अथास्या मिति *। 'अस्यां रिक्ताया मुखायां सिकता आवपति, यावद् बिलं पूरयति। वैश्वानरस्याग्नेः 'एतद्रेतः' 'यत्' याः 'सिकताः' शौक्लसामान्यात्। 'एतत्' एतेन सिकतानिवपनेन 'अस्याम्' उखाय 'रेतोभूतं' 'वैश्वानरम्' अग्निं 'सिञ्चति' स्थापयति। 'सा उखा 'समम्बिला' भवेत्; समं निम्नोन्नतत्वरहितं बिल मुखं यस्याः सा, तथा समबिलेति प्राप्ते पूर्वपदस्य मुगागम श्छान्दसः। समम्बिलत्वस्तावकोऽर्थवादः प्रागुक्त इत्याह— "तस्येति। स च "योनिर्वा इयᳪ रेत इद मित्यादिना षष्ठकाण्डे प्रतिपादितः † ॥ ४१ ॥

उखायाः शिक्याद्विमोचनं विधत्ते— "अथैना मिति ‡ 'एनां' सिकतायुक्ता मुखां § शिक्याद् 'विमुञ्चति' पृथक् करोति। विमोकप्रयोजन माह— "अप्रदाहायेति। तच्चोपपत्ति माह— "यद्वीति। 'युक्तम्' अश्वादि यद्वाहनं 'न विमुच्यते 'तत् प्रदह्यते' खलु। उक्त मर्थं प्रकृते योजयति— "एतद्वा इति 'एतद्वै' एषा खलूखा 'युक्ता' सती एतम् 'अग्निम्' उख्यम् 'एतद्रेतः' रेतोऽवस्थापन्नम् 'अभार्षीत्' धृतवती। ततोऽकृतकार्यत्वा विमोकोपपत्तिः। धृतस्याग्नेः प्रजनन माह— "त मत्रेति। 'अत्र अवसरे 'तम्' उख्याग्निम् 'अजीजनत्' प्रासोष्ट; उखेति शेषः प्रजननानन्तरतो धारणद्वारोखायाः स्त्रीसाधर्म्यं प्रतिपादयति-

---

* का० श्रौ० सू० १७. १. २१ क।

† पुरस्तात् ६ का० ३ प्र० ५ ब्रा० १६ क० (६ भा० २३५ पृ०) द्रष्टव्यम्

‡ का० श्रौ० सू० १७. १. २१ ग।

§ 'शून्या मुखां शिकताभिः सम्पूर्य'—इति महीधरः।

"अथापर मिति। 'अपरं' सिकतात्मकं रेत: 'धत्ते' धारयति। "योषा वा उखेति। सिकतावापोपपत्तिः। "तस्मादिति। लौकिकदृष्टान्तप्रदर्शनम् ॥ ४२ ॥

विहिते उखाविमोके मन्त्र मनूद्य व्याचष्टे— "मातेव पुत्र मिति *। पुरीष्यपदस्य पशव्यत्वं वाच्योऽर्थः। 'अभाः'-इति भृञः प्रथमपुरुषैकवचने व्यत्ययेन लुङि रूप मित्याह—"अभार्षीदिति; "अभारुखा"-इत्युखाशब्दसामानाधिकरण्यात् ॥

मन्त्रस्याय मर्थः †,— येय मुखा 'माता पुत्र मिव'; 'पृथिवी' भूमिरूपा; मृन्मयीत्वात्। 'पुरीष्यम्' 'पशव्यम्', पशुभ्यो हित मिति यावत्। तादृशम् 'अग्निं' 'स्वे योनौ' स्वकीये गर्भस्थाने 'अभाः' अभार्षीत्, धारितवती। ‡'विश्वकर्मा' सर्वस्य कर्त्ता प्रजापतिः 'ऋतुभिः' यज्ञं प्रति गच्छद्भिः, विश्वैः सर्वैः देवैः 'संविदानः' अहो महत् कर्म कृत मित्येवं संवादं कुर्वन्, इदानीं कृतकृत्यां सतीं ता मुखां 'विमुञ्चतु' शिक्यादिमुञ्चति, पृथक् कुरुत इत्यर्थः।

तस्या उखायाः ज्वलनरूपस्याग्नेरुत्तरपार्श्वे अरत्निमात्रे चिताविव निधानं कर्त्तव्य मित्याह— "ता मुत्तरत इति ‡। अरत्निमात्रप्रदेशे स्थापनस्य स्तावको वाक्यशेषः प्रागुक्त इत्याह— "तस्योक्त इति। "अरत्निमात्राद्धि वृषा योषा मुपशेत इति हि षष्ठकाण्डे प्रतिपादितम् § ॥ ४३ ॥

---

* का० श्रौ० सू० १७. १. २१ ख।

† तत्पाठस्तु वा० सं० १२. ६१ द्रष्टव्यः।

‡ का० श्रौ० सू० ('अग्निवत्') १६. २. ५।

§ तत्र २ प्र० ३ ब्रा० ३० क० (६ भा० १४० पृ०) द्रष्टव्यम्।

सिकतापूर्णाया उखाया मध्ये तूष्णीं पयस आसेचनं विधत्ते— "अथास्या मिति *। 'अस्याम्' उखायां 'पयः' दुग्धम् 'आनयति' आसिञ्चति। पयआसेके कारण मुपपादयति—"एतद्धा इति। एतत् खलु कारणम्,— 'एतत्' सिकतालक्षणं 'रेतः' उख 'धत्ते' धारयति। 'अथ' तदनन्तर मिद मानीतं पयो धत्ते। उक्तार्थसाधकं लौकिकदृष्टान्तं प्रतिपादयति— "योषा वा इति। सिकतापयसोरधरोत्तरभाव मनूद्य स्तौति— "अधरा सिकता इति। "अधरꣳ हि रेत इति। गर्भाशये अधो भागे स्थितं पुरुषस्य रेतः, स्त्रीवीर्यं शोणितरूपम्, 'पयः' 'उत्तरम्' उपर्यवस्थितं सत् 'तत्' पुंवीर्यं वेष्टयति। अत एव षाट्कौशिकस्य शरीरस्य त्वङ्मांसासृगाख्या बाह्यास्त्रयो धातवो मातृतो भवन्तीति स्मर्यते। तस्मात् सिकतापयसोर्बाह्याभ्यन्तरभावेन गर्भोत्पत्तये सम्पद्यत इत्यर्थः। आनयनस्थानं विधत्ते— "तन्मध्य इति। 'तत्' पयः, उखायाः 'मध्ये' 'आनयति' आसिञ्चति, यथा तत् पयः प्रति उपधानसमये पुरुषशीर्ष मुपदध्यात् तथेत्यर्थः। अत एवोपधानसमये पुरुषशिरस उखाया मुपधानं सूत्रितम्— "उखायां प्रत्यञ्चि, सहस्रदा इति † पुरुषशिर उद्धृत्य मध्ये"-इति ‡ ॥ ४४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १७. १. २१ घ। † वा० सं० १३. ४०।
‡ का० श्रौ० सू० १७. ५. १३, १४।

( अथ द्वितीयं ब्राह्मणम् . )

प्रजापतिः प्रजा असृजत । स प्रजाः सृष्ट्वा सर्व्वं माजि मित्त्वा व्यस्रꣳसत तस्माद्विस्रस्तात् प्राणो मध्यत उदक्रामदथास्माद्वीर्यं मुदक्रामत् तस्मिन्नुत्क्रान्तेऽपद्यत तस्मात् पन्नादन्न मस्रवद्यच्चक्षुरध्यशेत तस्मादस्यान्न मस्रवन्नो हैह तर्हि का चन प्रतिष्ठास ॥ १ ॥

ते देवा अब्रुवन् । न वा ऽइतोऽन्या प्रतिष्ठास्तीम मेव पितरं प्रजापतिꣳ संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति * ॥ २ ॥

तेऽग्नि मब्रुवन् । न वा ऽइतोऽन्या प्रतिष्ठास्ति त्वयीमं पितरं प्रजापतिꣳ संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति किं मे ततो भविष्यतीति † ॥ ३ ॥

तेऽब्रुवन् । अन्नं वा ऽअयं प्रजापतिस्त्वन्मुखा एतदन्न मदाम त्वन्मुखानां न एषोऽन्न मसदिति तथेति तस्माद्देवा अग्निमुखा अन्न म-

---

*, † 'भविष्यतीति'--इति ग, घ ।

दन्ति यस्यै हि कस्यै च देवतायै जुह्वत्यग्ना
वेव जुह्वत्यग्निमुखा हि तद् देवा अन्न मकु
र्व्वत ॥ ४ ॥

स योऽस्मात् प्राणो मध्यत उदक्रामत्
अय मेव स व्वायुर्योऽयं पवतेऽथ यदस्माद्वीर्य मुद
क्रामदसौ स आदित्योऽथ यदस्मादन्न मस्रवदे
संवत्सरेऽन्नं तत्तत् * ॥ ५ ॥

तं देवा अग्नौ प्रावृञ्जन्। तद्य एनं प्रवृत
मग्निरारोहद् † य एवास्मात् स प्राणो मध्यत उद
क्रामत् स एवैनऽ स आपद्यत त मस्मिन्नदधुर
यदस्माद्वीर्य मुदक्रामत् तदस्मिन्नदधुरथ यदस्माद
मस्रवत्तदस्मिन्नदधुस्तऽ सर्व्वं कृत्स्नऽ संस्कृत्यो
मुदश्रयंस्तद्यं त मुदश्रयन्निमे स लोकाः ‡ ॥ ६ ॥

तस्याय मेव लोकः प्रतिष्ठा §। अथ योऽस्मिं
ल्लोके ‖ ऽग्निः सोऽस्यावाङ् प्राणोऽथास्यान्तरिक्ष मात्मा

* 'तत्तत्'—इति क, 'तत्तत्'—इति ग, घ।

† 'मग्निरारोहति'—इति सा०-सम्मतः पाठ इति डा० वेबरः।

‡ 'लोकाः'—इति ग, घ। § 'प्रतिष्ठा'—इति ग, घ

‖ '०ल्लोके'—इति क, ग, घ।

योऽन्तरिक्षे व्वायुर्य एवाय मात्मन् प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्याचन्द्रमसौ चक्षुषी यच्च-क्षुरध्यशेत स चन्द्रमास्तस्मात् स मीलिततरोऽन्नꣳ हि तस्मादस्रवत् ॥ ७ ॥

तदेषा वै सा प्रतिष्ठा *। यां तद्देवाः सम-स्कुर्व्वंस्तैवेय मद्यापि प्रतिष्ठा सो ऽएवाप्यतोऽधि भविता † ॥ ८ ॥

स यः स प्रजापतिर्व्यस्रꣳसत। अय मेव स योऽय मग्निश्चीयते तद्यदेषोखा रिक्ता शेते पुरा प्रवर्ज्जनाद्यथैव तत् प्रजापतिरुत्क्रान्ते प्राण ऽउत्-क्रान्ते व्वीर्ये स्रुतेऽन्ने रिक्तोऽशयदेतदस्य तद्रू-पम् ‡ ॥ ९ ॥

ता मग्नौ प्रवृणक्ति। यथैवैन मदो देवाः प्रा-वृञ्जंस्तद्य एनां प्रवृक्ता मग्निरारोहति य एवास्मात् स प्राणो मध्यत उदक्रामत् स एवैनꣳ स आप-द्यते त मस्मिन्दधात्यथ यद्रुक्म प्रतिमुच्य बिभर्त्ति

* 'प्रतिष्ठा'—इति ग, घ।

† 'भविता'—इति ग, घ।

‡ 'तद्रूपम्'—इति ग, घ।

यद्देवास्माद् वीर्यं मुदक्रामत्तदस्मिन् दधात्यथ य
समिध आदधाति यदेवास्मादन्न मस्रवत्तदस्मिं
दधाति ॥ १० ॥

ता वै सायं प्रातरादधाति । अह्नश्च र
तद्रात्रेश्चान्न मस्रवत्तान्येतानि सर्व्वस्मिन्नेव संव्वत्स
स्युः संव्वत्सरो हि स प्रजापतिर्यस्मात्तान्युदक्राम
स्तदस्मिन्नेतत् सर्व्वस्मिन्नेव सर्व्वं दधाति य
स्मिन् हास्यैतदतो न कुर्यान्न हास्य तस्मिन्नेत
इध्यान्नासंव्वत्सरभृतस्यैत्तकेण चन भवितव्य मिति
ह स्माह व्यामकच्चायणो नेदिमं पितरं प्रजा
पतिं व्विच्छिद्यमानं पश्यानीति तं संव्वत्सरे सर्व्व
कृत्स्नं संस्कृत्योर्द्ध्व मुच्छ्रयति यथैवैन मदो देव
उदश्रयन् ॥ ११ ॥

तस्य गार्हपत्य एवायं लोकः* । अथ यं
गार्हपत्येऽग्निर्य एवाय मस्मिंल्लोके † ऽग्निः सोऽस्
सोऽथ यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्ष

* 'लोकः'—इति क, 'लोकः'—इति ग, घ ।

† '०ल्लोके'—इति क, ग, घ ।

मथ य आग्नीध्रीयेऽग्निर्य एवायमन्तरिक्षे व्वायुः सोऽस्य स आहवनीय एव द्यौरथ य आहवनीयेऽग्निस्तौ सूर्याचन्द्रमसौ सोऽस्यैष आत्मैव * ॥ १२ ॥

तस्य शिर एवाहवनीयः †। अथ य आहवनीयेऽग्निर्य एवायꣳ शीर्षन् प्राणः सोऽस्य स तद्यत् स पक्षपुच्छवान् ‡ भवति पक्षपुच्छवान् § ह्ययꣳ शीर्षन् प्राणश्चक्षुः शिरो दक्षिणꣳ श्रोत्रं दक्षिणः पक्ष उत्तरꣳ श्रोत्र मुत्तरः पक्षः प्राणो मध्यमात्मा व्वाक् पुच्छं प्रतिष्ठा तद्यत् प्राणा व्वाचान्नं जग्ध्वा प्रतितिष्ठन्ति तस्माद्वाक् ‖ पुच्छं प्रतिष्ठा ¶ ॥ १३ ॥

अथ यदन्तराहवनीयं च गार्हपत्यं च। स आत्माथ य आग्नीध्रीयेऽग्निर्य एवाय मन्तरात्मन्

---

* 'आत्मैव'—इति ख, 'आत्मैव'—इति ग, घ।

† 'एवाहवनीयः'—इति ग, घ।

‡, § 'पक्षपुच्छवान्'—इति ग।

‖ 'तस्मात् प्राणानां व्वाक्'—इति क।

¶ 'प्रतिष्ठा'—इति क, 'प्रतिष्ठा'—इति ग, घ।

प्राणः सोऽस्य स प्रतिष्ठेवास्य गार्हपत्योऽथ यो गार्हपत्येऽग्निः सोऽस्यावाङ् प्राणः * ॥ १४ ॥

तꣳ हैके विचितं चिन्वन्ति। त्रयो वाऽइमेऽवाञ्चः प्राणा इति न तथा कुर्यादति ते रेचयन्त्येकविꣳशसम्पद मथो ऽअनुष्टुप्सम्पद मथो बृहतीसम्पदं ये तथा कुर्वन्त्येकꣳ ह्येवैतद्रूपं योनिरेव प्रजापतिरेव यदेतेऽवाञ्चः प्राणा यद्धि मूत्रं करोति यत् पुरीषं प्रैव तज्जायते ॥ १५ ॥

अथातः सम्पदेव †। एकविꣳशतिरिष्टका नव यजूꣳषि तत् त्रिꣳशत् सादनं च सूददोहाश्च तद् द्वात्रिꣳशद् द्वात्रिꣳशदक्षरानुष्टुप् सैषानुष्टुप् ‡ ॥ १६ ॥

एकविꣳशतिर्व्वेव परिश्रितः। यजुर्द्वात्रिꣳशं व्युदूहनस्य यजुरूषाश्च यजुश्च सिकताश्च यजुश्च पुरीषं च यजुश्च चतुर्भिः सन्निवपति व्विमुञ्चति

---

* 'प्राणः'—इति क, 'प्राणः'—इति ग, घ।

† 'सम्पदेव'—इति ग, घ।

‡ 'सैषानुष्टुप्'—इति ग, घ।

पञ्चमेन ततस्त्रिभिरियं द्वात्रिꣳशदक्षरानुष्टुप् सैषा-नुष्टुप् * ॥ १७ ॥

अथैते द्वे यजुषी †। सो ऽनुष्टुबेव व्वाग्वा ऽनुष्टुप् तद्यदिदं द्वयं व्वाचो रूपं दैवं च मानुषं चोच्चैश्च शनैश्च तदेते द्वे ‡ ॥ १८ ॥

ता वा ऽएतास्तिस्रोऽनुष्टुभः। चित एष गार्हपत्यस्तद्यदेता अत्र तिस्रोऽनुष्टुभः सम्पादय-न्त्यत्र ह्येवेमे तदा सर्व्वे लोका भवन्ति ततो ऽन्यतरां द्वात्रिꣳशदक्षरा मनुष्टुभ माहवनीयꣳ हरन्ति स आहवनीयः सा द्यौस्तच्छिरोऽथेहान्य-तरा परिशिष्यते स गार्हपत्यः सा प्रतिष्ठा स उ ऽअयं लोकः § ॥ १९ ॥

अथ ये ऽएते द्वे यजुषी। एतत्तद्यदन्तरा-हवनीयं च गार्हपत्यं च तदन्तरिक्षꣳ स आत्मा तद्यत्ते द्वे भवतस्तस्मादेतत्तनीयो यदन्तराहवनीयं

* 'सैषानुष्टुप्'—इति ग, घ।

† 'यजुषी'—इति ग, घ।

‡ 'द्वे'—इति क, 'द्वे'—इति ग, घ।

§ 'लोकः'—इति क, 'लोकः'—इति ग, घ।

च गार्हपत्यं च तस्मादेषां लोकाना मन्तरिक्ष लोकस्तनिष्ठः * ॥ २० ॥

सैषा त्रेधा विहिता व्वागनुष्टुप्। ता मेषोऽग्निः प्राणो भूत्वानुसञ्चरति य आहवनीयेऽग्नि स प्राणः सोऽसावादित्योऽथ य आग्नीध्रीयेऽग्नि स व्यानः स उ ऽअयं व्वायुर्योऽयं पवतेऽथ यो गार्हपत्येऽग्निः स उदानः स उ ऽअयं योऽय मस्मिं लोके † ऽग्निरेवंव्विद्व वाव सर्व्वां व्वाचं सर्व्व प्राणꣳ सर्व्व मात्मानꣳ संस्कुरुते ‡ ॥ २१ ॥

सैषा बृहत्येव §। ये वै द्वे द्वात्रिꣳशती द्वात्रिꣳशदेव तदथैते द्वे यजुषी तच्चतुस्त्रिꣳशदग्निरेव पञ्चत्रिꣳशो नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्याꣳ स उद्वाक्षरस्तत् षट्त्रिꣳशत् षट्त्रिꣳशदक्षरा बृहती बृहतीं वा ऽएष सञ्चितोऽभिसम्पद्यते यादृग् वै योनौ रेतः सिच्यते तादृग्

* 'लोकस्तनिष्ठः'—इति ग।

† 'मस्मिंलोके'—इति क, ग, घ।

‡ 'संस्करुते'—इति ग।

§ 'बृहत्येव'—इति ग, घ।

जायते तद्यदेता मेव बृहतीं करोति तस्मादेष सञ्चितो बृहती मभिसम्पद्यते ॥ २२ ॥

तदाहुः । यदयं लोको गार्हपत्योऽन्तरिक्षं धिष्ण्या द्यौराहवनीयोऽन्तरिक्षलोक उ अस्माल्लोकादनन्तर्हितोऽथ कस्माद् गार्हपत्यं चित्वाहवनीयं चिनोत्यथ धिष्ण्यानिति सह हैवेमावग्रे लोकावासतुस्तयोर्व्वियतोर्योऽन्तरेणाकाश आसीत् तदन्तरिक्ष मभवदीक्षꣳ हैतन्नाम ततः पुरान्तरा वा ऽइद मीक्ष मभूदिति तस्मादन्तरिक्षं तद्यद् गार्हपत्यं चित्वाहवनीयं चिनोत्येतौ ह्यग्रे लोकावसृज्येता मथ प्रत्येत्य धिष्ण्यान्निवपति कर्म्मण एवानन्तरयायायो ऽअन्तयोर्व्वाव संस्क्रियमाणयोर्मध्यꣳ संस्क्रियते ॥ २३ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

उख्यरूपेण संस्कृतस्याग्नेर्विराड्रूपप्रजापत्यात्मकतां वक्ष्यन्नस्य * प्रजापतेः संस्कृतिं वक्तुकामस्तच्छरीरविश्लेषं प्रतिपादयति—

* 'वक्ष्यन् तस्य'—इति ज ।

"प्रजापतिः प्रजा असृजतेत्यादिना । "प्रजाः सृष्टेति । दे
मनुष्यादिरूपा बह्वीः 'प्रजाः सृष्ट्वा' 'सर्वम्' 'आजिं' गन्तव्यस्था
'इत्वा' व्याप्य, श्रान्तः सन् 'व्यस्रंसत' विस्रस्तावयवोऽभव
'तस्माद्विस्रस्तात्' प्रजापतिशरीरात् 'मध्यतः' 'प्राणः' प्राणा
पञ्चवृत्त्यात्मकः 'उदक्रामत्' उत्क्रान्तोऽभवत् । 'अथ' अनन्तरं
तस्य प्रजापतेः 'वीर्यं' शुक्रम् 'उदक्रामत्' । 'तस्मिन्' निर्गते स
स भूमौ 'अपद्यत' पतितोऽभवत् । 'तस्मात्' 'पन्नात्' पतित
प्रजापतिशरीरात् अन्तरवस्थितम् 'अन्नम्' 'अस्रवत्' स्रुत मभव
'यत्' 'चक्षुः' 'अत्यशेत' । "अधिशीङ्स्थासां कर्म"–इत्यधिकरण
कर्मसञ्ज्ञा * । 'चक्षुरधि' चक्षुषोर्मध्ये चक्षुषो ज्योतिरवस्थि
मभवदित्यर्थः । 'तस्मात्' ज्योतिषः 'अस्य' प्रजापतेः 'अन्नं'
मभवत् । 'तर्हि' तथा सति नैव खलु काचित् 'प्रति
'आस' । तस्य प्रजापतेः शरीरस्य विस्रस्तत्वात् किञ्चिद
प्रतिष्ठास्पदं † न बभूवेत्यर्थः ॥ १ ॥

अनन्तरं देवैः कृत मस्य संस्कारं वक्तु माह— '
देवा इति । 'इतः' अस्मात् प्रजापतेः 'अन्या' 'नैव' 'प्रति
'अस्ति' आश्रयो विद्यते । 'इम मेव' अस्मदीयं 'पितरं प्रजा
पतिं' 'संस्करवाम', यथा पूर्व मवतिष्ठेत्, 'सः' च संस्कृ
'नः' अस्माकं पुनः 'प्रतिष्ठा' आश्रयो 'भविष्यतीति' ॥ २ ॥

इत्थं सम्प्रधारित मर्थं कर्त्तुं प्रार्थितवन्त इत्याह— "तेऽ
मिति । 'ते' देवाः 'अग्नि मब्रुवन्' 'न' खलु 'इतः' अस्मा
प्रजापतेः 'अन्या' अस्माकम् 'प्रतिष्ठा अस्ति', 'इमं पितरं' त्वा

---

* पा० सू० १. ४. ४६ ।

† 'किञ्चिदप्यास्पदं'—इति क ।

'संस्करवाम', स च संस्कृतः पुनरुत्थितः सन् अस्माकम् 'प्रतिष्ठा भविष्यतीति'। सोऽग्निरेतद्वाक्यं श्रुत्वा प्रत्यवोचत्,— 'ततः' तस्मात् संस्कारात् 'मे' मम 'किम्' प्रयोजनं 'भविष्यतीति' ॥ ३ ॥

तस्योत्तरं दर्शयति— "तेऽब्रुवन्निति। अन्नरूपो हि 'अयं प्रजापतिः'। तस्य च त्वयि संस्कारे सति वयं सर्वे 'त्वन्मुखाः' एतदन्नम्' 'अदाम' भुञ्जीमहि। 'त्वन्मुखानाम्' एवास्माकम् एषः' संस्कृतः प्रजापतिः 'अन्नं' भवत्विति *। 'तथेति' सोऽग्नि-रङ्गीकृतवान् ॥

इदानीन्तनप्रसिद्ध्या देवाना मग्निमुखत्वं द्रढयति— "यस्या वद्धिति। इन्द्रादीनां मध्ये 'यस्यै कस्यै चिद् देवतायै' यत् किञ्चिद्धविः प्रयच्छन्ति, तत् सर्वम् 'अग्नावेव जुह्वति'। तत्र कारण माह— "अग्निमुखा हीति। 'हि' यस्मात् ते देवाः' 'तत्' तदानीं प्रजापतिरूपम् 'अन्नम्' अग्निमुखा एव अकुर्वत', तस्मादग्नौ हूयमानं हविर्लक्षण मन्नं सर्वे देवा अश्नन्तीत्यर्थः ॥ ४ ॥

उत्क्रान्तानां परिणामविशेष माह— "स योऽस्मादिति। प्रजापतिशरीरादुत्क्रान्तः प्राणवायुरेव भूतात्मकबाह्यवायुरूपेणो-त्पन्नः। यदुत्क्रान्तं वीर्यं तदेवासौ द्युलोके आदित्योऽभवत्। यदेव संवत्सरेऽन्न मिति। 'यत्' खलु संवत्सरस्य मध्ये व्रीहि-यवादिरूपम् 'अन्नं' पच्यते, 'तत् तत्' तदात्मना प्रजापति-र्विस्रस्त † मन्नं परिणत मभवदित्यर्थः ॥ ५ ॥

---

* 'भवति'—इत्येव च, छ।

† 'प्रजापतेर्विस्रस्त'—इति ङ, 'प्रजापतिविस्रस्त'—इति ज।

प्रकृत मनुसरति— "तं देवा इति । 'तं' प्रजापतिं
'देवाः' 'अग्नौ' 'प्राव्रृञ्जन्' प्रतपनेन समस्कुर्वन् । 'तत्' त
प्रवृञ्जने सति 'एनं' प्रवृक्तं प्रजापतिं यः 'अग्निः' 'आरोहत्'*
सङ्क्रामति (स्र †), तदात्मना प्राङ् निष्क्रान्तः प्राणः 'एव' 'ए
प्रजापतिं पुनः 'आपद्यत' प्राप्नोत् । तथा च 'तं' प्राणं वीर्यादि
'अस्मिन्' प्रजापतौ प्रवृञ्जनेन स्थापितवन्त इत्यर्थः । "तᳪं स
मित्यादि । इत्थं प्रवृञ्जनेन 'तं' प्रजापतिं 'सर्वं' निरवशेषं पूर्ण
वयवं 'संस्कृत्य' पुनः 'ऊर्ध्वं मुदश्रयन्' गमनागमनव्यवहारसम
मूर्द्धाकार मुच्छ्रित मकुर्वन् । 'तत्' तत्र च 'यम्' प्रजापतिम् 'उ
श्रयन्' देवाः, 'सः' एव 'इमे' त्रयो 'लोकाः' लोकत्रयात्मकं
ऽभवदित्यर्थः ॥ ६ ॥

तस्य कीदृक् किं मङ्ग मिति, तदाह— "तस्याय मि
त्यादिना । 'अयं' भूलोकः 'एव' 'तस्य' विराडात्मकस्य प्रजा
पतेः 'प्रतिष्ठा' । प्रतितिष्ठत्यस्या मिति प्रतिष्ठाशब्देन पाद
वुच्येते । पार्थिवोऽग्निस्तस्य अवाचीनः प्राणः, येन मूत्रपु
षादिक मुत्सृज्यते । अन्तरिक्षलोकोऽस्य प्रजापतेः 'आत्मा' म
देहः । तत्र सञ्चरन् 'वायुः' 'आत्मन्' आत्मनि मध्यदेहेऽवस्थि
प्राणः । "सोऽस्य स इति । स वायुरेवास्य प्राण इत्यर्थ
"द्यौरेवास्येति । द्युलोकोऽस्य प्रजापतेर्मूर्द्धा । तत्रत्यौ 'सूर्याच
मसौ चक्षुषी' तयोर्मध्ये 'यच्चक्षुरध्यशेत' यस्मिन् चक्षुषि ज्यो
सचक्षुरवस्थित मभवत्, तच्चक्षुः 'चन्द्रमाः' । तदुपपादयति

* 'आरोहति'—इति च, छ, ज ।
† छ-पुस्तकादन्यत्र नास्तीदं पदम् ।

"तस्मादिति। 'हि' यस्मात्, 'तस्मात्' चक्षुषःऽन्न मस्रवत्, तस्मात् कारणात् तच्चक्षूरूपः 'चन्द्रमाः' 'मीलिततरः' अतिशयेन मीलितः; सूर्यादल्पप्रकाशो दृश्यत इत्यर्थः॥ ७॥

"तदेषा वा इत्यादि। 'तत्' तथा सति देवादीनां प्रजानाम् 'एषा' प्रजापत्यात्मिका 'सा प्रतिष्ठा', अभवदिति शेषः। 'तत्' तदानीं 'यां' 'समस्कुर्वन्' उदीरितरीत्या संस्कृतवन्तः। न केवल मतीतकाल एव प्रजापतिः प्रतिष्ठारूपता, वर्त्तमानभविष्यत्कालयोरपीत्याह— "सैवेय मिति। 'अद्य' इदानीं वर्त्तमानकालेऽपीत्यर्थः। "अतोऽधिभवितेति। 'अतः' अस्माद्वर्त्तमानादूर्द्धकालेऽपि सैव प्रतिष्ठा 'भविता' "अनद्यतने लुट्"-इति * भविष्यत्यदनद्यतने लुट्॥ ८॥

प्रतिष्ठारूपस्य प्रजापतेः संस्कार मभिधाय चित्याग्नेरपि तादृक् संस्कारं वक्तुं तयोस्तादात्म्य माह— "स य इति। 'सः'-इत्येकस्तच्छब्दः प्रसिद्धौ, अपरः प्रकृतपरामर्शकः। "योऽय मग्निरिति। गार्हपत्यचितिरूपो योऽग्निरित्यर्थः। तयोस्तादात्म्योपपत्तये प्रजापतेरवस्थाविशेष मत्रापि दर्शयति— "तद्यदेषेति। 'तत्' तत्र आहवनीये 'प्रवृञ्जनात्' † पूर्वं 'रिक्ता उखा शेते' इति 'यत्', अस्य उत्क्रान्तप्राणादिकस्य प्रजापतेरेतद्रूप मित्यर्थः॥ ९॥

संस्कारसाम्य माह— "ता मग्नाविति। 'ताम्' उखाम् 'अग्नौ' आहवनीये 'प्रवृणक्ति' प्रतपति। "यथैवैन मिति।

---

* पा० सू० ३. ३. १५।

† प्रवर्जनादिति मूल पाठः; तस्यैव वा व्याख्यानपर मिदं स्यात् प्रवृञ्जनादिति।

प्रजापतिसाम्यवर्णनम् । प्रजापतिः (?) * 'अदः' अमुष्मिन् सृ[illegible] काले इत्यर्थः । "तद्य एना मिति । 'एनाम्' उखां 'प्रवृत्त[illegible] प्रतप्ताम् 'अग्निः' 'आरोहति' आक्रमते, अन्तर्जायत इति 'य[illegible] अनेन पुरा प्रजापतिशरीरादुत्क्रान्तः 'सः' प्राणः 'एव' 'स[illegible] अग्निर्भूत्वा 'एनम्' उखात्मकं प्रजापतिम् 'आपद्यते' आगच्छति 'तं' प्राणम् 'अस्मिन्' 'दधाति' स्थापयति। "अथ यद्रुक्म मित्यादि यजमानः सौवर्णं रुक्मं 'प्रतिमुच्य' † कण्ठे सूत्रेण बद्ध्वा, तस्यो[illegible] परि त मुख्यं बिभर्त्तीति 'यत्', तेन प्रागुत्क्रान्तवीर्य मेव[illegible] स्मिन् पुनः स्थापयतीत्यर्थः । "अथ याः समिध इति । उखा[illegible] मग्न्यारोहणानन्तरं तस्मिन् 'याः समिध आदधाति', ताभिस्त[illegible] प्रागस्मात् स्रुत मप्यन्नं पुनरस्मिन् स्थापयति । यदाह कात्या[illegible] तनः— "अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आद[illegible] धाति"–इति ‡ ॥ १० ॥

तासा महरहरभ्याधान मनूद्य, तत्र कारण माह— 'त[illegible] वा इति । 'तत्' तदानीम् 'अह्नो रात्रेश्च' सकाशात् प्रजा[illegible] पतिशरीरात् 'अन्न मस्रवत्', अतस्तस्य पुनरवाप्तये समिध[illegible] माधानम् एतस्मिन् § 'संवत्सरे' प्रत्यहं कालत्रयेऽपि कर्त्तव्[illegible] मित्यर्थः । अत एवोक्तं सूत्रकृता— "पालाशीः प्रत्यृच महर[illegible] रिति"–इति ‖ । रुक्मप्रतिमोचनोख्यभरणादीनां संवत्सरकालव्या[illegible]

* पद मिद मिह सर्वेष्वेव पुस्तकेषु ।

† नास्तीदम्यदमिह ज-पुस्तके ।

‡ का० श्रौ० सू० १६. ४. ३३ ।

§ 'तस्मिन्'—इति ज ।

‖ का० श्रौ० सू० १६. ४. ४० द्रष्टव्यम् ।

माह— "तान्येतानीति। 'तानि' रुक्मप्रतिमोचनोख्यभरणसमिदाधानविष्णुक्रमणादीनि पूर्वोक्तान्येतानि * प्राणवीर्यान्नरूपेणानुक्रान्तानीत्यर्थः। † 'सर्वस्मिन्' कृत्स्ने 'एव' 'संवत्सरे' भवेयुरिति विधिवाक्य मेतत्। तेषां संवत्सरकर्त्तव्यत्वे उपपत्ति माह— "संवत्सरो हीति। यस्मात् प्रजापतिस्तानि प्राणवीर्यान्नानि उत्क्रान्तानि। स हि संवत्सरकालात्मकः खलु 'एतत्' एतेन रुक्मप्रतिमोचनादीनां संवत्सर मनुष्ठानेन अस्मिन् प्रकृते सर्वात्मके प्रजापतौ सर्वं निरवशेषं विश्वं 'दधाति' स्थापयति। व्यतिरेके बाध माह— "यस्मिन् हेति। 'अस्य' संवत्सरात्मकस्य प्रजापतेः 'यस्मिन्' ऋतौ वसन्तादिके कालावयवे 'एतत्' पूर्वोक्तं 'न' स्थापयेत्। इत्थं प्रतिपादितं संवत्सरावयवे सर्वानाधानलक्षणं दोषं स्पष्टयितुं संवत्सरभृतस्याग्नेः द्रष्टृत्व मपि निषेधयति—

"नासंवत्सरभृतस्येति। न संवत्सरपर्यन्तं 'भृतः' उखायां धृतः, सोऽयम् 'असंवत्सरभृतः', तस्य 'ईक्षकेण चन' द्रष्टापि 'न' भाव्यम्, किं मुतर्त्विजा। 'इति' एवं 'वामकक्षायणः' वामकक्षस्यापत्य मृषिः 'आह' उक्तवान्। 'चन'-शब्दोऽप्यर्थे। एवं ब्रुवतो वामकक्षायणस्याभिप्राय माह— "नेदिम मिति।

---

* पूर्वस्मिन् काण्डे "रुक्मं प्रतिमुच्य बिभर्त्ति"—इत्यादिको ग्रन्थः, कात्यायनीयश्च "यजमानः कण्ठे रुक्मम्"—इत्यादिको द्रष्टव्यः (शत० ६ का० ५ प्र० १ ब्रा० ३७१ पृ०, कात्या० १६. ५. १.)।

† इत उत्तर मूनविंशकण्डीव्याख्यान्तो ग्रन्थो ज-पुस्तकीयादर्शेषु नैव लब्धः। मत्सम्पादितादर्शपुस्तकेष्वपि च-छ-पुस्तकयोरिह लिखितम्—"अत्र प्रतिपुस्तके पत्रद्वयं गतम्"—इति। ततो ङ-पुस्तकमात्र मत्रावलम्बनम्।

नेदिति परिभये *। 'पितरं' पालकं 'इमम्' अधियज्ञात्‌ 'प्रजापतिं' 'विच्छिद्यमानं' विशेषेण भिद्यमानं 'नेत्पश्या' नैव ईक्षे इति'। 'इति'-शब्दस्तदभिप्रायपरिसमाप्तिद्योतक उक्त मर्थं निगमयति— "तꣳ संवत्सर इति। संवत्सरे शते 'तं' प्रजापतिं 'सर्वं' निरवशेषं 'कृत्स्नं' सम्पूर्णावयवं 'संस्क 'ऊर्द्ध मुच्छ्रयति' गमनागमनव्यवहारसमर्थं मूर्द्धाकार मुच्छ्रितं करोति। 'यथैव' येनैव प्रकारेण 'अदः' पूर्वं 'देवाः' प्रजापतिम् 'उदश्रयन्' उच्छ्रितं कृतवन्तः, तथेत्यर्थः ॥ ११

प्रकृतस्य चयनात्मकस्य प्रजापतेर्लोकत्रयात्मकतां तदधिष्ठा ग्निवाय्वादित्यात्मकताञ्च प्रतिपादयति— "तस्य गार्हपत्य इ दिना। "स यः प्रजापतिर्व्यस्रꣳसत अय मेव स योऽय मग्निश्चीय -इत्युक्तम् †, 'तस्य' प्रजापतेः 'गार्हपत्य एव' चितिरूपस्थलवि एव 'अयं लोकः' पृथिवी। 'अथ यो गार्हपत्ये' अधिकरणे उत्क 'अग्निः' स्थापितः, यश्चाय मस्मिन् लोके पृथिव्या मधिष्ठातृत्वे स्थितोऽग्निः, स उख्योऽग्निः पृथिवीस्थानोऽग्निरपि अस्य प्रजाप सम्बन्धी; स जाठरोग्निर्बोद्धव्य इति शेषः। 'अथ' 'आहवनी गार्हपत्यञ्च' 'अन्तरा' मध्ये, चित्योरन्तराल इति यावत्, यत् स तदन्तरिक्षं' मध्यलोक इत्यर्थः। 'अथ' च 'यः' अयम् 'आग्नी ध्रीये' धिष्ण्ये 'अग्निः' स्थापितः, य एव चाय मन्तरिक्षे अधिष्ठा तृत्वेन स्थितो वायुः, स आग्नीध्रीयस्थोऽन्तरिक्षस्थो वायुश्चेत्युभ विधोऽप्यस्य प्रजापतेः स पञ्चवृत्त्यात्मकः प्राण इत्यर्थः। 'आ वनीयः' चित्यात्मकः 'एव' 'द्यौः' द्युलोकः। 'अथ' 'आहवनी

---

* निरु० १. ३. ६।

† इहैव पुरस्तात् नवमी कण्डी (५१ पृ०) द्रष्टव्या।

अधिकरणे 'यः अग्निः' अतिप्रणीतः स्थापितः, तौ सूर्याचन्द्रमसौ द्युलोकेऽधिष्ठातृत्वेन स्थितौ। 'स एषः' आहवनीयादिः चन्द्रान्तः 'अस्य' 'आत्मैव' मध्यदेह एवेत्यर्थः॥ १२॥

तस्य प्रजापतेराधियज्ञिक माध्यात्मिकञ्च रूपं प्रतिपिपादयिषुराह— "तस्य शिर इति। 'तस्य' प्रजापतेः 'आहवनीयः' चित्यात्मकः 'शिरः' मूर्द्धा। 'अथ' 'यः' तत्र निधीयमानः 'अग्निः', 'योऽयं' 'शीर्षन्' शीर्ष्णि 'प्राणः' नासिकासञ्चारी, स उभयविधोऽपि 'अस्य' प्रजापतेः 'स एव' शीर्षण्यः प्राण एवेत्यर्थः॥

चित्यात्मकस्याहवनीयस्य, तत्र निधीयमानस्याग्नेश्च क्रमेण शीर्षत्वं शीर्षण्यप्राणत्वञ्च प्रतिपाद्य, तयोरेव पक्षपुच्छवत्त्वं प्रतिपादयति—"तद्यत् स इति। 'तत्' तत्र 'यत्' यस्मात् 'सः' चित्यात्मक आहवनीयः 'पक्षपुच्छवान्' पक्षाभ्यां पुच्छेन च युक्तोऽस्ति, 'अयं' 'शीर्षन्' शीर्ष्णि वर्त्तमानः 'प्राणः' नासिक्य इति यावत्। सोऽपि 'पक्षपुच्छवान् हि' पक्षपुच्छैरन्वितः खलु। पक्षपुच्छवत्त्व मेवोपपादयति— "चक्षुः शिर इत्यादिना। 'चक्षुः' सव्यदक्षिणात्मकं चक्षुरिन्द्रियम् नासिक्यप्राणस्य 'शिरः' मूर्द्धभूतम्; तदुपरि वर्त्तमानत्वात्। दक्षिणकर्णो दक्षिणपक्षस्थानीयः; तस्य दक्षिणपार्श्ववर्त्तित्वात्। उत्तरकर्णश्चोत्तरपक्षस्थानीयः; उत्तरपार्श्ववर्त्तित्वादेव। 'प्राणः' स एव नासिक्यः। 'मध्यम्' अन्तर्वर्त्ति 'आत्मा' शरीरम्। वागायतनत्वाद् वाङ् मुखम्, तदायतनं रसन मपि वा, तत् पुच्छम्; पश्चाद्भावित्वात्। सैव 'प्रतिष्ठा' आस्पदम्। प्रतिष्ठात्व मेवोपपादयति— "तद्यदिति। 'यत्' यस्मात् 'प्राणाः' नासिक्यादयो 'वाचा' मुखेन 'अन्नं' 'जग्ध्वा'

भञ्जयित्वा शरीरे 'प्रतितिष्ठन्ति' नोत्क्रामन्ति, 'तस्मात्' हेतोः प्राणानां 'वाक् पुच्छं' प्रतिष्ठेत्युपपन्नम् ॥ १३ ॥

प्रकारान्तरेणापि तस्याधियज्ञिकाध्यात्मिकरूपता मेव प्रतिपादयति— "अथ यदन्तरेति। आहवनीयगार्हपत्ययोः अन्तरालदेश इति 'यत्', 'स आत्मा' शरीरम्। 'आग्नीध्रीये' तदादौ धिष्ण्ये 'योऽग्निः' निहितः। प्रदर्शनार्थ माग्नीध्रीयग्रहणम्; उत्तरत्र "अन्तरिक्षं धिष्ण्याः"-इति बहुवचनोपदेशात् *। योऽयम् अन्तरात्मनि 'प्राणः' पञ्चवृत्त्यात्मकः, 'सः' सर्वधिष्ण्यस्थ एव 'अस्य' पञ्चवृत्तिकः प्राण इत्यर्थः। 'गार्हपत्योऽस्य' 'प्रतिष्ठा' पादौ यत्र तत्रत्यः 'अग्निः' 'सोऽस्य' अवाचीनः 'प्राणः'; पश्चाद्वर्त्तित्वात् ॥ १४ ॥

त्रिचितिको गार्हपत्यश्चेतव्य इत्येकीयमत मुपन्यस्यति— "तं हैक इति। 'एके' शाखिनः तं प्रकृतं गार्हपत्यं 'त्रिचितम्' उपर्युपरि चितित्रयात्मकं 'चिन्वन्ति'। तिसृभिश्चितिभिश्चितस्त्रिचितस्तं तथाविधम्। चिन्वता मभिप्राय माह— "त्रयं वा इमे इति। प्रजननमूत्रपुरीषसर्गवृत्तिभेदेन त्रित्वम्, ततः तिसृभिश्चितिभिस्त्रीण्येव प्राणायतनानि कल्पितानि भविष्यन्तीत्याशयः। वक्ष्यमाणसम्पत्तित्रयातिरेकात्मकदोषाधानेन तमेतं पक्षं निराचष्टे— "न तथेति। ये शाखिनः तथा त्रिचितचयनं कुर्व्वन्ति, 'ते' 'एकविंशसम्पदं' "ता उभय्य एकविंशति सम्पद्यन्ते"-इत्यादिनोक्ताम् † एकविंशतेरिष्टकानां सम्पदम् 'अतिरेचयन्ति' अतिरिक्तां कुर्वन्ति। त्रिचितिके हि बहुतरा

---

* ५७पृ० २३ कण्डी द्रष्टव्या।

† इहैवाद्यब्राह्मणे (१२पृ० २पं०) ३४ कण्डी द्रष्टव्या।

इष्टकाः स्युः ; तथा, आनुष्टुभेषु "अथातः सम्पदेवैकविंशतिरिष्टकाः"-इत्यादिना * वक्ष्यमाणायास्त्रिविधाया अपि सम्पदम्, तथा "सैषा बृहत्येवः"-इत्यादिना † वक्ष्यमाणाया बृहत्याः सम्पद मपि अतिरेचयन्तीत्यनुषङ्गः ॥

"त्रयो वा इमेऽवाञ्चः प्राणाः"-इति यदुक्तम् ‡, तदप्यङ्गीकृत्य निराकरोति—"एकं ह्येवेत्यादिना। एतस्य प्राणस्य रूपम् 'एतद्रूपम्' एक मेव खलु, 'यदेतेऽवाञ्चः प्राणाः' प्रजननमूत्रपुरीषसर्गवृत्तिभेदेन त्रयोऽपि। किम्पुनस्तदित्याह— "योनिरेवेति। 'योनिः' स्थानं कारणम्। मूत्रपुरीषरेतसा मेक मेवैतद्रूपं कारण मनादृत्यापि कर्मविवक्षया आह— "प्रजापतिरेवेति। मूत्रपुरीषसर्गात्मना प्रजापतिरेकत्व मित्यर्थः। तदेवोपपादयति— "यद्धीति। 'यन्मूत्रं करोति', 'यत्' च 'पुरीषं करोति', 'तत् जायत एव' इति प्रजातिरूपेण त्रयाणा मप्येकत्वं सिद्ध मेवेत्यर्थः ॥ १५ ॥

पूर्व मुपक्षिप्ता मनुष्टुब्बृहत्योः सम्पद माह— "अथातः सम्पदेवेत्यादिना। 'वक्ष्यति'-इति शेषः। "अयꣳ सो अग्निः"-इत्यादिभिर्मन्त्रैरुपहिता अष्टौ पजुष्मत्यः, लोकम्पृणास्त्रयोदशेति 'एकविंशतिरिष्टकाः'। "नव यजूꣳषीति। अष्टाना मर्द्धबृहतीप्रभृतीनां यजुष्मतीना मष्टौ "अयं सो अग्नि रित्यादीनि §, लोकम्पृणाना मेकं "लोकं पृणेति ‖, एवम् नव। 'तत्' तत्र 'विंशत्'

---

* उत्तरस्यां कण्डिकायां ( ५४ पृ० ६ पं० ) द्रष्टव्यम्।

† द्वाविंशी कण्डी द्रष्टव्या ( ५६ पृ० १० पं० )।

‡ अनुपदं गतं द्रष्टव्य मिहैव ( ५४ पृ० ३ पं०, ६६ पृ० १ पं० )।

§ वा० सं० १२. ४७—५३। ‖ वा० सं० १२. ५४।

सङ्ख्या सम्पद्यते। 'सादनञ्च' यजुः "तया देवतयेति * सूददोहाश्च "ता अस्येति †। 'तत्' तेन 'द्वात्रिंशत्' 'अनुष्टुप्' द्वात्रिंशदक्षरा' 'सैषा' प्रसिद्धा 'अनुष्टुप्' गार्हपत्यचितौ सम्पन्ना द्रष्टव्या ॥ १६ ॥

एव मेक मनुष्टुभं सम्पाद्य अपरे द्वे अनुष्टुभावेव सम्पादयितुम् माह— "एकविंशतिर्वेवेति। 'उ, एव'-इति पदच्छेदः। 'परिश्रिषो श्रितः' एकविंशतिसङ्ख्या एव। यदुक्तं सूत्रकृता— "परिश्रिद्भिर्जुहूय परिश्रयति पूर्ववदेकविंशत्या चित स्थेति"-इति ‡। "यजुर्द्वाविंशा इति मिति। परिश्रिता मेवोपधाने विहितं "चितः स्थेति § 'व्युद्वात्' हनस्य यजुः'। "अपेत वीतेति ‖ त्रयोविंशम्। 'ऊषाः' तन्निवापाह— विहितं यजुः "सञ्ज्ञान मिति च द्वे ¶ चतुर्विंशपञ्चविंशे। 'सिकता तास्च' तन्निवापयजुः "अग्नेर्भस्मेति ** च द्वे षड्विंशसप्तविंशे। 'पुरीषस्कृत षञ्च' तन्निवापयजुश्च "इदं विश्वा इति †† द्वे अष्टाविंशैकोनत्रिंशे 'चतुर्भिः' यजुर्भिः "समित मित्यादिभिः ‡‡ उख्य मग्निं 'सन्निवनेगम पति', तत् सन्निवापस्त्रिंशः। "विमुञ्चति पञ्चमेनेति। "मातेव पुत्रं मिति §§ यजुषा विहितः शिक्यादुखाविमोक एकत्रिंशः। अग्निता सन्निवापोखाविमोकयोरुपयुक्तसङ्ख्यातः पातात् तत्सम्बद्धानि पञ्च यजूंष्यवशिष्टानीत्यभिप्रेत्य तेषां पञ्चाना मुपयोग माह— "ततस्मात् त्रिभिरिति। 'ततः' तेभ्यः पञ्चभ्यो यजुर्भ्यः 'त्रिभिः' यजुर्भिः

---

* वा० सं० १२. ५३. ३।
† वा० सं० १२. ५५।
‡ का० औ० सू० १७. १. ७।
§ वा० सं० १२. ४६. ३।
‖ वा० सं १२. ४५।
¶ वा० सं० १२. ४६. १।
** वा० सं० १२. ४६. २।
†† वा० सं० १२. ५६।
‡‡ वा० सं० १२. ५७—६०।
§§ वा० सं० १२. ६१।

एकदेशभूतैरेका द्वात्रिंशत्तमी सङ्ख्या। एवम् 'इयम्' इदानीं प्रतिपादिता 'द्वात्रिंशदक्षरानुष्टुप्', सम्पद्यत इति शेषः। 'सैषा' प्रसिद्धा द्वितीया 'अनुष्टुप्' ॥ १७ ॥

अथ वाग्रूपां तृतीया मनुष्टुभ माह— "अथैते द्वे इति। …स्तु मध्यमानुष्टुभि त्रीण्युपयुक्तानि, 'अथैते' ये अन्तिमे 'द्वे' …यजुषी' अवशिष्येते, 'सा' 'तु' पुनर्यजुर्द्वयात्मिका 'अनुष्टुबेव'। ननु …जुर्द्वयात्मिकाया अस्याः कथ मनुष्टुप्त्व मित्यत आह— "वाग् …इति। 'वाक्' खलु 'अनुष्टुप्'; "वागनुष्टुबित्यग्निरहस्ये श्रुतत्वात्*। यजुर्द्वयात्मिकानुष्टुबेकात्म्यप्रतिपादनाय वाचो द्विरूपता …माह— "तद्यदिदन्द्वय मिति। द्वय मेव द्वयात्मक मित्यर्थः। तदेव …धा विवृणोति— "दैवञ्चेत्यादिना। 'दैवं' देवसम्बन्धि वाक्यं 'संस्कृतम्, 'मानुषं' मनुष्यसम्बन्धि भाषामयं वाक्यञ्च;— 'उच्चैः' …तारस्वरं वाक्यम्, 'शनैः' मन्द्रस्वरञ्चेति। 'तदेते द्वे' इत्युपक्षिप्त…नेगमनम्। एवं तृतीयानुष्टुप् सम्पन्ना ॥ १८ ॥

प्रतिपादितानां तिसृणा मनुष्टुभा मुपयोगं विधत्ते— …ता वा एता इति। 'एषः' 'चितः' चित्या सम्पादितः गार्हपत्यः', 'ताः' प्रसिद्धाः 'एतास्तिस्रोऽनुष्टुभः' खलु, …सम्पादितानुष्टुप्त्रयात्मक इत्यर्थः। अनुष्टुप्त्रयसम्पादनस्य गार्हपत्यचितौ लोकत्रयसम्पादनहेतुता माह— "तद्यदेता इति। 'अत्र' गार्हपत्यचितौ यत् 'एतास्तिस्रः अनुष्टुभः' सम्पादयन्ति, वेदवादिन इति शेषः। 'तदा' आहवनीयचयनात् प्रागेवात्रैव गार्हपत्ये इमे सर्वे लोकाः' त्रयोऽपि 'भवन्ति'।

* उपरिष्टात् १० का० १ प्र० ३ ब्रा० १ का० "वाग्वा अनुष्टुप्"—इति।

कारणे कार्यस्यान्तर्गतत्वादुत्तरेऽग्नयोऽपि गार्हपत्ये एवान्तर्गार्हपत्य पृथिवीलोके चेतरौ लोकावन्तर्गतौ। "सोऽग्निना पृ व भ मिथुनꣳ समभवत् तत आण्डꣳ समवर्त्तत"–इति तत प्रन्तरि त्पत्तिश्रुतिः *। तासा मेव अनुष्टुभा मुपयोगान्तर मपि विधा "स "ततोऽन्यतरा मिति। तयोर्द्वात्रिंशदक्षरयोः अनुष्टभोर्मध्ये 'नुष्टुप् तराम्' एकाम् 'द्वात्रिंशदक्षरा मनुष्टुभं' बुद्धा विविच्य आहृत्वा स्थानं 'हरन्ति', अनुसन्धानाय हरेयुरित्यर्थः। 'सा' चामेण अनुष्टुप् आहवनीयचितिः, सैव द्युलोकः, तदेव चित्याग्नि रूपस्य प्रजापतेः 'शिरः' भवति। 'इह' अस्मिन् गार्ह ति। स्थाने 'अन्यतरा' एका द्वात्रिंशदक्षरा अनुष्टुप् 'परिशिष्यते', ः' एव 'गार्हपत्यः' अग्निरिति। चित्याग्निरूपस्य प्रजापतेः ाग्नी एव 'प्रतिष्ठा' पादौ। 'सः' एव 'अयं लोकः' भूलोकात्मि हित पौत्यर्थः ॥ १९ ॥ ुलोक

द्विसङ्ख्यायोगाद् गौणी या तृतीया अनुष्टुप्, तस्या अत णादे चादिरूपता माह—"अथ ये एते इति। आहवनीयगार्ह प्र चित्योर्मध्ये यदस्ति स्थान माग्नीध्रीयाख्यम्, एतदेव सा यज्ञ ग्न्या त्मिका अनुष्टुप्, 'तदेवान्तरिक्षम्' तृतीयानुष्टुबात्मकोऽय म्पाति रिक्षलोक इत्यर्थः। सैव आनुष्टुभस्य चित्याग्निरूपस्य प्रजा त्मम् 'आत्मा' मध्यदेहः। द्वात्रिंशदक्षराभ्यां पूर्वाभ्या अनुष्टु संस्कृ द्विसङ्ख्यायोगिन्यास्तृतीयस्या अनुष्टुभोऽल्पीयस्त्वात् तदात्मका "न ज्ञाना मल्पपरिमाणत्व माह— "तद्यत् ते द्वे भवत इत्यादि — "स यस्मात् तृतीया अनुष्टुप् द्विसङ्ख्यायोगिनी, तस्मात् तदा षः।

* ६ का० १. २. १. (६ भा० १५ पृ०) द्रष्टव्यम्।

गार्हपत्याहवनीययोरन्तरालं 'तनीयः' तनुतरम्, अल्पपरिमाण एव भवति। 'तस्मात्' एव कारणात् 'एषां लोकानां' मध्ये 'अन्तरिक्षलोकः' 'तनिष्ठः' सूक्ष्मतमो भवति ॥ २० ॥

"सैषा त्रेधा विहितेत्यादि। त्रिप्रकारेण विहिता 'सैषा अनुष्टुप्' 'वाक्' एव। 'ताः' 'एषः' उख्यः 'अग्निः' 'प्राणो भूत्वा अनुसञ्चरति' आहवनीयगार्हपत्याग्नीध्रीयाख्येषु स्थानेषु क्रमेण व्याप्नोति। तत्स्थानगतेऽग्नौ प्राणोदानव्यानवृत्त्यात्मना त्यार्यादिभेदेन तस्य व्याप्ति माचष्टे— "य आहवनीयेऽग्निरिति। 'आहवनीये' आहवनीयस्थाने निहितो 'यः अग्निः', 'सः' 'प्राणः' प्राणात्मकः, 'सोऽसावादित्यः' आदित्यात्मकश्च। 'आग्नीध्रीये' निहितस्तु व्यानात्मकः, वाय्वात्मकश्च। गार्हपत्ये निहितस्तु उदानात्मकः, पार्थिवाग्निरूपश्च। आहवनीयादीनां द्युलोकादिरूपत्वस्य प्रतिपादितत्वात् ऊर्ध्वमध्याधोदेशसम्बन्धेन प्राणादीनां तत्तदग्न्यात्मकता अवगन्तव्या।

प्रतिपादित मर्थं विदुषः फल माह— "एवंविदिति। अग्न्याद्यधिष्ठितलोकत्रयाणां प्रजापत्यात्मकत्वम्, गार्हपत्यचितौ सम्पादितास्वनुष्टुप्सु उदीरितरीत्या जानन् कृत्स्नां 'वाचम्' कृत्स्नम् 'प्राणम्', एतैरेव सर्वैः सम्पूर्णम् 'आत्मानम्' अग्निशरीरं संस्कुरुते' उत्पादयति ॥ २१ ॥

"अथो बृहतीसम्पद मिति * प्राक् सूचितां सम्पत्ति माह — "सैषेति। 'सैषा' गार्हपत्यचितिः 'बृहत्येव', सम्पद्यत इति शेषः। ता मेव सम्पत्तिं दर्शयति— "ये वा इति। 'ये' खलु

* एतस्मिन्नेव ब्राह्मणे १५ कण्डी द्रष्टव्या (५४ पृ०)।

पूर्वं मुक्ते द्वात्रिंशदक्षरे अनुष्टुभौ, तदुभयं मिलित्वा त्रिंशदेवात्र सम्पद्यते। अवशिष्टे 'द्वे यजुषी', 'अग्नि 'पञ्चविंशः' पञ्चविंशत्सङ्ख्यापूरकः॥

ननु षट्त्रिंशदक्षरा बृहतीति श्रुतेः इतः पर मपे भवितव्य मित्यत आह— "नाक्षरादिति। न चैकस्मादक्ष दविद्यमानात् 'छन्दः' 'व्येति' विगच्छति, अन्यथा भव 'न' च 'द्वाभ्याम्' अक्षराभ्याम्। एकेन द्वाभ्यां वा छन्दो न वैकल्यं प्राप्नोतीत्यर्थः। तथा चैषां पञ्चवि सङ्ख्यापि * बृहत्येवेति तत्सम्पत्तिरविरुद्धा। सङ्ख्यापूर्त्तिं दर्शयति— "स उ द्व्यक्षर इति। यः पञ्चविंशोऽग्नि खल्वक्षरद्वयवाच्यः, ततस्ताभ्या मग्निरित्यक्षराभ्यां सह त्रिंशत् सङ्ख्या सम्पद्यते; तथा च षट्त्रिंशदक्षरा बृ सम्पन्ना। अपि च 'एषः' आहवनीयस्थाने 'सञ्चि अग्निरपि 'बृहती मभिसम्पद्यते'। तत्र गार्हपत्यचि बृहतीसम्पत्तिरेव कारण मित्याह— "यादृग् वा इति 'योनौ' गर्भाशये यादृगाकारविशिष्टं 'रेतः' 'सिच्यते' त ग्रूप एवोत्पत्तिसमये 'जायते'; यथैव लोके, 'तत्' तथै त्रापि। योनिरूपायां गार्हपत्यचितौ 'यद्' यस्मात् 'एतां बृ करोति', 'तस्मात्' इत उत्पद्यमानः 'एषः सञ्चितः' अय म वनीयोऽग्निरपि † 'बृहती मभिसम्पद्यते'। तां सम्पत्तिं यज तीनां षष्ठ्युत्तरत्रिशतसङ्ख्यया दश बृहत्यः सम्पद्यत इति द काण्डे दर्शयिष्यामः॥ २२॥

* 'पञ्चत्रिंशत्सङ्ख्याया मपि'—इति ज।

† "'एष सञ्चितः' सद्दाग्निरपि"—इति ज।

गार्हपत्याग्नीध्रीयाहवनीयानां क्रमेण पृथिव्यन्तरिक्षद्युलोकात्मकत्वात् क्रमेणैव तेषां संस्कारो युक्त इत्याशङ्का व्युत्क्रमानुष्ठान मुपपादयति— "तदाहुरित्यादिना । "अन्तरिक्षं धिष्ण्या इति । गार्हपत्याहवनीययोरन्तरालवर्त्तिन आग्नीध्रीयादयो * धिष्ण्याः, ते अन्तरिक्षलोकात्मका इत्यर्थः । तत्र गार्हपत्यचयनानन्तर्यम् आहवनीयचितेराक्षिपति— "अन्तरिक्ष लोक इति । 'अस्माद् लोकात्' 'अन्तरिक्षलोकः' 'अनन्तर्हितः' प्रत्यासन्नः । तथा च गार्हपत्यचयनानन्तरं धिष्ण्यनिवपन मकृत्वा 'अथ कस्मात्' हेतोराहवनीयचयन मेव क्रियते । 'अथ' अनन्तर मेव 'धिष्ण्यान्' चिनोतीत्यनुषज्यते । इत्थ मनुष्ठाने कारणं वक्तु माह— "सह हैवेमा मिति । 'अग्रे' पुरा 'इमौ' भूस्वर्गाख्यौ 'लोकौ' 'सहासतुः' । 'तयोः' 'वियतोः' विविधं गच्छतोः वियुज्यमानयोः 'यः' मध्ये 'आकाशः' अवकाशः 'आसीत्', 'तदन्तरिक्ष मभवत्' । 'ततः पुरा' द्यावापृथिव्योर्विगमनात् पूर्वम् 'ईक्षम्' इति आकाशस्य 'नाम'; द्यावापृथिव्योर्विश्लेषे सति 'अन्तरा' तयोर्मध्ये खलु 'इद मीक्ष मभूत्' । 'इति' हेतौ; यस्मादेवं तस्मादिद माकाश मन्तरिक्षनामकं सम्पन्न मित्यर्थः ॥

"तद् यद् गार्हपत्य मित्यादि । एव मन्तरिक्षनिष्पत्तेर्लोकद्वयानन्तरभावित्वाद् गार्हपत्यचयनानन्तर मन्तरिक्षसंस्थान् धिष्ण्यानतिक्रम्य 'आहवनीयं' 'चिनोति' चयनेन संस्करोतीति । 'यत्' यस्मात् तौ भूस्वर्लोकौ 'अग्रे' खलु सह

---

* 'आग्नीध्रीयाः'—इत्येव ज ।

'असृज्येतां' सृष्टावभवताम्, 'अथ' आहवनीयचयनानन्तरं 'प्रत्येत्य' प्रतिनिवृत्त्य सदसि 'धिष्ण्यान्' 'निवपति' निर्मिमीते । अ प्रयोजन माह— "कर्मण एवेति । तत्र धिष्ण्यानां निवप कर्मणः क्रियाकलापस्य 'अनन्तरयाय' अविच्छेदायैव भवति न त्वनेन किञ्चित् संस्कर्त्तव्य मस्तीत्याह— "अथो इति अपि च उभयोः 'अन्तयोः' आहवनीयगार्हपत्ययोश्चयनेन 'संस्क्रि माणयोः' 'मध्यम्' अपि स्थलं 'संस्क्रियते', तेनैव संस्कारेण संस्कृ मेव भवति ; तस्माद् गार्हपत्यचयनानन्तर माहवनीयस्यैव चयनं पश्चाद्धिष्ण्याना मिति क्रमः सिद्ध इति भावः ॥ २३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं क्षपावान् गुडकृत मजडो राजतं राजपूज्यः ।

आज्यौत्थं प्राज्यजन्मा लवणज मतृण: शर्करं चार्कतेजा:,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्य: * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे प्रथमोऽध्याय: समाप्त: ॥ १ ॥

---

* अत्रत्याष्टीप्यन्य: पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टया: ।

(अथ द्वितीयाध्यायस्य प्रथमं ब्राह्मणम्.)

---

अथातो नैर्ऋतीर्हरन्ति । एतद्वै देवा गार्हपत्यं चित्वा समारोहन्नयं वै लोको गार्हपत्य इममेव तं लोकꣳ संस्कृत्य समारोहंस्ते तम एवानतिदृश्य मपश्यन् * ॥ १ ॥

ते ऽब्रुवन् । उप तज्जानीत यथेदं तमः पाप्मान मपहनामहा ऽइति तेऽब्रुवंश्चेतयध्व मिति चिति मिच्छतेति व्वाव तदब्रुवंस्तदिच्छत यथेदं तमः पाप्मान मपहनामहा ऽइति ॥ २ ॥

ते चेतयमानाः । एता इष्टका अपश्यन् नैर्ऋतीस्ता उपादधत ताभिस्तत्तमः पाप्मान मपाघ्नत पाप्मा वै निर्ऋतिस्तद्यदेताभिः पाप्मानं निर्ऋति मपाघ्नत तस्मादेता नैर्ऋत्यः ॥ ३ ॥

तद्वा ऽएतत् क्रियते । यद्देवा अकुर्व्वन्निदं नु तत् तमः स पाप्मा देवैरेवापहतो यत्त्वेतत् करोति यद्देवा अकुर्व्वंस्तत् करवाणीत्यथो य एवं

---

* 'मपश्यन्'—इति ग, घ।

पाप्मा या निर्ऋतिस्त मेताभिरपहते तद्यदेताभिः पाप्मानं निर्ऋति मपहते तस्मादेता नैर्ऋत्यः ॥ ४ ॥

यद्वेवैता नैर्ऋतीर्हरन्ति। प्रजापतिं व्विस्रस्तं यत्र देवाः समस्कुर्व्वंस्त मुखायां योनौ रेतो भूत मसिञ्चन्योनिर्व्वा ऽउखा तस्मा ऽएताᳬ संवत्सरे प्रतिष्ठाᳬ समस्कुर्व्वन्निम मेव लोक मयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयंस्तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपाघ्नंस्तद्यदस्यैताभिः पाप्मानं निर्ऋति मपाघ्नंस्तस्मादेता नैर्ऋत्यः ॥ ५ ॥

तथैवैतद्यजमानः। आत्मान मुखायां योनौ रेतो भूतᳬ सिञ्चति योनिर्व्वा ऽउखा तस्मा ऽएताᳬ संव्वत्सरे प्रतिष्ठाᳬ संस्करोतीम मेव लोक मयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्रजनयति तस्य यः पाप्मा यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपहन्ति तद्यदस्यैताभिः पाप्मानं निर्ऋति मपहन्ति तस्मादेता नैर्ऋत्यः ॥ ६ ॥

पादमात्र्यो भवन्ति। अधस्पद मेव तत्

पाप्मानं निर्ऋतिं कुरुतेऽलक्षणा भवन्ति यद्
नास्ति तदलक्षणमसन्तमेव तत् पाप्मानं नि
र्ऋतिं कुरुते तुषपक्वा भवन्ति नैर्ऋता वै तुष
नैर्ऋतैरेव तन्नैर्ऋतं कर्म्म करोति कृष्णा भवन्ति
कृष्णाᳪ हि तत्तम आसीदथो कृष्णा वै नि
र्ऋतिः ॥ ७ ॥

ताभिरेतां दिशं यन्ति। एषा वै नैर्ऋती
दिङ् नैर्ऋत्यामेव तद्दिशि निर्ऋतिं दधाति स
यत्र स्वकृतं वेरिणᳪ श्वभ्रप्रदरो वा स्यात्तदेता
उपदध्याद्यत्र वा ऽअस्या ऽअवदीर्यते यत्र वास्या
ऽओषधयो न जायन्ते निर्ऋतिर्ह्यास्यै तद् गृह्णाति
नैर्ऋत ऽएव तद्भूमेर्निर्ऋतिं दधाति ताः पराची
र्लोकभाजः कृत्वोपदधाति ॥ ८ ॥

असुन्वन्तमयजमानमिच्छेति। यो वै न
सुनोति न यजते तं निर्ऋतिर्ऋच्छति स्तेन
स्येत्यामन्विहि तस्करस्येति स्तेनस्य चेत्यामन्वि
हि तस्करस्य चेत्येतदथो यथा स्तेनस्तस्करः प्र
लायमेत्येवं प्रलायमिहीत्यन्यमस्मदिच्छ सा त

ऽइत्येत्यनित्यं व्विद्वाᳪस मिच्छेत्येतन्नमो देवि नि-
ऋते तुभ्य मस्त्विति नमस्कारेणैवैना मपह्नुते ॥ ८ ॥
नमः सु ते निऋते तिग्मतेज इति। तिग्म-
तेजा वै निऋतिस्तस्या ऽएतन्नमस्करोत्ययस्मयं
व्विचृता बन्ध मेत मित्ययस्मयेन ह वै तं बन्धेन
निऋतिर्बध्नाति यं बध्नाति यमेन त्वं यम्या
संव्विदानेत्यग्निर्वै यम इयं यम्याभ्याᳪ हीदᳪ
सर्व्वं यत माभ्यां त्वᳪ संविदानेत्येतदुत्तमे नाके
ऽअधि रोहयैन मिति स्वर्गो वै लोको नाकः स्वर्गे
लोके यजमान मधिरोहयेत्येतत् * ॥ १० ॥
यस्यास्ते घोर ऽआसन् जुहोमीति। घोरा
वै निऋतिस्तस्या एतदासन् जुहोति यत् तद्दे-
वत्यं कर्म्म करोत्येषां बन्धाना मवसर्ज्जनायेति ये-
र्बन्धैर्बद्धो भवति यां त्वा जनो भूमिरिति प्र-
मन्दत ऽइतीयं वै भूमिरस्यां वै स भवति यो
भवति निऋतिं त्वाहं परिवेद व्विश्वत इति
निऋतिरिति त्वाहं परिवेद सर्व्वत इत्येतदियं

---

* 'मधिरोहयेत्येतत'—इति ग, घ।

वै निर्ऋतिरियं वै तं निरर्पयति यो निर्ऋच्छ
तद्यथा वै ब्रूयादसावामुष्यायणोऽसि व्वेद
मा मा हिꣳसीरित्येव मेतदाह नतराꣳ हि
दित आमन्त्रितो हिनस्ति ॥ ११ ॥

नोपस्पृशति। पाप्मा वै निर्ऋतिर्नेत् पाप्म
सꣳस्पृशा ऽइति न सादयति प्रतिष्ठा वै स
दन नेत्पाप्मानं प्रतिष्ठापयानीति न सूददोहसाभि
वदति प्राणो वै सूददोहा नेत्पाप्मानं प्राणे
सन्तनवानि सन्दधानीति ॥ १२ ॥

ता हैके परस्तादर्व्वाचीरुपदधाति। पाप्म
वै निर्ऋतिर्नेत् पाप्मानं निर्ऋति मन्ववायामेति
तथा कुर्यात् पराचीरेवोपदध्यात् पराञ्च मेव त
पाप्मानं निर्ऋति मपहते ॥ १३ ॥

तिस्र इष्टका उपदधाति। त्रिवृदग्निर्यावा
नग्निर्यावत्यस्य मात्रा तावतैव तत् पाप्मानं नि
र्ऋति मपहते * ॥ १४ ॥

अथासन्दीꣳ शिक्यꣳ। रुक्मपाश मिण्ड्वं त

* 'मपहते'— इति ख।

परार्द्धे न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशा-
देव तत् प्रमुच्यते यं ते देवी निर्ऋतिराबबन्ध
पाशं ग्रीवास्वविचृत्य मित्यनेवंविदुषा ह्यविचृत्यस्तं
ते विष्याम्यायुषो न मध्यादित्यग्निर्वा ऽआयुस्तस्यै-
तन्मध्यं यच्चितो गार्हपत्यो भवत्यचित आहवनीय-
स्तस्माद्यदि युवाग्निं चिनुते यदि स्थविर आयुषो
मध्यादित्येवाहाथैतं पितुमद्धि प्रसूत इत्यन्नं
पितुरथैतदन्नमद्धि प्रमुक्त इत्येतत् त्रिष्टुभि-
र्वज्रो वै त्रिष्टुब् वज्रेणैव तत् पाप्मानं निर्ऋति
मपहते ॥ १५ ॥

तिस्र इष्टका भवन्ति । आसन्दी शिक्यं
रुक्मपाश इण्ड्व तदष्टावष्टाक्षरा गायत्री गायत्रो-
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत् पा-
प्मानं निर्ऋति मपहते ॥ १६ ॥

अथान्तरेणोदचमसं निनयति । वज्रो वा
ऽआपो वज्रेणैव तत् पाप्मानं निर्ऋति मन्तर्द्धत्ते
नमो भूत्यै येदं चकारेत्युपोत्तिष्ठन्ति भूत्यै वा
ऽएतदग्रे देवाः कर्म्माकुर्व्वत तस्या ऽएतन्नमोऽकु-

र्व्वन् भूत्वा ऽउ एवाय मेतत् कर्म्म कुरुते तस्
ऽएतन्नमस्करोत्यप्रतीच्च मायन्त्यप्रतीच्च मेव तत् पा
प्मानं निर्ऋतिं जहति ॥ १७ ॥

प्रत्येत्याग्नि मुपतिष्ठते। एतद्वा ऽएतद्यथा
यथं करोति यदग्नौ सामिचित ऽएतां दिश मेि
तस्मा ऽएवैतन्निह्नुतेऽहिꣳसायै ॥ १८ ॥

यद्वेवोपतिष्ठते। अयं वै लोको गार्हपत्य
प्रतिष्ठा वै गार्हपत्य इय मु वै प्रतिष्ठायैतदप
मिवैति यदेतां दिश मेति तद्यदुपतिष्ठत ऽइम
मेवैतत् प्रतिष्ठा मभिप्रत्यैत्यस्या मेवैतत् प्रति
ष्ठायां प्रतितिष्ठति ॥ १९ ॥

निवेशनः सङ्गमनो व्वसूना मिति। निवे
शनो ह्ययं लोकः सङ्गमनो व्वसूनां व्विश्व
रूपाभिचष्टे शचीभिरिति सर्व्वाणि रूपाण्यभिच
शचीभिरित्येतद्देव इव सविता सत्यधर्म्मेन्द्र
न तस्थौ समरे पथीना मिति यथैव यजुस्त
बन्धुः ॥ २० ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [२. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे , त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथाख्यायिकया प्रयोजनप्रतिपादनपुरःसरं नैर्ऋतीना मिष्टकाना मुपधानं विधित्सुस्तासां हरणं सङ्ग्रहेण प्रतिजानीते— "अथात इति । 'अथ' गार्हपत्यचयनानन्तरम् 'अतः' अस्मात् स्थानात् निर्ऋतिदेवताकाः इष्टकाः 'हरन्ति', नैर्ऋत्यां दिशि निरस्येयुरित्यर्थः । तासा मुपधानस्य प्रयोजन माख्यायिकयाचष्टे— "एतद्वा इति । 'एतद्' एतस्मिन् खलु गार्हपत्यचयनानन्तरकाले 'देवाः' 'समारोहन्' सम्प्राप्नुवन् । एतदेव विवृणोति— "अयं वा इति । "ते तम एवेति । चयनेन संस्कृतं भूलोक मारूढाः 'ते' 'अनतिदृश्यम्' दृश्यमतिक्रम्य द्रष्टु मशक्यं सर्ववस्त्वाच्छादकम् पापरूपं 'तम एव' सर्वत्र अपश्यन्नित्यर्थः ॥ १ ॥

"तेऽब्रुवन्निति । "उप तज्जानीतेति । उपेत्य तत् तमोऽपहन्तु मुपायं विचारयतेत्यर्थः । "तमः पाप्मान मिति । तमोरूपं पाप्मानं चेतयध्व मितीच्छार्थे णिजिति* व्याचष्टे—"चिति मिच्छतेतीति । चितिं पापहननसाधन मिष्टकानां चयन मिच्छतेत्यर्थः । "तदिच्छतेति । हे देवाः ! 'तत्' चयनम् 'इच्छत', 'यथा' येन चयनेन 'इदं' तमोरूपं पापं नाशयेमेत्यर्थः ॥ २ ॥

"ते चेतयमाना इति । चिति मिच्छन्त इत्यर्थः । "पाप्मा वै निर्ऋतिरिति । दक्षिणापरदिगधिदेवता सा 'पाप्मा

* पा० सू० ३. १. ८ ।

वै' पापरूपैव। एतत्तादात्म्य मुपजीव्य पापापहतिहेतुभूता-मिष्टकानां 'नैर्ऋत्यः'-इति नाम निर्वृत्तम्। "तद्यदेताभिरि-'अपाघ्नत' अनाशयन् ॥ ३ ॥

इत्य माख्यायिकया नैर्ऋतीनामप्रधानस्य पापरूपतमोनि-त्यर्थतां प्रतिपाद्य, इदानीन्तनानुष्ठानस्यापि तदर्थता माह- "तद्वा एतत् क्रियत इति। 'तत्' खलु 'एतत्' इदानीं य-मानेन 'क्रियते', 'यद्देवाः' पुरा 'अकुर्वन्'। यथा 'देवैः' 'अ-हतः' नाशितः तमोरूपः 'स पाप्मा', इदानी मप्यनुष्ठा-निवर्त्तते। "यत्त्वेतदिति। 'यत्' खलु 'एतद्' यजमा-अनुतिष्ठति, देवैर्यत् कृतम्, 'तत्' अह मपि 'करवाणि' 'इति' अनेनाभिप्रायेण तदनुष्ठीयत इत्यर्थः। न केवल म-करणमात्रं तथाविधफलसाधन मपीत्याह— "अथो इति। -मर्थ मनूद्य नैर्ऋतीना मिष्टकाना मपहन्तृत्वद्वारा नाम नि-—"तद्यदेताभिरिति ॥ ४ ॥

प्रयोजनान्तरं वक्तुं नैर्ऋतीनां हरण मनुवदति— "य-वैता इति। 'यत् उ एव' यस्मादेव प्रयोजनान्तरात् 'ए-नैर्ऋतीः' इष्टकाः 'हरन्ति', तदुच्यत इति शेषः। आख्या-यिकया तत् प्रतिपादयति— "प्रजापतिं विस्रस्त मिति। य-खलु 'देवाः' 'विस्रस्तं' विश्लिष्टावयवं 'प्रजापतिं' 'समस्कुर्वन्' पुनरजनयन्, तदा 'तम्' प्रजापतिम्, उखालक्षणायां 'योनौ' उख्याग्निरूपेण 'रेतोभूतम् असिञ्चन्'। "योनिर्वा उखेति उख्याग्नेस्तत उत्पत्तेः। "तस्मा एता मिति। 'तस्मै' प्रजा-पतये 'संवत्सरे' उख्याग्निभरणेन नीते सति 'एतां प्रतिष्ठां' प्रतितिष्ठत्यनेनेति पादद्वयं प्रतिष्ठा; भूलोकात्मकं पाद-

प्राजनयन्नित्यर्थः । ननु संवत्सरे अतिक्रान्ते गार्हपत्य एव चीयते, न भूलोकस्योत्पत्तिरित्याशङ्क्य तयोस्तादात्म्य माह— "अय वै लोक इति । "तस्मिन्नेन मिति । 'तस्मिन्' भूलोकात्मके गार्हपत्ये 'एनं' प्रतिष्ठारूपं प्रजापत्यवयवं 'प्राजनयन्' उदपादयन् । 'तस्य' प्रजायमानस्य 'यः पाप्मा' शरीरे लिप्तः, 'यः श्लेष्मा', 'यत्' च 'उल्वं' गर्भवेष्टनम्, 'यत्' च जराय्वाख्यं गर्भस्य बाह्यवेष्टनम्, 'तत्' सर्व्वं पापरूपम् 'अस्य' प्रजापतेः 'एताभिः' इष्टकाभिः 'अपाघ्नन्' अपहतवन्तः । अत्रापि पूर्ववन्नामनिर्वचनं करोति— "तद्यदस्येति ॥ ५ ॥

इतिहाससिद्ध मर्थं दृष्टान्तीकृत्य दार्ष्टान्तिके योजयति— "तथैवैतदिति । यथा प्रजापति मुदीरितरीत्या देवाः समस्कुर्वन्, तथैवेदानीं यजमानोऽपि प्रजापतिरूप मात्मानम् "उखाया मित्यादि पूर्ववद् योज्यम् * ॥ ६ ॥

इत्थं पापरूपस्य तमसः, गर्भसम्बन्धिश्लेष्मादिरूपस्य च पाप्मनो निर्हरणहेतुत्वेन नैर्ऋतीरिष्टकाः प्रशस्य, तासां लक्षण माह— "पादमात्र इति । विंशत्यधिकशताङ्गुलिपरिमितः पुरुषः, तस्य दशमोंऽशः पादः, स प्रमाणं यासां ताः 'पादमात्राः' । तदुक्तं कात्यायनेन— "पञ्चारत्निर्दशवितस्त्विविंशतिशताङ्गुलः पुरुषः, तस्य दशमेन पादमात्रो भवति" -इति † । तत् परिमाणं प्रशंसति— "अधस्पद मेवेति । 'एतत्' एतेन नैर्ऋतीनां पादमात्रपरिमाणकरणेन 'अधस्पदं' पादस्याधस्तादेव निर्ऋतिरूपम् 'पाप्मानं' कृतवान् भवतीत्यर्थः ।

* एतत्पूर्वस्या मेव कण्डिकायां ( ८४ पृ० ) द्रष्टव्यम् ।
† का० श्रौ० सू० १६. ८. २१ ।

एतेन पादमात्र इत्यत्र * पादशब्दोऽङ्घ्रिपर्यायः , न तु चतुर्थ
वाचक इति व्याख्यातं भवति। धर्मविशेषं विधत्ते — "अलक्ष
भवन्तीति। आलिखितादिकं लक्षणम् , तद्रहिता भवेयुरित्य
एतदुपपादयति— "यद्वै नास्तीति। 'यत्' खल्वभावप्रतियो
'तत्' निस्स्वरूपत्वाद् 'अलक्षणं' व्यावर्त्तकचिह्नरहितम् ; अतोऽ
लक्षणकरणेन 'निर्ऋतिं' पाप्मानम् 'असन्तम्' अभावप्रतियो
मेव करोति। ननु पाके सतोष्टकान्तरलक्षणवत्त्व मासां म
नीय मित्याशङ्क्य, तासां पाकप्रकार माह— "तुषपक्वा भ
न्तीति। तुषैः पक्वाः 'तुषपक्वाः'। पचेः कर्मणि क्तः, "पचो व
इति † निष्ठातकारस्य वत्वम्। तत् प्रशंसति— "नैर्ऋता
इति। दर्शपूर्णमासप्रकरणे "अथ तुषान् प्रहन्त्यपहतꣳ रक्ष इति
इति ‡ रक्षःसम्बन्धस्य समाम्नातत्वात् तुषाणां नैर्ऋतत्वम्। ता
कार्ष्ण्यं विधत्ते—"कृष्णा भवन्तीति §। ताः तिस्र इष्टकाः कृ
वर्णाः। तत्र कारण माह— "कृष्णं होति। अपहन्तव्यस्य तम
कृष्णवर्णत्वात् तदभिमानिन्या निर्ऋतिदेवतायाश्च तादृग्व
त्वादित्यर्थः ॥ ७ ॥

तासा मुपधानार्थं दिग्विशेष मभिनयेन दर्शयति— "ता
रेता मिति। 'एतां' दक्षिणापरां दिशं 'ताभिः' य
'यन्ति' गच्छेयुः। 'एषा' खलु 'नैर्ऋतीः' निर्ऋतिदेवताधिष्ठि
'दिक्'। तथा सति स्वकीयदिश्येवैतां 'निर्ऋतिं' 'दधा

---

* 'पादमात्र इत्यत्र'—इति च, ज।

† पा० सू० ८. २. ५२।

‡ शत० ब्रा० १. ४. २१ (१ भा० ७६ पृ० ८ पं०)।

§ का० श्रौ० सू० १७. १. २३।

थापयति । तत्रापि देशविशेष माह— "स यत्रेति । 'सः' अध्वर्युः नैर्ऋत्यां दिशि 'यत्र' यस्मिन् स्थाने 'स्वकृतं' स्वय मेव सञ्जातम् 'इरिणं' निस्तृणम् , ऊषरस्थानं वा भवति *, 'श्वभ्रप्रदरो वा', श्वभ्राकारेण प्रदीर्णः प्रदेशो भवेत् , 'तत्' तस्मिन् स्थाने 'एनाः' नैर्ऋतीः 'उपदध्यात्' । तादृक्स्थानस्य निर्ऋतिदेवताधिष्ठितत्व माह— "यत्र वा इति । 'यत्र' खल्वस्याः पृथिव्याः सम्बन्धिनि स्थाने आत्मा 'अवदीर्यते' भिद्यते, यत्र वा ऊषरस्थाने 'ओषधयो न जायन्ते', तदेतत् स्थानद्वयं निर्ऋतिगृहीतम् ; तथा च निर्ऋतिसम्बद्धे स्थाने एव नैर्ऋतीना मुपधानेन निर्ऋतिं स्थापितवान् भवति । धर्मविशेषं विधत्ते— "ताः पराचीरिति †। पराञ्चनाः स्वस्थानभिमुखा यथा भवन्ति तथा 'लोकभाजः' स्थानभाजः 'कृत्वा' 'ताः' इष्टका उपदध्यात् । एतच्च पराक्त्व मग्रे प्रतिपादयिष्यति ॥ ८ ॥

तत्र तिसृणा मिष्टकानां त्रयो मन्त्राः, तान् क्रमेण प्रदर्शयन् व्याचष्टे— "असुन्वन्त मयजमान मित्यादिना ‡। "यो वै न सुनोतीति । 'यः' पुरुषः सोमाभिषवं न करोति, यश्च दर्शपूर्णमासादिभिर्हविर्यज्ञैः 'न यजते', 'तं' 'निर्ऋतिः' पापदेवता 'ऋच्छति' प्राप्नोति । तस्मान्निर्ऋतिं सम्बोध्य "असुन्वन्त मयजमान मिच्छेति § मन्त्रपाठो युक्त इत्यर्थः ।

"स्तेनस्य चेत्या मिति । प्रच्छन्नचोरस्तेनः, प्रत्यक्षं परेषां

---

* 'इरिणं निस्तृण मूषरस्थानम्'—इत्येव ज-पुस्तके ।

† का० श्रौ० सू० १७. २. १ ।

‡ वा० सं० १२. ६२, ६३, ६४ ।

§ वा० सं० १२. ६२ ।

धन मपहरति यः स तस्करः ; अनयोः परस्परविलक्षणत्व अविद्यमान मपि 'च'-शब्द मध्याहृत्य योजयति। स्तेन तस्करस्य च या 'इत्या' गतिः, "सञ्ज्ञायां समजेत्यादिना "इण् गतौ"-इत्यस्माद् † भावे क्यप्। तां गतिं हे निर्ऋ त्वम् 'अन्विहि' अनुगच्छ। एतदेव विवृणोति--"अथो इति अपि च यथा स्तेनः तस्करश्च 'प्रलायं' प्रलीय अदृश्यो भूत्व 'एति' गच्छति। प्रलाय मिति णमुलन्तः ‡। 'एवं' निर्ऋ त्व मपि प्रलयन मदर्शनम् 'इहि' गच्छेति मन्त्रभागस भिप्रायः। "अनित्थंविद्वांस मिति। 'इत्थम्' अनेन प्रकारेण मर्थं यो न वेत्ति, सोऽनित्थंविद्वान् अत्रान्यशब्देन विवक्षि इत्यर्थः। हे निर्ऋते! अस्मत्तः 'अन्यं' त्वत्स्वरूपानभिज्ञम् 'इच्छ सा तादृशो अविद्वद्विषयैव खलु 'ते' तव 'इत्या' गतिरिति म भागस्यार्थः। "नमस्कारेणेवेति। "नमो देवि निर्ऋते"-इत्यन्ति पादे नमस्कारप्रतिपादनात् तेनैव नमस्कारेण 'एनां' निर्ऋति 'अपहते' अपबाधते अपसारयतीत्यर्थः॥ ९॥

"नमः सु ते इति। द्वितीयो मन्त्रभागः। तत्र तिग्म तेज इति विशेषणस्य प्रसिद्धि माह— "तिग्मतेजा वै इति तिग्मं तीक्ष्णं तेजो यस्याः सा तिग्मतेजाः, हे तिग्मते निर्ऋते! 'ते' तुभ्यं नमोऽस्त्विति तस्यार्थः। द्वितीयपा मनूद्य व्याचष्टे— "अयस्मयेनेति। अयसा लोहेन निर्मि बन्धोऽयस्मयः। विकारार्थे मयट् § तादृशेन खलु बन्धे

* पा० सू० ३. ३. ९।
† अदा प० ४० धा०।
‡ पा० सू० ३. ४. २२ इत्यादि द्रष्टव्यम्।
§ पा० सू० ४. ३. १४३।

'निर्ऋतिस्तं बध्नाति' यं बन्धनीयं मन्यते। हे निर्ऋते! 'अयस्मय मेतं बन्धं विचृत' विमुञ्चेति प्रार्थना युक्ता। यम-यमीशब्दयोर्विवक्षित मर्थ माह— "अग्निर्वै यम इति। अन्तः-प्रविष्टः सन् कृत्स्नजगन्नियमनाद् 'अग्निर्यमः'; तदधिष्ठित-त्वात् 'इयं' पृथिव्येव 'यमो'; इय मपि हि आश्रितं सर्वं जगन्निय-च्छति। तथा 'आभ्यां' यमेनाग्निना, यम्या पृथिव्या च 'संवि-दाना सञ्जानाना 'त्वम्'। इति तृतीयभागस्यार्थः।

चतुर्थं पाद मनूद्य व्याचष्टे— "उत्तमे नाक इति। कं सुखम्, न कम् अकं दुःखम्, तदस्मिन् नास्तीति 'नाकः' स्वर्गाख्यो लोकः। उक्तं हि—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्त मनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदाभिधम्"-इति।

सिद्ध मन्यत् ॥ १० ॥

"यस्यास्त इति। तृतीयो मन्त्रः *। तत्र प्रथमपादस्य तात्पर्य माह— "घोरा वा इति। 'निर्ऋतिः' पापदेवतात्वात् पापस्य च दुःखहेतुत्वाद् 'घोरा' तीव्रा दुःसहा। तथा च 'तद्देवत्य मेतत् कर्म करोति' इति यत्, 'एतत्' एतेन 'तस्याः' निर्ऋतेः 'आसन्' आस्ये 'जुहोति' प्रक्षिपति। एवञ्च प्रथमपादस्याय मर्थः— हे घोरे निर्ऋते! यस्याः तव आस्ये जुहोमि, तान्त्वा मित्युपरि सम्बन्धः।

द्वितीयपाद मनूद्य एषा मिति इदंशब्दनिर्द्देश्य माह— "येर्बन्धैरिति। शिक्यपाशरुक्मसूत्रादिभिर्यैः बन्धनैः दुःखहेतुभिः

---

* वा० सं० १२. ६४।

'बद्धो भवति' यजमानः, 'एषां बन्धानां' निर्ऋतिव हेतुभूतानां पापानाम् 'अवसर्ज्जनाय' विश्लेषणाय जुहोमी सम्बन्धः।

तृतीयपाद मनूद्य, तत्र भूमिरिति विशेषणस्य तात्प माह—"यां त्वेति। हे निर्ऋते! 'जनः' लोकः 'यान्त्वां' 'भूमि भवनहेतुः समृद्धिहेतुर्वा 'इति' 'प्रमन्दते' स्तौतीति तस्य पा स्वार्थः। "इयं वा इत्यादि। 'इयं' खलु पृथिवी निर्ऋतिः 'भूः' भवनहेतुः। कुत एतदित्याह— "अस्यां वा इति। भवति' उत्पद्यते, समृध्यते वा, 'सः' 'अस्यां' पृथिव्या माधा भूतायां खलु 'भवति'। तस्माद् भवनाधिकरणत्वाद् भूमिरि नाम्ना त्वं स्तूयस इत्यर्थः।

जनवाद मुपन्यस्य, स्वस्य विशेषज्ञतां चतुर्थपादेनाह- "निर्ऋतिं त्वेति। अत्र विश्वशब्दः सर्वशब्दपर्याय एव, तु जगद्वाचीत्यभिप्रेत्य व्याचष्टे— "निर्ऋतिरितीति। मर्थः,— तृतीयपादे भूमिशब्दादुत्तरत्वेन पठितः 'इति'-शब्द ऽत्रानुषज्यते। 'अहं' पुनः 'त्वां' 'निर्ऋतिः' सर्वतो निरण हेतुः आर्त्तिकारणम् * 'इति' 'परिवेद' परितो जानामि एवं निर्ऋतिं त्वेति द्वितीयान्तं निर्ऋतिपद मितिशब्द नुषञ्जनेन व्याख्यायैतदुपपादयति— "इयं वा इति। नि:शेषेण 'ऋच्छति' आर्त्तिं प्राप्नोति, 'तं' पुरुषम् 'इयम्'

* "निर्ऋतिः कृच्छ्रापत्तिः स्यादलक्ष्मीस्तु निर्ऋतिः (अम० को १. २. १३.)"—इत्यभिधानात्, भूमिर्वा निर्ऋतिः, दिगभिमानि देवता वा; 'अलक्ष्म्यां दिक्पतौ चापि निर्ऋतिर्निरुपद्रवे'—इ कोशात्'—इति महीधरः।

देवता 'निरर्पयति' निर्ऋतं प्रयुङ्क्ते। निरुपपदात् ऋच्छतेः प्रयोजकव्यापारे णिचि * "अर्त्तिह्रीत्यादिना † पुक्। अतो निरर्पणादिय मेव पृथिवी निर्ऋतिरित्युच्यते। अतो भवत्याः स्वरूपं सम्यगहं जानामीत्यर्थः।

एतज्ज्ञानस्य सदृष्टान्तं प्रयोजन माह— "तद्यथेति। 'तत्' तत्र अरण्यादौ चोरादिष्वागतेषु, असौ त्व मेतन्नामासि, अमुष्य यज्ञदत्तस्य पुत्रोऽसि, अतस्त्वा महं जानामि, मां 'मा हिंसीः' मा वधिष्ठाः 'इति' आगतं प्रति यथोच्यते, एव मेव खल्वेतं "निर्ऋतिं त्वाह मित्यादिना निर्ऋतेः स्वरूपप्रतिपादनम्। नामग्रहणस्य फल माह— "नतरा मिति। 'विदितः' ज्ञातो नामगोत्रादिना, 'आमन्त्रितः' आहूतः, चोरादिः आत्मीयत्वेनाह्वातारं पुरुषं 'नतराम्' अतिशयेन नैव 'हिनस्ति' बाधते; एव मेव निर्ऋतिनामग्रहणादेनं यजमानं निर्ऋतिर्न बाधत इत्यर्थः॥ ११॥

उपस्पर्शनसादनसूददोहसा मिष्टकान्तरवदासु प्रसक्तानां ‡ निषेधं करोति— "नोपस्पृशतीत्यादिना §। उपहिताया इष्टकायाः प्रथम मुपस्पर्शनं कर्त्तव्यम्, पश्चात् "तया देवतयेति ‖ सादनम्, ततः "ता अस्येति मन्त्रेण सूददोहसाधिवदनम् ¶;

---

* पा० सू० १. ४. ५५।

† पा० सू० ७. ३. ३६।

‡ का० श्रौ० सू० १७. १. २३।

§ का० श्रौ० सू० १७. २. ३।

‖ वा० सं० १२. ५३. १।

¶ वा० सं० १२. ५५।

तदेतत् त्रितय मत्र न कर्त्तव्यम्। पापसंसर्गो मा भूदित्य- भिप्रायः। सन्तनवानीत्यस्य विवरणं सन्दधानीति। अन्यद्वि- गदसिद्धम् ॥ १२ ॥

तासा मुपधाने प्रकारद्वय माह— "ता हैक इत्यादिना *। 'एके' शाखिनः 'ताः' नैर्ऋतीष्टकाः 'परस्ताद्' विप्रकृष्टाद्देशादारभ्य 'अर्वाचीः' आत्माभिमुख मुत्तरोत्तर मात्माभिमुखीः 'उपदधाति'। तेषा मभिप्राय माह— "पाप इति। समीपदेशादारभ्योत्तरोत्तरं विप्रकर्षेणोपधाने हि पूर्वोपहिता मिष्टका मतिक्रम्य गमनात्पापसंसर्गः स्यात्, तादृग्रूपां 'निर्ऋतिम्' 'नैव अन्ववायानि' नैव प्राप्नवानि 'इति' अनेनाभिप्रायेणेत्यर्थः ॥

द्वितीयं पक्षं विधातु मेतन्निषेधति— "न तथेति। अन्यं पक्ष माह— "पराचीरेवेति †। 'पराचीः' उत्तरोत्तरं विप्रकृष्टाः, ता एवोपदध्यात्। तथा च निर्ऋतिरूपं 'पाप्मानं' 'पराञ्चम्' आत्माऽनभिमुखं विप्रकृष्टम् 'एव' प्रेरयित्वा 'अपहत्य' हिनस्ति ॥ १३ ॥

तासां नैर्ऋतीनां सङ्ख्या मनूद्य, स्तौति— "तिस्र इति ‡। "त्रिवृदग्निरिति। असकृदुक्तार्थम् ॥ १४ ॥

आसन्द्यादीनां तत्र प्रासनं विधत्ते— "अथेति §। 'अथ' समिदाधानानन्तरम्, या उख्याग्निधारणार्था 'आसन्दी', यच्च

* का० श्रौ० सू० १७. २. २ ।

† का० श्रौ० सू० १७. २. १ ।

‡ का० श्रौ० सू० १७. १. २२ ।

§ का० श्रौ० सू० १७. २. ४ ।

रणसमये उख्यधारणार्थं 'शिक्यम्', यश्च सौवर्णस्य रुक्मस्य प्रतिमोचनार्थं 'पाशः' सूत्रम्, ये च 'इण्ड्वे' अग्निसहितया उखाया उभयतो धारणाय तृणमयौ पिण्डौ। 'तत्' र्वं नैर्ऋतीनां 'परार्द्धे' पश्चाद्भागे 'न्यस्यति' क्षिपेत्। यन्ते देवीति * तस्य मन्त्रः। तथा च कात्यायनः— "दक्षिणा-खोऽनुपस्पृशन्नसुन्वन्त मिति प्रत्यृचं पराचीरभ्यात्म मेके त्याभावः शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यन्त इति"-ति †। आसन्यादीना मुख्याग्निना तप्तत्वात् प्रासनीयत्वं ष्ट मित्यभिप्रेत्य रुक्मपाशस्य प्रासनीयत्व मुपपादयति— नैर्ऋतो वा इति। निगदसिद्धोऽर्थः।

मन्त्रस्य पूर्वार्द्धे "अविचृत्य मितिपदस्याभिप्राय माह— अनेवंविदुषा हेति। उक्तार्थज्ञानरहितः 'अनेवंविद्वान्', तेन अविचृत्यः'। "चृती हिंसाग्रन्थनयोः" ‡। चर्त्तितुं विश्लेषयितुं क्यो न। अथ मर्थः,— हे यजमान! 'ते' तव 'ग्रीवासु' अविचृत्यं' विमोक्तु मशक्यं यं 'पाशं' 'निर्ऋतिः' देवता 'आब-ध्' आबद्धवती, "तं ते विष्यामीत्युत्तरत्र सम्बन्धः। तत्र-स्यायुःशब्दस्य विवक्षित मर्थं माह— "अग्निर्वा आयुरिति। आयुषो दातृत्वादग्निरेवायुःशब्देनोच्यते। "तस्यैतन्मध्य मित्यादि। 'तस्य' चीयमानस्यायुःशब्दाभिधेयस्याग्नेः 'एतत्' मध्यं' मध्यमशरीरं 'यद्' गार्हपत्यचयनादूर्द्ध माहवनीयचय-नात् प्राचीनं कर्म; तदत्र मन्त्रगतेन मध्यमशब्देनोच्यते

---

* वा० सं० १२. ६५।

† का० श्रौ० सू० १७. १. २३—१७. २. ४।

‡ तु० प० ३४ धा०।

इत्यर्थः । फलित माह— "तस्मादिति । 'तस्मात्' शब्दस्य चीयमानाग्निपरत्वात् यूनः स्थविरस्य च यजमा प्रयोगे "आयुषो मध्यात्"-इति मन्त्रभागस्य पाठो न ध्यते ; यदि ह्यायुःशब्देन यजमानस्य जीवनकालो विव स्यात् , तदा यूनः प्रयोगे आयुषआदेरिति विपरिणमयितव्य स्थविरस्य प्रयोगे आयुषोऽन्तादिति । 'मध्यादित्येवाह' इ कारेणेदृग्विधपरिणामो व्यावर्त्यते । तथा च तृतीय स्याय मर्थः— "हे यजमान ! 'ते' तव ग्रीवास्वाबद्धं तं पाशं रुक्मपाशञ्च 'विष्यामि' । "स्यतिरुपसृष्टो विमोचने"-इ यास्कः । 'आयुषः' चीयमानस्याग्नेः मध्यात् गार्हपत्यच दूर्द्ध्वभाविनः , कर्मकलापात् न विमुञ्चामीति । चतुर्थपाद व्याचष्टे— "अथैत मिति । पितुशब्दोऽन्नवाची । 'अथ' विमोचनानन्तरम् ,'एतं पितुम्' अग्निचयनफलभूत मन्नं 'प्र निर्ऋतिदेवतयानुज्ञातः सन् , हे यजमान ! त्वम् 'अद्धि' नेत्यर्थः । "प्रसूत इत्येतदिति , प्रसूत इति मन्त्रपदेन प्रयो विवक्षितं मिति भावः ॥

मन्त्रगतं छन्दः प्रशंसति— "त्रिष्टुब्भिरिति । "वज्रो त्रिष्टुबिति । त्रिष्टुभ इन्द्रेण सहोत्पन्नत्वाद् †, वज्रस्य च त धत्वात् त्रिष्टुभस्तत्तादात्म्यम् ॥ १५ ॥

इष्टकादीन् सम्भूय , अनूद्य , सङ्ख्याद्वारेण प्रशंसति "तिस्र इति ॥ १६ ॥

उदकस्य निनयनं विधत्ते— "अथान्तरेणेति ।

* निरु० १. ६. १ ।

† तै० सं० ७. १. १. ४ ।

प्रासन्यादीनां प्रासनानन्तरम्, 'अन्तरेण' स्वात्मन इष्टकानाञ्च मध्ये उदकपूर्णं चमसं 'निनयति' निषिञ्चति *। तदेतत् प्रशंसति— "वज्रो वा इति। नैर्ऋत्यो हि ता इष्टकाः, तासा मात्मनश्च मध्ये वज्रसंस्तुताना मपां निनयनेन पापरूपां निर्ऋतिम्' 'अन्तर्द्धत्ते' व्यवदधाति, तत्संसर्गपरिहारायेत्यर्थः॥

निषेचनानन्तर मुपोत्थानं समन्त्रकं विधत्ते— "नमो भूत्या इति †। भूतिलक्षणा देवता 'इदं' नैर्ऋतेष्टकोपधानरूपं कर्म 'चकार' कृतवती। तस्यै 'भूत्यै' श्रियै नमोऽस्त्विति मन्त्रार्थः। तत्रोदकनिनयनपूर्वक मुपोत्थानं कात्यायनः सूत्रितवान्— "उदपात्रं निषिच्यान्तरात्मेष्टक मुत्तिष्ठन्ति नमो भूत्या इति"-इति ‡।

पुरावृत्तन्यायेन भूत्यर्थतां कर्मणः प्रदर्शयन् तन्नमस्कारपरतां मन्त्रस्य व्याचष्टे —"भूत्यै वा इति। 'भूत्यै' भवनाय ऐश्वर्याय खलु 'एतत् कर्म' 'देवाः प्राक्' 'अकुर्वत' कृतवन्तः। 'तस्यै' एव भूत्यै 'एतन्नमः' 'अकुर्वन्', तद्वदेव 'अयं' यजमानोऽपि भूत्यर्थमेव 'एतत् कर्म कुरुते', 'तस्यै एतन्नमस्करोति' इति॥

उपोत्थानानन्तरं शालां प्रत्यागमनं धर्मविशिष्टं विधाय स्तौति--"अप्रतीक्ष मायन्तीति §। प्रतिनिवृत्य नैर्ऋतस्थानस्येक्षण मकृत्वा 'आयन्ति' शाला मागच्छन्ति, 'तत्' तेनाप्रतीक्षणेन

* का० श्रौ० सू० १७. २. ५ क।

† वा० सं० १२. ६५।

‡ का० श्रौ० सू० १७. २. ५ क, ख।

§ का० श्रौ० सू० १७. २. ६ क।

निर्ऋतिरूपं 'पाप्मानम्' 'अप्रतीक्ष मेव' प्रतीक्षण मक
'जहति' त्यजन्ति। "ओ हाक् त्यागे"-इति * धातुः ॥ १७ इति

गार्हपत्योपस्थानं विधत्ते— "प्रत्येत्येति। 'प्रत्येत्य' नैर्ऋ
स्थानात् प्रतिनिवृत्त्य, गार्हपत्यम् 'अग्नि मुपतिष्ठते'। तथि
सूत्रकृता— "अनपेक्ष मेत्य शालाद्वार्योपस्थानं निवेशन इति ख
इति †। उपस्थानस्य प्रयोजन माह— "एतद्वा इति। 'एतर्हि
एतस्मिन् समये खलु 'एतदयथायथम्' अयथास्व मन्याय्यं का
किं पुनरेतदिति, तदाह— "यदग्नाविति। 'अग्नौ' गार्हप
चितिरूपे शालाद्वार्ये, 'सामिचिते' अर्द्धचिते 'एतां दि
नैर्ऋतीम् 'एति' गच्छति। 'अहिंसायै' हिंसापरिहाराय 'त
गार्हपत्यचितिरूपायाग्नये 'एतत्' निह्नुते एव अयथायथक
जनितापराधं शमयत्येव ॥ १८ ॥

प्रकारान्तरेणाप्युपस्थानस्य कर्त्तव्यता माह— "यद्वेवेति।
वा इति। 'गार्हपत्यः' पृथिवीलोकात्मकः खलु, प्रतिष्ठात्म
सः। 'इयम् उ वै' पृथिव्यपि खलु 'प्रतिष्ठा' आस्पदम्। 'अथ
इदानीम् 'अपथ मिवैति' अमार्गेणैव प्रतिपद्यते, 'यदेतां' नैर्ऋ
'दिशम्' 'एति' गच्छति। उपस्थानस्य प्रतिष्ठितिहेतुतां प्र
पादयति— "तद्यदिति। 'एतत्' एतेनोपस्थानेन 'इमां' प्रति
रूपां पृथिवी मेव 'अभिप्रत्यैति' साम्मुख्येन प्रतिपन्नो भवति
'प्रतिष्ठायाम्' अस्यां 'प्रतितिष्ठति' च, चिरं स्थितिं ल
इत्यर्थः ॥ १९ ॥

---

* जु० प० ८ धा०।

† का० श्रौ० सू० १७. २. ६ क, ख।

विहितं शालाद्वार्योपस्थाने मन्त्र मनूद्य व्याचष्टे— "निवेशन इति *। निविशन्ते वसूनि अस्मिन्निति 'निवेशनः', सङ्गच्छन्ते नान्यस्मिन्निति 'सङ्गमनः'। आधाराधेययोरभेदोपचारेणाग्नेः पृथिवीलोकत्व मित्यभिप्रेत्याह— "निवेशनो ह्ययं लोक इति। विश्वशब्दस्य सर्वशब्दाभिधायकत्वं व्याचष्टे— "सर्वाणीति। उत्त- 'एतद्' तु निगदव्याख्यात मित्याह— "यथैव यजुरिति॥

मन्त्रार्थस्तु,— योऽय मग्निः 'वसूनां' धनानां 'निवेशनः' काश्रयः, 'सङ्गमनः' सङ्गत्याधारश्च, 'विश्वा रूपा' सर्वा- णि रूपाणि आहवनीयदक्षिणाग्न्यतिप्रणीताग्नीध्रधिष्णप्रभृतीनि 'शचीभिः' कर्मभिः 'अभिचष्टे' अभिपश्यति। कथं पश्य- तीत्यपेक्षाया माह— 'सत्यधर्मा' अवितथधर्मकारी 'सविता' देव इव; स यथा सर्व मभिपश्यति, तथेत्यर्थः। यः 'इन्द्रो न' इन्द्र इव 'पथीनां समरे' परिपन्थिभिः सह सङ्ग्रामे 'तस्थौ' स्थित- वान्। नकारोऽत्रोपमार्थीयः; "उपमार्थीय उपरिष्टादुपाचार- स्तस्य येनोपमिमीते"–इति † हि यास्कः॥ २०॥ ३ [२. १.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम्॥

---

* वा० सं० १२. ६६।

† निरु० १. २. १।

( अथ द्वितीयं ब्राह्मणम्. )

अथ प्रायणीयं निर्व्वपति । तस्य हविष्कृ
व्वाचं व्विसृजते व्वाचं व्विसृज्य स्तम्बयजु
रति स्तम्बयजुर्हृत्वा पूर्व्वेण परिग्रहेण परिगृ
लिखित्वाह हर विरिति हरति विराग्नीध्रः ॥ १ ॥

प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीये
प्रचर्य सीरं युनक्त्येतद्वा ऽएनं देवाः संस्करिष्य
पुरस्तादन्नेन समार्द्धयंस्तथैवैन मय मेतत् संस्
रिष्यन् पुरस्तादन्नेन समर्द्धयति सीरं भवति सी
हैतद्यत् सीर मिरा मेवास्मिन्नेतद्दधाति ॥ २ ॥

औदुम्बरं भवति । ऊर्ग्वै रस उदुम्बर ऊ
वैन मेतद्रसेन समर्द्धयति मौञ्जं परिसीर्यं त्रि
तस्योक्तो बन्धुः * ॥ ३ ॥

सोऽग्नेर्द्दक्षिणाऽ श्रोणिम् । जघनेन तिष्ठ
त्तरस्याऽसस्य पुरस्ताद्युज्यमान मभिमन्त्रयते स
युञ्जन्ति कवयो युगा वितन्वते पृथगिति ये

* 'बन्धुः'—इति ग, घ ।

द्वाꣳसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च व्वितन्वते पृथग्धीरा देवेषु सुम्नयेति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वाना इत्येतत् ॥ ४ ॥

युनक्त सीरा वि युगा तनुध्व मिति। युञ्जन्ति हि सीरं वि युगानि तन्वन्ति कृते योनौ व्वपतेह व्वीज मिति व्वीजाय वा ऽएषा योनिष्क्रियते यत् सीता यथा ह वा ऽअयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे व्वपति गिरा च श्रुष्टिः सभरा असन्न इति व्वाग्वै गीरन्नꣳ श्रुष्टिर्नेदीय इत्सृण्यः पक्व मेयादिति यदा वा ऽअन्नं पच्यतेऽथ तत्सृण्योपचरन्ति द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ५ ॥

स दक्षिण मेवाग्रे युनक्ति। अथ सव्य मेवं देवत्रेतरथा मानुषे षड्गवं भवति द्वादशगवं वा चतुर्व्विꣳशतिगवं वा संव्वत्सर मेवाभिसम्पदम् ॥ ६ ॥

अथैनं व्विकृषति। अन्नं वै कृषिरेतद्वा

ऽअस्मिन् देवाः संस्करिष्यन्तः पुरस्तादन्न मद
स्तथैवास्मिन्नय मेतत् संस्करिष्यन् पुरस्ताद
दधाति * ॥ ७ ॥

स वा ऽआत्मान मेव व्विकृषति । न पक्ष
पुच्छान्यात्मंस्तदन्नं दधाति यदु वा ऽआत्मन्न
धीयते तदात्मान मवति तत् पक्षपुच्छान्यथ य
पक्षपुच्छेषु नैव तदात्मान मवति न पक्ष
पुच्छानि ॥ ८ ॥

स दक्षिणार्द्धेनाग्नेः † । अन्तरेण परिश्रितः प्र
चीं प्रथमाᳪं सीतां कृषति शुनᳪं सु फा
व्विकृषन्तु भूमिᳪं शुनं कीनाशा अभियन्तु व
हैरिति शुनᳪं शुन मिति यद्वै समृद्धं तच्छुन
समर्द्धयत्येवैना मेतत् ‡ ॥ ९ ॥

अथ जघनार्द्धेनोदीचीम् । घृतेन सीता मधु
समज्यता मिति यथैव यजुस्तथा बन्धुर्व्विश्वैर्दे
रनुमता मरुद्भिरिति व्विश्वे च वै देवा मरुत

* 'दधाति'—इति क ।

† 'दक्षिणार्द्धेनाग्नेः'—इति ग, घ ।

‡ 'मेतत्'—इति ग, घ ।

व्वर्षस्य्शतऽऊर्ज्जस्वती पयसा पिन्वमानेति रसो वै पय ऊर्ज्जस्वती रसेनान्नेन पिन्वमानेत्येतद्स्मान्त्सीते पयसाभ्यावव्रत्स्वेत्यस्मान्त्सीते रसेनाभ्यावव्रत्स्वेत्येतत् * ॥ १० ॥

अथोत्तरार्द्धेन प्राचीम्। लाङ्गलं पवीरवदिति लाङ्गलꣳ रयिमदित्येतत् सुशेवꣳ सोमपित्सर्व्विंत्यन्नं वै सोमस्तदुद्वपति गा मविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहन मित्येतद्धि सर्व्वꣳ सीतोद्वपति ॥ ११ ॥

अथ पूर्व्वार्द्धेन दक्षिणाम् †। कामं कामदुघे धुक्ष्व मित्राय व्वरुणाय च। इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्य इति सर्व्वदेवत्या वै कृषिरेताभ्यो देवताभ्यः सर्व्वान् कामान्धुक्ष्वेत्येतदित्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ‡ ॥ १२ ॥

---

* '०त्येतत' – इति ग, घ।

† 'दक्षिणाम्'—इति ग, घ।

‡ 'देवत्रा'—इति ग, घ।

चतस्रः सीता यजुषा कृषति। तद्यच्चतस्रो
दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै यजुषाद्धा वै तद्य
द्यजुरद्धो तद्यदिमा दिशः * ॥ १३ ॥

अथात्मानं व्विकृषति। तद्यदेव संव्वत्सरेऽन्न
तदस्मिन्नेतद्दधाति तूष्णी मनिरुक्तं वै तद्यत् तूष्णी
सर्व्वं वा ऽअनिरुक्तꣳ सर्व्वेणैवास्मिन्नेतदन्नं दधा
तीत्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि
देवत्रा ॥ १४ ॥

तिस्रस्तिस्रः सीताः कृषति। त्रिवृदग्निर्यावा
नग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं द
धाति ॥ १५ ॥

द्वादश सीतास्तूष्णीं कृषति। द्वादश मासा
संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा
तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥

ता उभय्यः षोडश सम्पद्यन्ते। षोडशकलः
प्रजापतिः प्रजापतिरग्निरात्मसम्मित मेवास्मिन्ने-
तदन्नं दधाति यदु वा ऽआत्मसम्मित मन्नं तद

* 'दिशः'—इति ग, घ।

वति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयो न तद्भवति ॥ १७ ॥

यद्द्वेवैनं व्विकृषति। एतद्वा ऽअस्मिन् देवाः संस्करिष्यन्तः पुरस्तात् प्राणानदधुस्तथैवास्मिन्नयमेतत् संस्करिष्यन् पुरस्तात् प्राणान् दधाति लेखा भवन्ति लेखासु हीमे प्राणाः * ॥ १८ ॥

चतस्रः सीता यजुषा कृषति। तद्य ऽइमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन् प्राणाः † ॥ १९ ॥

यद्द्वात्मानं व्विकृषति। यऽएवेमेऽन्तरात्मन् प्राणास्तानस्मिन्नेतद्दधाति तूष्णीं को हि तद् वेद यावन्त इमेऽन्तरात्मन् प्राणाः ‡ ॥ २० ॥

अथैनान् विमुञ्चति। आप्त्वा तं कामं यस्मै कामायैनान्युङ्क्ते व्विमुच्यध्व मघ्न्या इत्यघ्न्या ह्येते देवता देवयाना इति दैवꣳ ह्येभिः कर्म्म करोत्यगन्म तमसस्पार मस्येत्यशनाया वै तमोऽगन्मास्या

*, †, ‡ 'प्राणाः'—इति ग, घ।

ऽअशनायायै पार मित्येतज्ज्योतिरापामेति ज्योति
र्ह्याप्नोति यो देवान्यो यज्ञ मथैनानुदीचः प्राच
प्रसृजति तस्योक्तो बन्धुस्तानध्वर्यवे ददाति स
हि तैः करोति तांस्तु दक्षिणानां कालेऽनु
दिशेत् ॥ २१ ॥ ४ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [२. २.] ॥

अथ शालाद्वार्योपस्थान मभिधाय प्रायणीयेष्टिं विधत्ते—"अ
प्रायणीय मिति। शालाद्वार्योपस्थानानन्तर्यम् 'अथ'-शब्दार्थः
'प्रायणीयम्' प्राकृतं ज्योतिष्टोमिकम् अदित्यै चरुं निर्वपति *
अग्रे सीरयोजनं विधातुं प्रायणीयेष्टेः कांश्चित् पदार्थाननुवदति-
"तस्य हविष्कृतेत्यादिना। 'तस्य' प्रायणीयस्य 'हविष्कृता
हविष्कृच्छब्देन सह हविष्कृदाह्वानकाले वाग्विसर्गं कुर्यात्
हविरावापानन्तरं वा हविष्कृदाह्वानकाले वा वाग्विसर्गो विक
ल्पितः, तत्र नियमार्थोऽय मनुवादः। 'स्तम्बयजुः'-इति
पुरीषहरणकर्मणो नामधेयम् †। यद्वा, स्तम्बस्य यजुषा "पृथिवि
देवयजनीत्यादिना पुरीषं लक्ष्यते, तत् पुरीषं हरति। तद
"पूर्वेण परिग्रहेण' वेदिं 'परिगृह्य', ततो 'लिखित्वा' स्फ्य
प्राचीस्तिस्रो लेखाः कृत्वा आग्नीध्रं प्रत्यध्वर्युः 'आह' ब्रूते। वि

* ऐ० ब्रा० १ प० २ अ० १ ख० द्रष्टव्यम्। आश्व० श्रौ० सू०
४. २. १८; ३. १.। का० श्रौ० सू० ७. ५. १३।

† १ का० २ प्र० २ ब्रा० १८–२१ क० इत्येवमादौ द्रष्टव्यम्।

त्यपेचाया माह— "हर त्रिरिति। हे आग्नीध्र! त्वं कृता खा: त्रिवारं हरेति प्रैषार्थ:। प्रेषितेनाग्नीध्रेण कर्त्तव्य माह— "हरति त्रिरिति ॥ १ ॥

विहितस्य प्रायणीयहविष: प्रचारं विधत्ते— "प्रत्ये-त्येति *। 'प्रत्येत्य' महावेदे: प्रत्यागत्य 'प्रायणीयेन' हविषा चरेत्। प्रत्येत्येतिवचनादेव पूर्व मुक्तं स्तम्बयजुर्हरणादिकं महावेद्या मेव कर्त्तव्यम्, न तु प्रायणीयवेद्या मिति प्रतीयते। प्रायणीयान्ते शंयुन्ते प्राक्सोमनिवपनात् सीरयोजनं विधत्ते— "प्रायणीयेन प्रचर्य सीरं युनक्तीति †। 'प्रायणीयेन' प्रायणीयशेषेण प्रचारं कृत्वा, 'सीरं' हलं 'युनक्ति' युञ्ज्यात्। विहिते सीरयोजने प्रजापति: सीरलक्षणेनान्नेन समर्द्धनद्वारा देवकर्त्तृकं संस्कारं प्रतिपादयति— "एतद्वा एन मिति। 'एतत्' एतर्हि एतस्मिन्नवसरे खलु 'एनं' पितरं प्रजापतिं विस्रस्ता-वयवं चयनेन संस्करिष्यन्तो 'देवा:' पुरस्तात् तत: प्रागेव सीर-लक्षणेनान्नेन समृद्ध मकुर्वन्। एव मेव अयं यजमानोऽपि 'एनं' प्रजापतिं चित्याग्निरूपेण संस्करिष्यन् तत: प्रागेव सीरलक्षणेनान्नेन समर्द्धयति। नामनिर्वचनेन तस्यान्नरूपता माविष्करोति— "सीरं भवतीत्यादिना। इरया अन्नेन सह वर्त्तत इति सिरम्, एतदेव पारोक्ष्येण सीर मित्युच्यते। अत: कर्षणसाधनत्वेन सीरस्य विधानात्। 'इराम्' अन्नम् एव 'अस्मिन्' संस्क्रियमाणे चित्याग्निरूपे प्रजापतौ 'एतत्' एतर्हि 'दधाति' स्थापयति ॥ २ ॥

* का० श्रौ० सू० १७. २. ७।

† का० श्रौ० सू० १७. २. ८क।

सौरोपादानभूतं वृक्षविशेषं विधाय स्तौति— “औदुम्ब
भवतीति *। उदुम्बरस्य विकार औदुम्बरः। “ऊर्ग्वै
उदुम्बर इति। ‘ऊर्क्’ बलकरं मन्नम्, तदात्मको
एव उदुम्बरवृक्षात्मना परिणतः। अत एव श्रूयते— “
वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठदिति †। “ऊर्जं
मित्यादि। ऊर्ग्रूपेण रसेनेत्यर्थः। सीरयोजनार्थानां रज्
प्रकृतिद्रव्यं विवक्ते— “मौञ्ज मिति ‡। ‘परिसीर्यं’ प
सीरस्य योजनायोपयुज्यमानं दाम ‘मौञ्जम्’ मुञ्जतृणैर्नि
‘त्रिवृत्’ त्रिगुणञ्च कर्त्तव्यम्। “तस्योक्तो बन्धुरिति। ‘त
मौञ्जस्य च त्रिवृत्त्वस्य च स्तावकं “सैषा योनिरग्नेर्यन्मुञ्ज
इत्यादिकम् §, “त्रिवृदग्निर्यावानग्निः”-इत्यादि ‖ च
प्रागाम्नातम्, अत्रानुसन्धेय मित्यर्थः ॥ ३ ॥

युज्यमानस्य सीरस्य स्थानविशेषविशिष्ट मभिमन्त्रणं विध
“सोऽग्नेरिति ¶। चेष्यमाणस्याग्नेर्यावान् भूभागः शौल्वेन मा
चतुरस्रीकृतः, तस्य ‘दक्षिणां श्रोणिं जघनेन’ दक्षिणापरको
पश्चात् ** ‘तिष्ठन्’, ‘उत्तरांसस्य’ अग्निक्षेत्रसम्बन्धिन उत्तरपू
णस्य ‘पुरस्तात्’ ‘युज्यमानं’ सीरं युगबलीवर्द्दादिभिः सह

---

* का० श्रौ० सू० १७. २. ८ ख।

† पुरस्तात् ३ का० १ प्र० ५ ब्रा० ३३ क० सा० भा० (तै० सं

‡ का० श्रौ० सू० १७. २. ६।

§ शत० ब्रा० ६ का० ३ अ० १ ब्रा० २६ क०।

‖ शत० ब्रा० ६ का० ३ अ० १ ब्रा० २५ क०।

¶ का० श्रौ० सू० १७. २. ११।

** ‘दक्षिणापरेण तस्य पश्चात्’—इति क।

बध्यमानं "सीरा युञ्जन्ति"-इतिमन्त्रद्वयेन * 'अभिमन्त्रयते'। अभिमन्त्रणं नाम मन्त्रेण स्मर्यमाणस्यार्थस्येक्षणपूर्वक मनुसन्धानम्। उक्तं हि—

"मन्त्र मुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
सेक्षणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥
एतदेवाभिमन्त्रणलक्षणञ्चेक्षणावधि"-इति।

अत्र च सीरयोजनस्य तदभिमन्त्रणस्य च भिन्नदेशकर्त्तव्यतया † यौगपद्याय कर्त्तृभेदोऽवसीयते। तत्राभिमन्त्रणस्य संस्कार्यतया प्रधानत्वात् सीरयोजन मध्वर्युः कुर्यात्, तत्संस्कारात्मक मभिमन्त्रणन्तु द्वितीयः ‡ प्रतिप्रस्थाता कुर्यात्। उक्तं हि सूत्रभाष्यकृता कर्कोपाध्यायेन— "प्रतिप्रस्थाताभिमन्त्रयते सीरा युञ्जन्तीत्यनेन मन्त्रेण, योजने तु प्रधानत्वादध्वर्यु-रिति § ॥

तत्र "सीरा युञ्जन्तीति गायत्री प्रथमो मन्त्रः‖, तस्याः पूर्वार्द्ध मनूद्य व्याचष्टे— "सीरा युञ्जन्तीति। "ये विद्वाꣳसस्ते कवयः इति। मन्त्रगतेन कविशब्देन सीरयोजनप्रकारं सम्यक् जानाना-स्तदभिन्ना विवक्षिता इत्यर्थः। "सीरञ्चेति। "सुपां सुलुगिति ¶ मन्त्रे सीरशब्दात् परस्य अतः आकारः। "युगानि चेति। "शेश्छ-

* वा० सं० १२. ६७, ६८।
† 'भिन्नदेशकर्मकर्त्तव्यतया'—इति ख।
‡ 'तद्द्वितीयः'—इति ज।
§ का० श्रौ० १७. २. ११ सू० वृ०।
‖ वा० सं० १२. ६७।
¶ पा० सू० ७. १. ३९।

न्दसि बहुल मिति * युगशब्दात् परस्य शेर्मन्त्रे लोप इत्यर्थः
उत्तरार्द्ध मनूद्य व्याचष्टे— "धीरा देवेष्विति। सुम्नशब्दात् परः
द्वितीयैकवचनस्य याजादेशः †। सुखहेतुत्वात् यज्ञः खलु सु
शब्दाभिधेयः ‡। "वितन्वत इति। प्रकृतस्य कर्मणोऽनु
माह— "तन्वाना इत्येतदिति॥

तदयं मन्त्रार्थः,— 'कवयः' तदभिज्ञाः सीरं
'युञ्जन्ति' कर्मणा योग्यं बध्नन्ति षट्द्वादशादिसङ्ख्याना म
डुहां योजनाय 'पृथक्' भेदेन 'युगानि च' 'वितन्वते' विस्
रयन्ति। किं कुर्वन्तः ? 'देवेषु' 'सुम्नम्' अग्निचयनलक्षणं य
'तन्वानाः' विस्तारयन्त इति। अत एव 'धीराः' तदुपायभूत
धिया युक्ताः 'इति'॥ ४॥

"युनक्तेति त्रिष्टुप्। तद्द्वितीयोऽभिमन्त्रणमन्त्रः §। पू
परोक्षवदुक्तोऽत एवास्य मन्त्रस्य पादेन प्रत्यक्षवदुच्यते।
यजमानपुरुषाः! 'सीरा' पूर्ववदाकारः ‖, सीरं 'युनक्त' बध्नी
युजेः ¶ लोटि मध्यमपुरुषे बहुवचनस्य "तप्तनप्तनथनाश्च"—इति
तबादेशः। अत एव श्नसोऽल्लोपाभावः। 'युगा' पूर्ववत्
लोपः ††, 'युगानि' च 'वितनुद्ध्वं' विस्तारयतेति। प्रत्यक्षवदुक्त

---

* पा० सू० ६. १. ७० ।

† पा० सू० ७. १. ३९ ।

‡ 'सुखशब्दाभिधेयः'—इति ज ।

§ वा० सं० १२. ६८ ।

‖ एतत्पूर्वस्यां कण्डिकायां (१०७पृ० १८प०) द्रष्टव्यम् ।

¶ रुधा० उभ० ६ धा० ।

** पा० सू० ७. १. ४५ ।

†† पूर्वस्यां कण्डिकायां (१ पं०) द्रष्टव्यम् ।

श्रुतिः स्वयं परीक्षवद् व्याचष्टे— "युञ्जन्ति हीति। सीरं युञ्जन्ति, युगानि च वितन्वते, कवय इति शेषः।

द्वितीयपाद मनूद्य व्याचष्टे— "बीजाय वा इति। बीजवपनाय सीतारूपा योनिर्विधीयते। विपक्षे दोष मुद्भावयति— "यथा ह वा इति। 'अकृष्टे' अलिखिते 'यत्' यदि 'वपति', तर्हि 'अयोनौ' गर्भाशयादन्यत्र यथा रेतःसेकस्तथा व्यर्थो भवेदित्यर्थः।

तृतीयपाद मनूद्य तत्रत्ययोर्गीःश्रुष्टिशब्दयोः क्रमेण वागन्नार्थता माह— "वाग्वै गीरन्नं श्रुष्टिरिति।

चतुर्थपाद मनूद्य तत्तात्पर्य माह— "यदा वा इति। 'यदा' खलु समये 'अन्नं' व्रीहियवादि स्वयं पक्वं भवति। 'अथ' तदानीं 'सृण्या' दात्रेण 'उपचरन्ति' लुनन्तीत्यर्थः॥

मन्त्रार्थस्तु,— हे यजमानपुरुषाः! 'सीरा' सीरं हलं 'युनक्त' योजयत, 'युगा' युगानि 'वितनुध्वं' विशेषेण योक्त्रप्रभृतिभिर्विस्तारयत। 'इह' क्षेत्रे 'योनौ' स्थाने 'कृते' संस्कृते सति 'बीजं' व्रीह्यादि 'वपत' निक्षिपतेत्यर्थः। केन साधनेनेत्यपेक्षाया माह— "गिरा चेति। 'गिरा' वाचा "या ओषधीरित्यादिवक्ष्यमाणमन्त्ररूपया * च-शब्दान्नमसेनापि, वपतेति सम्बन्धः। 'श्रुष्टिः' व्रीह्यादिकान्नजातिः, 'सभराः' फलकृतेन भरसा भरणेन सह वर्त्तत इति सभराः, अमितफलेति यावत्। तादृशी 'नः' अस्माकं यथा 'असत्' भवेत्। इच्छब्दोऽनर्थकः †। 'सृण्यः' अङ्कुशाकारस्य लवनसाधनस्य दात्रस्य 'नेदीयः' अन्तिकतमं 'पक्वं' व्रीह्याद्यन्नं यथा 'आ इयात्'

* वा० सं० १२. ७५। का० श्रौ० सू० १७. ३. ८। इहोपरिष्टात् २ अ० ४ ब्रा० ६ क० द्रष्टव्यम्। † निरु० १. ३. ५।

अगच्छेत् , तथा वपतेति सम्बन्धः । "सृणिरङ्कुशो भवति , सर णात्"-इति * हि यास्कः ॥

तत्र युज्यमानाभिमन्त्रणं द्वाभ्यां गायत्रीत्रिष्टुब्भ्यां कुर्या दित्याह— "द्वाभ्या मिति । तस्य द्विसङ्ख्यायोगस्यार्थवा "द्वाभ्यां प्रतृणत्ति द्विपाद्यजमान इत्यादिना षष्ठकाण्डे † प्राग म्नात इत्याह— "तस्योक्त इति ॥ ५ ॥

विहिते सीरयोजने दक्षिणसव्ययोर्धूर्ययोः पौर्वापर्यं विधत्ते- "स दक्षिण मेवाग्र इति ‡ । 'सः' अध्वर्युः दक्षिण मेव धुर्यं प्रथ युञ्ज्यात् , तदनु 'सव्यं' वामं धुर्य मित्यर्थः । 'एवम्' उक्तकरण 'देवत्रा' देवेषु कृतं स्यात् ; मनुष्यव्यवहारे तु 'इतरथा' सव्य पूर्वो दक्षिणः पश्चादिति भेदः ॥

सीरयोजने अनडुहां वैकल्पिकं सङ्ख्यात्रितयं विधत्ते- "षड्गव मित्यादिना । षड् गावः समाहृताः षड्गवम् "तद्धितार्थोत्तरपदसमाहारे च"-इति § समाहारे तत्पुरुषैकदे द्विगुः । ततो "गोरतद्धितलुकि"-इति ‖ समासान्तः । तथा 'द्वा दशगवम्', 'चतुर्विंशतिगवं' चेति पक्षौ । तत्रापि पक्षद्वये तथै समासः , समासान्तश्च । "षट् , द्वादश , चतुर्विंशतिं वा पूर्वेणोत्त रांसम्"-इति ¶ हि सूत्रम् । सङ्ख्यात्रितयेऽप्युपपत्ति माह—"सं

* निरु० ५. ४. १० ।

† ६ का० ४ प्र० ४ ब्रा० ७ क० ।

‡ का० श्रौ० सू० १७. २. १३ ।

§ पा० सू० २. १. ५१ ।

‖ पा० सू० ५. ४. ९२ ।

¶ का० श्रौ० सू० १७. २. १० ।

त्सर मेवेति । सम्पद्यत इति सम्पत् । षड्तु-द्वादशमास-चतुर्विंश-त्यर्द्धमाससम्पत्यात्मको यस्तं तादृशं संवत्सर मभिलक्ष्य त्वयो-ऽप्येते पच्चा उपपन्ना इत्यर्थः ॥ ६ ॥

अथ चित्याग्निक्षेत्रमध्ये विकर्षणं विधत्ते— "अथैन मिति * । 'एनम्' आत्मानम् । तदेव कर्षण मन्त्रात्मना स्तौति— "अन्नं वा इति । 'अन्नं' खलु 'कृषिः'; तद्धेतुत्वात् । कृष्टे एव हि सम्यगन्नं पच्यते । कर्षण मेव तद्देवकर्तृकान्नाधानतया स्तौति— "एतद्वा इति । 'पुरस्तात्' चयनात् प्रागेव 'देवाः' संस्कारं करिष्यन्तः 'अस्मिन्' आत्मनि 'एतत्' एतेन कर्षणेन 'अन्नम् एव स्थापितवन्तः, तथैवायं यजमानोऽपीति ॥ ७ ॥

अथ पच्चपुच्छानि विहायात्मन्येव कर्षणं विधत्ते— "स वा आ-त्मान मिति † । "आत्मंस्तदिति । 'तत्' तेन विकर्षणेन 'आत्मन्' आत्मनि 'अन्नम्' एव स्थापितवान् भवति । अथात्मन्यन्नाधानं स्तौति— "यदु वा इति । 'आत्मन्' आत्मनि यदेव 'अन्नं' 'धीयते' स्थाप्यते, 'तत्' एवान्नं पच्चपुच्छसहितम् 'आत्मानं' रक्षति । पच्चपुच्छेष्वन्नाधानं त्वकिच्चित्कर मित्याह— "अथ यदि-त्यादिना ॥ ८ ॥

अथ परिश्रितां समीपे आत्मनो दक्षिणभागेऽन्तरतः प्रागायतां सीतां विधत्ते— "स दक्षिणार्द्धेनेति ‡ । 'परिश्रितोऽन्तरेण' तत्-संलग्न मेव चित्याग्नेः आत्मनो 'दक्षिणार्द्धेन' दक्षिणपार्श्वे प्रागपवर्गां 'प्रथमां' 'सीतां' लाङ्गलपद्धतिं कृषेत् । "अन्तरान्तरेण

---

* का० श्रौ० सू० १७. २. १२ क ।

† का० श्रौ० सू० १७. २. १२ ख ।

‡ का० श्रौ० सू० १७. २. १३ ।

युक्ते"-इति * परिश्रिच्छब्दे द्वितीया। तत्र पूर्वार्द्धोपादानेन म विधाय तत्रत्यशुनशब्दस्य समृद्धार्थवाचकतया प्रथमसीताया समर्द्धन माह— "शुनं सुफाला इत्यादिना † ॥

मन्त्रस्याय मर्थः,— शुन मिति सुखनाम ‡। तच्च क्रिय विशेषणम्। सुशोभनाः फाला लाङ्गलाग्रस्थिताः कुशीभेदाः§ 'शुनं' सुखं यथा स्यात् तथा 'भूमिं' 'विकृषन्तु' विलिखन्तु 'फाला'-इति "ञि फला विशरणे"-इति धातुः‖ फालयन्ति भूमिं विदारयन्ति ते फालाः। 'कीनाशाः' कर्षकाः 'वाहैः' अनडुद्भिः सहिताः 'शुनं' सुखम् 'अभियन्तु' अभिगच्छन्तु। "कीनाशः कदर्ये स्याद्राक्षसे कर्षुके यमे"-इत्यनेकार्थतिलकः ¶। 'शुनासीरौ' द्विवचनस्य "सुपां सुलुगिति डादेशः **, वाय्वादित्यावित्यर्थः। 'हविषा' उदकेन 'तोशमाना' भूमिं निघ्नन्तौ। तोशतिर्वधकर्मा ††। 'अस्मे' अस्मभ्यम् 'ओषधीः' व्रीह्यादिकान्यन्ना 'सुपिप्पलाः' शोभनफलोपेताः 'कर्त्तन' कुरुतम्। "शुनो वायुः, एत्यन्तरिक्षे; सीर आदित्यः, सरणात्"-इति ‡‡ हि यास्क

* पा० सू० २. ३. ४।

† वा० सं० १२. ६६—७२।

‡ निघ० ३. ६. ११

§ 'लोहविशेषाः'—इति महीधरः।

‖ धा० प० ५१६ धा०।

¶ " 'कीनाशः कर्षके चुद्रे कृतान्तोपांशुघातिनोः'—इति कोशः"--इति महीधरः।

** पा० सू० ७. १. ३६।

†† निघ० २. १६. २६। तोशते नैरुक्तो धातुः।

‡‡ निरु० ६. ४. ६।

हविःशब्दः उदकनामसु "कम्, अन्नं, हविः"-इति पठितः * । "कर्त्तनेति, "तप्तनतनथनाश्च"-इति † तनप्। द्वित्वे बहुवचनं छान्दसम् ॥ ८ ॥

ततो दक्षिणश्रोणेरारभ्योदगपवर्गां पश्चिमपार्श्वे द्वितीयां सीतां विधत्ते— "अथ जघनार्द्धेनेति ‡ । तत्र मन्त्रं विधत्ते— "घृतेनेति § । तत्र तु प्रथमपादे निगदव्याख्यात इत्याह—"यथैव यजुर्भूरिति । द्वितीयपादेऽनुमतेतिशब्दस्य विश्वदेवानां मरुताञ्च वृष्टेरीशित्वं प्रयोजकमिति व्याचष्टे —"विश्वे च वै देवा इति । 'वर्षस्य' वृष्टेः 'ईशते' प्रयोजका भवन्ति । "अधीगर्थेति कर्मणि षष्ठी ‖ । तृतीयपादे पयःशब्दस्य रसोऽर्थ इति व्याचष्टे— "रसो वै पय इति । तत्रैव 'पिन्वमाना'-'इति' पद मध्याहृत्यान्नपदेनान्वेतीति व्याचष्टे— "अन्नेन पिन्वमानेत्येतदिति । चतुर्थेऽपि पयःशब्दो रसवचन एव ॥

मन्त्रस्याय मर्थः,— सीता पश्चिमत उदीची क्रियमाणा लाङ्गलपद्धतिः 'मधुना घृतेन' मधुरेणोदकेन 'समज्यतां' संसिच्यताम् । "घृत मित्युदकनाम, जिघर्त्तेः सिञ्चतिकर्मणः"-इति ¶ हि यास्कः । 'विश्वैर्देवैः' वृष्टेरीशानैः 'मरुद्भिश्च' गणदेवैः 'अनुमता' अभ्यनुज्ञाता, तथा 'पयसा' 'रसेन ऊर्ज्जस्वती' बलकररसोपेता,

---

* निघ० १. १२. ६५ ।
† पा० सू० ७. १. ४५ ।
‡ का० श्रौ० सू० १७. २. १४ ।
§ वा० सं० १२. ७० ।
‖ पा० सू० २. ३. ५२ ।
¶ निरु० ७. ७. १ ।

तथा 'पिन्वमाना' सेचनं कुर्वती, अन्नेनेति शेषः। श्रुतिरेव व्याचष्टे— "अन्नेन पिन्वमानेत्येतदिति। एवं सुते सीते! त्वम् 'अस्मान्' 'अभ्यावव्रत्स्व' अतिशयेनाभिमुख मा भवेत्यर्थः ॥ १० ॥

अथोत्तरपार्श्वे प्रागपवर्गां तृतीयां सीतां विधत्ते— "अ त्तरार्द्धेनेति *। "प्रकृत्या साधुः"–इतिवत् तृतीया सप्तम्यर्थे तत्र मन्त्रं विधत्ते— "लाङ्गल मिति ‡। तत्र प्रथमपादे खननेन श्रीरूपान्ननिष्पादनद्वारा फालस्य साधनत्वात् पवीरवद्रयिमदिति व्याचष्टे— "लाङ्गलं रयिमदिति। पादे 'सोमपित्सरु'–इतिपदैकदेशभूतस्य सोमशब्दस्यान्न इत्याह— "अन्नं वै सोम इति। उत्तरार्द्धपरिष्ठितस्य पद जातस्य सीतैवोद्गमयित्रीत्याह— "एतद्धि सर्वं सीतोद्वपती 'उद्वपति' उद्गमयतीत्यर्थः ॥

मन्त्रार्थस्तु,— 'लाङ्गलं' हलं 'पवीरवत्' पविः धारा, अस्यास्तीति पवीरं फालः। री मत्वर्थे, दैर्घ्यन्तु छान्दस तत् पवीर मस्य लाङ्गलस्यास्तीति पवीरवत्, फाल मित्यर्थः। शेव मिति सुखनाम §। सुष्ठु शोभनं शेव सुखम्, तत् 'सुशेवम्'। सोमं पिबतीति 'सोमपाः' यजमा तस्मिन् 'सोमपि' यजमाने 'त्सरति' पापादिकं नाशयति 'सोमपित्सरुः'। यद्वा, सोम मन्नं पाति रक्षति स सोम

* का० श्रौ० सू० १७. २. १५।

† पा० २. ३. १८ सू० १ वा०।

‡ वा० सं० १२. ७१।

§ निघ० ३. ६. १७।

तस्मिन् वर्त्तमानम् अशनाया दुःखं त्सरति नाशयतीति तथा; श्रुतेरभिमत मेतद् व्याख्यानम्। सोमपीत्यत्र सप्तम्या अलुक् छान्दसः *। यदित्थम्भूतं लाङ्गलम्, 'तत्' कर्त्तृ गवादिरथवाहनान्तम् 'उद्वपति' उद्गमयति। 'गां' गोजातिम्। 'अविं' मेषजातिम्। 'प्रफर्व्यं' प्रथमयुवतिं तरुणी मित्यर्थः। फर्वतिर्गतिकर्मा। प्रकर्षेण फर्व्या गम्या, ताम्; छान्दसो ह्रस्वः। कीदृशीं ताम्? 'पीवरीं' उन्नतस्तनकपोलाम्, 'प्रस्था' प्रस्थानम् तद्वत् उत्कृष्टजवोपेतम्, 'रथवाहनम्' अश्वम्, रथं वहतीति या तम्॥ ११॥

अथ पूर्वपार्श्वे दक्षिणापवर्गां चतुर्थीं सीतां विधत्ते—"अथ पूर्वार्द्धेनेति †। तत्र मन्त्रः— "कामं कामदुघे इति ‡। मन्त्रस्याय मर्थः,— हे 'कामदुघे' कामानां प्रपूरणि! हे सीते! 'मित्राय वरुणाय च' तथा 'इन्द्राय', 'अश्विभ्यां' युग्मदेवाभ्यां 'पूष्णे प्रजाभ्य ओषधीभ्यश्च' 'कामं' काम्यमानं फलं 'धुक्ष्व' प्रपूरय। 'इति'-शब्दो मन्त्रसमाप्तिद्योतकः। कृषिः सर्वदेवतासम्बन्धद्वारा मन्त्रोक्तदेवताभ्यः कामप्रपूरण माशास्य मिति मन्त्रतात्पर्य माह— "सर्वदेवत्या वै कृषिरिति। इत्थं दक्षिणादिचतसृषु दिक्षु प्रादक्षिण्येन कृतं कर्षण मभिनयेन

---

* 'हलदन्तात् सप्तम्याः (पा० सू० ६. ३. ६.)'—इति विभक्तेरलुक्; 'आतो धातोः (पा० सू० ६. ४. १४०.)'—इति आ-लोपे हलन्तत्वात्। यद्वा, सोमः पीयतेऽनेनेति सोमपिश्चमसः, तस्य त्सरु निष्पादकम्; न हि लाङ्गलकर्म विना सोमचमसाः स्युः"—इति महीधरः।

† का० श्रौ० सू० १७. २. १६।

‡ वा० सं० १२. ७२।

निर्दिश्य स्तौति— "इत्यग्र इति । 'अग्रे' प्रथमम्, 'इति' अ॰ प्रकारेण "स दक्षिणार्द्धेनेत्युक्तलक्षणेन * दक्षिणतः प्राचीं क्षे॰ कृषति । 'अथ' अनन्तरम्, 'इति' अनेन प्रकारेण "अथ जघना॰ नेत्युक्तलक्षणेन † पश्चिमतः उदीचीं कृषति । 'अथ' अनन्तर॰ 'इति' अनेन प्रकारेण "अथोत्तरार्द्धेनेत्युक्तलक्षणेन ‡ उत्त॰ प्राचीं कृषति । 'अथ' अनन्तरम्, 'इति' अनेन प्रकारेण "॰ पूर्वार्द्धेनेत्युक्तलक्षणेन § पूर्वस्यां दिश्युदग्दक्षिणायतां सीतां॰ षति । 'तत्' एवं सति 'दक्षिणावृत्' प्रादक्षिण्येनावृत्तिर्भवा॰ 'तत्' खलु 'देवत्रा' देवसम्बन्धिनि कर्मणि योग्यम् । त॰ मापस्तम्बेन— "यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करो॰ -इति ‖ ॥ १२ ॥

उक्तं कर्षणं समन्त्रक मनूद्य स्तौति— "चतस्र इ॰ "स दक्षिणार्द्धेनेत्यादिना चतसृषु दिक्षु क्रमेण प्रोक्ताः चत॰ सीताः "शुनं सुफाला विकृषन्तु भूमि मित्यादिना ¶ 'यजु॰ यजुर्वेदपठितमन्त्रेणेत्यर्थः । "चतसृषु दिक्ष्वित्यादि । प्रा॰ दिषु दिक्षु 'यत्' प्रसिद्धं कृष्टपच्यं व्रीहियवादिकम् 'अ॰ अस्ति, 'तत्' 'अस्मिन्' अग्नौ यजमाने वा 'एतत्' एतेन कर्ष॰ 'दधाति' स्थापयति ॥

---

* इहैव श्रुता नवमी कण्डी द्रष्टव्या (१०० पृ० ६ पं०) ।
† इहैव श्रुता दशमी कण्डी द्रष्टव्या (१०० पृ० १४ पं०) ।
‡ इहैव श्रुता एकादशी कण्डी द्रष्टव्या (१०१ पृ० ५ पं०) ।
§ इहैव श्रुतेयं द्वादशी कण्डी द्रष्टव्या (१०१ पृ० १० पं०) ।
‖ आप० का० श्रौ० सू० २४. २. १५ ।
¶ वा० सं० १२. ६९—७२ ।

यजुर्मन्त्रेण कर्षणं प्रकारान्तरेण स्तौति— "तद्वा इति। 'तत्' खलु कर्षणं 'यजुषा' क्रियते, यजुरिति यदस्ति, 'तत् श्रद्धा वै' अनुष्ठेयार्थप्रकाशकत्वात् प्रत्यक्षतो विस्पष्टम्, 'इमाः' प्रागाद्याः 'दिशः' च प्रत्यक्षत्वाद् विस्पष्टतराः; अतो यजुषो दिशाञ्चाद्धात्वसाम्याद् दिक्षु यजुषा कर्षणं युक्ततर मिति भावः॥ १३ ॥

अमन्त्रकं द्वादशसङ्ख्याकानां सीतानां कर्षणं विधाय स्तौति— "अथात्मान मित्यादिना। "यदेव संवत्सर इति। सीतानां संवत्सरसम्बन्धिनां मासानां ( च* ) द्वादशसङ्ख्यासाम्यात् कृत्स्ने संवत्सरे यदेव व्रीहियवादिक मन्नं पचते, 'तत्' सर्वम् 'अस्मिन्' अग्नौ 'एतत्' एतेन द्वादशसीताकर्षणेन दधाति स्थापयतीत्यर्थः॥

अमन्त्रकत्व मनूद्य स्तौति— "तूष्णी मिति। 'तूष्णीम्' अमन्त्रं कृषेत्। तूष्णी मिति यदस्ति, तत् 'अनिरुक्तं वै' मन्त्र-वाक्येन कस्यचिदर्थस्य निष्कृष्यानभिधानात्। अत एव तद-निरुक्तं सर्वात्मकम्, अतः 'सर्वेणैव' साधनेन 'अस्मिन्' अग्नौ 'अन्नं' स्थापितं भवतीत्यर्थः॥

पूर्ववदत्राप्यभिनयेन कर्षणप्रकारं निर्दिश्य स्तौति— "इत्यग्र इति। 'इति' अनेन प्रकारेण 'अग्रे' प्रथम मात्मनो दक्षिणार्द्ध मारभ्य उत्तरार्द्धपर्यन्तं 'कृषति' कर्षणं कुर्यात्। 'अथ' अनन्तरम्, 'इति' अनेन प्रकारेण दक्षिणां श्रोणि मारभ्य उत्तरांसपर्यन्त मक्ष्णया विकृषेत्। 'अथ अनन्तरम्, 'इति' अनेन प्रकारेण

* ङ-पुस्तके चेत्यधिकं पदम्।

पश्चाद्भाग मारभ्य पूर्वार्द्धपर्यन्तं विकृषेत्। एतदनन्तरम्, 'इ अनेन प्रकारेणोत्तरां श्रोणि मारभ्य दक्षिणांसपर्यन्तं वि षेत् इम मेवार्थ मभिप्रेत्य सूत्रितम्— "तूष्णीं तिस्रस्ति प्रदक्षिणं तिर्यगनूक्तेऽक्ष्णया श्रोण्यंसयोरनूक्ते श्रोण्यंसयो:"-इति * 'तत्' तथा उक्तप्रकारेण कर्षणे सति प्रदक्षिणावर्त्तनं सिध्यति तच्च 'देवत्रा' देवेषु योग्यम्। "देवमनुष्येत्यादिना सप्तम त्रा-प्रत्यय: † ॥ १४ ॥

विहितानाममन्त्रकाणां चतसृणां सीतानां प्रत्येकं वि विधाय स्तौति— "तिस्रस्तिस्र इति। "त्रिवृदग्निरित्यादि स्तोत्रियनवकात्मको हि त्रिवृत्स्तोम: ‡, अग्नेरपि रुद्रादि नामाष्टकाभिधेयैरष्टाभिरग्निरूपै: स्वात्मना च नवसङ्ख्योपेतत्वा त्रिवृत्त्वम्। तथाहि— "त मब्रवीद्रुद्रोऽसीत्यारभ्य तान्येतान्यष्ट वग्निरूपाणि कुमारो नवम:, सैवाग्नेस्त्रिवृत्त्वेति षष्ठे सम म्नातम् §। एष च 'यावान्' यत्परिमाणविशिष्टोऽग्नि:, 'अ अग्ने: 'यावती' यत्परिमाणविशिष्टा 'मात्रा' अवयव:, 'तावत ताद्दक्परिमाणविशिष्टेन कृत्स्नेन चाग्निरूपेण 'अस्मिन्' चीय मानेऽग्नौ यजमाने वा 'एतत्' एतेन त्रिसङ्ख्यायुक्तेन कर्ष णेन 'अन्नं' धारयति। एवं सर्वत्र त्रिवृदग्निरिति वाक्यशेष व्याख्येय: ॥ १५ ॥ १६ ॥

अमन्त्रकसीतासङ्ख्यां सम्भूय प्रशंसति— "ता उभय्य इति

---

* का० श्रौ० सू० १७. २. १५—१८।

† पा० सू० ५. ४. ५६।

‡ सा० वे० ता० ब्रा० ३. १, २, ३।

§ ६ का० १ अ० ३ ब्रा० १०—१८ क० ( ६भा० ४१ — ३३ पृ०)।

'उभय्यः' उभयविधाः, समन्त्रकामन्त्रकभेदेन द्विविधाः सम्भूय षोडशसङ्ख्याका भवन्ति। 'षोडशकलः' षोडशावयवसमुदायो हि स्थूलशरीराभिमानी विराडात्मकः प्रजापतिरभिधीयते। तथाहि ;— तस्य ज्ञानेन्द्रियाणि पञ्च, तथा कर्मेन्द्रियाणि, मन एकम्, पञ्चभिर्भूतैर्वा प्राणैर्वा सह षोडशकलाः। गत मन्यत्। "आत्मसम्मित मिति। आत्मना शरीरेण समानं मितम्, न तु न्यून मधिकं वेत्यर्थः। आत्मसम्मितां तस्य तृप्तिहेतुता माह— "यदु वा इति। 'यत्' खलु 'आत्मसम्मित मन्नम्', 'तद्' भोक्तॄन् 'अवति' रक्षति। अत एतदन्नं सात्म्यं सत् 'न हिनस्ति' न बाधते। अधिकन्यूनयोरुक्तविपरीत्यं क्रमेणाह— "यद्भूय इति। 'भूयः' बहुतर मात्मनोऽधिकम्, 'कनीयः' अल्पतर मात्मनोऽपर्याप्त मित्यर्थः॥ १७॥

विकर्षणं प्रकारान्तरेण स्तोतु मनुवदति— "यद्वेदेन मिति। पुरा खलु पितरं प्रजापतिं 'संस्करिष्यन्तो देवाः' 'पुरस्तात्' चयनलक्षणात् संस्कारात् पूर्वम् 'अस्मिन्' प्रजापतौ 'एतत्' एतेन विकर्षणेन 'अदधुः' अधारयन्। 'तथैव' 'अयं' यजमानोऽपि 'संस्करिष्यन्' 'अस्मिन्' चेष्यमाणेऽग्निलक्षणे प्रजापतौ पूर्वं 'प्राणान्' स्थापयति। कथ मेतदित्यत आह— "लेखा भवन्तीति। 'हि' यस्मात् लोके चक्षुरादिगोलकात्मिकासु 'लेखासु' रेखासु 'इमे प्राणाः' चक्षुरादीन्द्रियाणि वर्तन्ते; अतस्तेषा मत्र स्थाप्यमानानां सञ्चरणार्थं कर्षणेन रेखाकरणं युक्त मिति भावः॥ १८॥

समन्त्रकं कर्षण मनूद्य सङ्ख्याद्वारा स्तौति— "चतस्र इति। 'शीर्षन्' शीर्ष्णि शिरसि 'ये इमे चत्वारो निरुक्ताः'

चक्षुः श्रोत्रं नासिका मुख मिति निःशेषेणोक्ताः प्रका- मानाः 'प्राणाः', 'तान्' 'अस्मिन्' अग्नौ एतेन सयजुष्केण सी- चतुष्टयेन स्थापितवान् भवति। एतदेव विवृणोति— " यजुषेति। "अद्वेत्यादि। प्रागुक्तार्थः * ॥ १९ ॥

अमन्त्रकं कर्षण मनूद्य स्तौति— "यद्वेवात्मान मिति 'अन्तरात्मन्' आत्मनि देहे अन्तर्मध्ये 'य एवेमे' 'प्राण प्राणवृत्तयः प्राणापानादिलक्षणाः, मनोबुद्ध्यादिरूपा अन्तः- करणवृत्तयश्च, 'तान्' 'अस्मिन्' अग्नौ 'एतत्' एतेनामन्त्रकाकर्ष- 'दधाति' स्थापयति। एतदेव विवृणोति— "तूष्णी मिति 'यावन्तः' यत्परिमाणविशिष्टाः 'इमे' अन्तरात्मन्यवस्थित 'प्राणाः' इति, 'को नाम तद्वेद' ? तेषा मानन्त्यात्; कि- न कश्चिदपि वेत्तुं शक्नोति। तस्मादनिरुक्तानां तेषां सङ्ग्रहण तूष्णी मात्मनो द्वादशसीताकर्षणं युक्त मित्यर्थः ॥ २० ॥

कर्षणानन्तर मनडुहां विमोचनं विधत्ते— "अथैन निति †। "अग्नेरित्यादि। 'यस्मै' खलु प्रयोजनाय 'एना- पूर्वं युक्तवान्, 'तं' कामं कर्षणलक्षणं प्रयोजनम् 'आप्ना' लब्ध- तेषां विमोचनं युक्त मिति शेषः ॥

विमोचने मन्त्रं विधाय व्याचष्टे— "विमुच्यध्व मिति ‡ "अघ्न्या"-इति गोनाम §। 'एते' खल्वनड्वाहो 'देवत्रा' दे- 'अघ्न्याः' अहन्तव्याः, देवसम्बन्धिनो गाव इत्यर्थः। "देव-

* त्रयोदशकाण्डीयाख्यानं द्रष्टव्यम् ११७पृ० ३प०)
† का० श्रौ० सू० १७. २. २१।
‡ वा सं० १२. ७३।
§ निघ० २. ११. १।

द्योभिरिति। 'एभिः' अनडुद्भिः 'दैवं' देवसम्बन्धि कर्षणलक्षणं 'कर्म करोति'। तस्माद्देवान् याति प्राप्नोत्येभिरिति व्युत्पत्त्या 'दैवयानाः'-इत्यनडुद्विशेषणं युक्त मिति भावः॥

द्वितीयं पाद मनूद्य तत्रत्यतमःशब्दस्य विवक्षित मर्थं माह— "अगन्मेति। अशनस्येच्छा 'अशनाया' क्षुत्पीडा। स्पष्ट मन्यत्। "ज्योतिर्हीत्यादि। यो हि हविःप्रदातृत्वेन यज्ञं, तत्रत्यान् देवांश्च प्राप्नोति, एष हि 'ज्योतिः' ज्योतिर्मयं स्वर्गादिभोगयोग्यं शरीरम् 'आप्नोति'। अत एव तैत्तिरीये समाम्नायते— "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि"-इति *। अतोऽत्र मन्त्रे "ज्योतिरापाम"-इति ज्योतिराप्तिप्रतिपादनं युक्ततर मित्यर्थः॥

उत्तरपूर्वस्यां दिशि तेषा मनडुहां प्रस्थापनं विधत्ते— "अथैनानुदीच इति †। 'अथ' विमोचनानन्तर मेव अनडुहः 'उदीचः' उदङ्मुखान् 'प्राचः' प्राङ्मुखांश्च कृत्वा 'प्रसृजति' प्रस्थापयति। प्रागुदक्त्वस्य स्तावकं प्रागाम्नातं वाक्यशेष मतिदिशति— "तस्योक्त इति। "एषा ह्येभयेषां देवमनुष्याणां दिग्यदुदीची-प्राचीत्यादि ‡॥

तेषां दक्षिणाकाले दानं विधत्ते— "तानध्वर्यव इति। अत एव सूत्रितम्— "दक्षिणाकालेऽध्वर्यवे ददाति"-इति §। अन्यानृत्विजो विहायाध्वर्योरेव सम्प्रदानत्वे कारण माह— "स

* तै० सं० ५. ४. १. ७।

† का० श्रौ० सू० (१७. २. २२ क) १६. ३. १५ द्रष्टव्यम्।

‡ पुरस्तात् ६ का० ४ प्र० ४ ब्रा० ३ कं० द्रष्टव्या।

§ का० श्रौ० सू० १७. २. २२ ख।

होति । 'हि' यस्मात् 'सः' अध्वर्युः 'तैः' अनडुद्भिः का 'करोति', तस्मादध्वर्यवे दानं युक्त मिति भावः *। तद्धि दाने कालविशेषं विधत्ते— "तांस्त्विति । ऋत्विक्परिक्रयहेतु दातव्या गावो दक्षिणाः, तासां यः कालो माध्यन्दिनस नात्मकः, तस्मिन्, 'तान्' अनडुहः 'अनुदिशेत्' दद्यादि यावत् ॥ २१ ॥ ४ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

## ॥ इति सप्तमकाण्डे प्रथमः प्रपाठकः ॥

---

* का० श्रौ० सू० १७. २. २० । दीर्घप्रयुक्तेषु प्रतिप्रस्थातृ ऋत्विजः पुरुषाः लभन्ति, तिर्यक्प्रयुक्तेष्वध्वर्युरेवेति तत्सूत्राशयः ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम्।

॥ हरिः ॐ ॥

अथ दर्भस्तम्ब मुपदधाति। एतद् वै देवा ओषधीरुपादधत तथैवैतद् यजमान ओषधीरुपधत्ते ॥ १ ॥

यद्वेव दर्भस्तम्ब मुपदधाति। जायत ऽएष एतद्यच्चीयते स एष सर्व्वस्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं यद्दर्भा आपश्च ह्येता ओषधयश्च या वै वृत्राद्बीभत्समाना आपो धन्व दृभन्त्य उदायंस्ते दर्भा अभवन्यद् दृभन्त्य उदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या आपो वृत्राभिप्रचरिता * यद्दर्भा यदु दर्भास्तेनौषधय उभयेनैवैन मेतदन्नेन प्रीणाति ॥ २ ॥

* "आपोऽवृत्राभिप्रचरिता"—इति स्वाध्यायस्य सम्मतः पाठः।

सीतासमरे * । व्वाग्वै सीतासमरः प्रा
वै सीतास्तासा मयᳲ समयो व्वाचि वै प्राणेभ्यो
ऽन्नं धीयते मध्यतो मध्यत एवास्मिन्नेतद
दधाति तूष्णी मनिरुक्तं वै तद्यत्तूष्णीᳲ सर्वं
ऽअनिरुक्तᳲ सर्व्वेणैवास्मिन्नेतदन्नं दधाति ॥ ३ ॥

अथैन मभिजुहोति । जायत ऽएष एतद्य
यते स एष सर्व्वस्मा ऽअन्नाय जायते सर्व्व
ऽअस्यैष रसो यदाज्य मपां च ह्येष ओषधीनां
रसो ऽस्यैवैन मेतत् सर्व्वस्य रसेन प्रीणाति य
वानु वै रसस्तावानात्मात्मनैवैन मेतत् सर्व्वेण प्री
णाति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चऽर्त्त
संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मा
तावतैवैन मेतदन्नेन प्रीणाति † ॥ ४ ॥

यद्वेवैन मभिजुहोति । एतद्वै यत्रैतं प्रा
ऋषयो ऽग्रे ऽग्निᳲ समस्कुर्व्वंस्तदस्मिन्नेतं पुरस्ता
भाग मकुर्व्वत तस्मात् पुरस्ताद् भागास्तद्यदा

* 'सितासमरे'—इति ग, घ ।

† 'प्रीणाति'—इति क ।

जुहोति य ऽएवास्मिंस्ते प्राणा ऋषयः पुरस्ताद् भाग मकुर्व्वत तानेवैतत् प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ५ ॥

यद्वेवैन मभिजुहोति। एतद्वै यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन् भवति यान्स्तोमान्यानि पृष्ठानि यानि छन्दाꣳसि तेभ्य एतं पुरस्ताद् भागं करोति तान्येवैतत् प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ६ ॥

यद्वेवैन मभिजुहोति। एतद्वै देवा अबिभयुर्यद्वै वा ऽइदं कर्म्म यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएता मेतस्य कर्म्मणः पुरस्तात् सꣳस्था मपश्यंस्त मत्रैव सर्व्वꣳ समस्थापयन्नवाचिन्वंस्तथैवैन मय मेतदत्रैव सर्व्वꣳ सꣳस्थापयत्यव चिनोति * ॥ ७ ॥

सजूरब्द इति चितिः। अयवोभिरिति पुरीषꣳ सजूरुषा इति चितिररुणीभिरिति पुरीषꣳ सजोषसावश्विनेति चितिर्दꣳसोभिरिति पुरीषꣳ

* 'चिनोति' इति क।

सजूः सूर इति चितिरेतशेनेति पुरीषᳪ स
वैश्वानर इति चितिरिडयेति पुरीषं घृतेने
चितिः स्वेति पुरीषᳪ हेति चितिः ॥ ८ ॥

त्रयोदशैता व्याहृतयो भवन्ति । त्रयोद
मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि याव
नग्निर्यावत्यस्य मात्रा तावन्त मेवैन मेतच्चिनोत्याज्ये
जुहोत्यग्निरेष यदाज्य मग्नि मेवैतच्चिनोति पञ्च
गृहीतेन पञ्चचितिकोऽग्निः पञ्चऽर्त्तवः संवत्स
संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा ताव
मेवैन मेतच्चिनोत्यूर्द्ध्वा मुद्गृह्णन् जुहोत्यूर्द्ध्वं तदग्नि
चितिभिश्चिनोति ॥ ९ ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. ३.] ॥

अथ कुशस्तम्बोपधानं विधत्ते— "अथ दर्भस्तम्ब मिति
एकमूलोऽनेकशाखः स्तम्ब इत्युच्यते, दर्भाणां स्तम्बो दर्भस्तम्बः
तम् आत्ममध्ये तूष्णीम् 'उपदधाति' स्थापयेदित्यर्थः । तदु
पधानं देवकर्त्तृकौषध्युपधानद्वारा स्तौति— "एतद्वा इति
'उपादधत' उपहितवन्तः । "तथैवैतदिति, प्रकृते योजनम् ॥ १ ॥

तदेव प्रकारान्तरेणापि स्तौति—"यद्वेवेति । 'स एषः' आह
वनीयोऽग्निः 'चीयते' चयनेन सम्पाद्यते, 'एषः' 'जायते' उत्पद्य

'स एष:' जायमानोऽग्निः 'सर्वस्मै' कृत्स्नाय 'अन्नाय' तदुपभोक्तुं जायते। दर्भाणां नामनिर्वचनद्वारा उभयविधात्व माह— "उभयम्वेतदिति। उभयं किं मित्यत आह— "यद्दर्भा इति। उभयविधत्व मेव विवृणोति— "या वै वृत्रादिति। "वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये"-इत्युपक्रम्य, "तस्मादु हैका आपो बीभत्साञ्चक्रिरे"-इत्यादिना प्रथमकाण्डे अपां दर्भभावप्रत्ययादिति *। 'या:' आप: वृत्रासुराद् 'बीभत्समाना:' जुगुप्समाना: जुगुप्साश्रयत्वादि कुर्वाणा इत्यर्थः। 'धन्व' अन्तरिक्षं 'दृम्भन्त्यः' गुम्फनं कुर्वन्त्य: आप: 'उदायन्' उन्नतवत्य:। "धन्वान्तरिक्षम्; धन्वन्त्यस्मादाप:"-इति † हि यास्कः। दृभन्त्य इति, तौदादिकात् "दृभी गुम्फने"-इति ‡ धातो: शतरि "ऋन्नेभ्यो ङीप्" §। 'ते दर्भा अभवन्' आप एव दर्भत्वं प्राप्ता इत्यर्थः। ते इति पुल्लिङ्गं दर्भापेक्षम्। दर्भनाम निर्वक्ति— "यद्दृभन्त्य इति। 'यत्' यस्माद् दृम्भन्त्यो गुम्फनं कुर्वन्त्य आप उन्नतवत्य:, 'तस्माद्' दर्भणादापो 'दर्भा:' दर्भशब्दवाच्या इत्यर्थः। दर्भभूतास्ता अप: प्रशंसति— "ता हैता इति। ये दर्भा: 'ता:' एता आप: 'शुद्धा:' शुद्धिसाधनभूता:, तथा 'मेध्या:' मेधार्हा:। तदेव विस्पष्टयति— "आपोऽवृत्राभिप्रक्षरिता इति। न वृत्रात् 'अभिप्रक्षरिता:' अभिप्रस्रुता: 'उ' पुन: 'यत्' यस्माद् 'दर्भा:', 'तेन' कारणेन 'ओषधय:'। दर्भाणा मोषधित्व मन्यत्राप्याम्नायते— "ओष-

---

* १ का० १ प्र० ३ ब्रा० ४, ५ क० (१ भा० ६० पृ०)।

† निरु० ५. १. ६।

‡ तु० प० ४३ धा०।

§ पा० सू० ४. १. ५।

चयी बर्हिरिति। उभयविधत्व मुपयोगप्रतिपादनेनोपसंहरति "उभयेनैवैन मिति। 'एनं' चित्याग्निम् 'एतत्' एतेनोभयवि अन्नेन 'प्रीणाति' ॥ २ ॥

तदुपधानं क्षेत्रे विधाय स्तौति— "सीतासमर इति कृष्टाः सीताः 'समृच्छन्ते' सङ्गच्छन्ते यत्रासौ 'सीतासम क्षेत्रमध्यप्रदेशः, तत्रोपदध्यादिति शेषः। आधियज्ञिक सीतासमरस्याध्यात्मं मुखरूपता माह— "वाग्वा इति वागायतनत्वाद् 'वाक्' मुखं खलु 'सीतासमरः'। कथ मि पेक्षायां तदुपपादयति— "प्राणा वा इति। 'प्राणाः' 'सीताः' नाड्यः तत्सञ्चारित्वात्। 'तासां' नाडीरूपाणां सीता 'अयं' मुखलक्षणः 'समयः' सङ्गमः, सम्यगयन्ते सङ्गच्छ यत्र सोऽयं समयः; मुखे हि सर्वाः प्राणा नाड्यः स च्छन्ते। ततः कि मित्याकाङ्क्षाया माह— "वाचि वा इति 'वाचि वै' मुखे एव 'प्राणेभ्यः' अर्थे 'अन्नं' 'धीयते' स्थाप्य मुखेनैव हि जग्धेऽन्ने प्राणाना माप्यायनस्य सद्भावात्। सीत समरेऽपि मध्यदेशे उपदध्यादित्याह— "मध्यत इति। स म्यर्थे तसिलयम्। 'अस्मिन्' चित्याग्नौ मध्ये एव 'एतत्' एतेनं अ स्थापितवान् भवति। उपधाने मन्त्राभावं विधत्ते— "तू मिति। तदेवोपपादयति। "अनिरुक्तं वा इति। स्पष्टोऽर्थः ॥ ३

अभिहोमं विधत्ते— "अथैन मभीति। 'एनं' दर्भस्तम्ब "जायत एष इत्यादि। पूर्ववद् व्याख्येयम् *। अभिहोमे आ द्रव्यं विधातुं स्तौति—"सर्वस्मो ऽअस्यैष इति, 'यत्' आज्यं' स

* एतत्पूर्वकण्डीभाष्ये (१२७ पृ०) द्रष्टव्यम्।

'एष:' 'अस्य' 'सर्वस्य' विश्वस्य 'रस:'। रसत्व मेवोपपादयति— "अपां च हीति। अपा मोषधीनाञ्च गोभि: पानाद् भक्षणाच्च ह्याज्य मुत्पद्यते। रसत्वोपपादनस्य प्रयोजन माह— "अस्यैवेन मिति। 'एनं' चित्याग्निं 'प्रीणाति' तर्पयति। सर्वरसत्वकथने कारण माह— "यावानु वा इति। 'रस:' 'यावान्' यत्परिमाण-विशिष्ट:, 'आत्मा' देहोऽपि 'तावान्' तत्परिमाणविशिष्ट एव; देहस्य रसोपजीवनत्वात्। "अनेनेति। 'सर्वेण' रसेनेत्यर्थ:।

आज्यस्य पञ्चगृहीतत्वं विधत्ते— "पञ्चगृहीतेनेति *। पञ्च-गृहीतत्वं स्तौति— "पञ्चचितिकोऽग्निरित्यादिना। 'पञ्चर्त्तव:' पञ्चर्त्वात्मक: 'संवत्सर:'; हेमन्तशिशिरयो समासेन †। "संवत्सरो-ऽग्नि: इत्यादि गतार्थम् ‡ ॥ ४ ॥

प्रकारान्तरेणाभिहोमं स्तौति— "यद्वेवैन मिति। 'एतद्वै' कारणं खलु 'यत्र' यदा 'प्राणा:' एव 'ऋषय:' 'अग्रे' प्रपञ्च-सृष्टे: पुरा 'एनम्' अग्निं चित्याख्यं संस्कृतवन्त:, 'तत्' तदा 'अस्मिन्' अग्नौ 'एतम्' अभिहोमलक्षणं 'पुरस्ताद्' 'भागम्' चय-नात् प्रागेव भजनीय मंशम् 'अकुर्वत' सम्पादितवन्त:, 'तस्मात्' ते ऋषय: 'पुरस्ताद्भागा:' पुरस्तादादौ भागो भजनीयोऽंशो येषां ते पुरस्ताद्भागा:, प्रथमपूज्या इत्यर्थ:। "तद्यदिति। 'तत्' तत्र यत्कारणात् 'अभिजुहोति', इदानीन्तनो यजमान इति शेष:। 'ये' पुरस्ताद् भागकर्त्तार: प्राणरूपा ऋषय:, 'तानेव' 'एतत्'

---

* का० श्रौ० सू० १७. ३. २।

† ऐ० ब्रा० १. १. १ द्रष्टव्यम्।

‡ १भा० ३६पृ०, इह च पुरस्तात् १०२ पृ० १६ क०।

एतेनाग्निहोत्रेण तर्पयतीति तत्कारण मित्यर्थः। "आ
त्यादि। व्याख्यातम् * ॥ ५ ॥

प्रकारान्तरेण त मेवाग्निहोत्रं स्तौति— "यद्वेवेति। '
स्मिन् अग्नौ' चित्यात्मके 'यानि रूपाणि' गार्हपत्यचि
धिष्ण्यलक्षणानि, तथा 'यान् स्तोमान्' स्तोत्रियसमूहान् ि
त्पञ्चदशादीन्, 'यानि पृष्ठानि' बृहद्रथन्तरादीनि, 'यानि
छन्दांसि' गायत्र्यादीनि, 'उपधास्यन्' एतेषा मुपधानं क
ष्यन् 'भवति', 'तेभ्यः' रूपादिभ्य 'एतम्' अग्निहोत्रलक्षणं '
स्तात् भागं' सम्पादयति। 'तान्येव' रूपादीनि 'एतत्' ए
तर्पयति। "आज्येनेत्यादि। पूर्ववत् † ॥ ६ ॥

प्रकारान्तरेणाप्यग्निहोत्र मेव स्तौति— "यद्वेवेति। 'ए
एतेन हेतुना 'देवाः' 'अबिभयुः' भीतवन्तः। भयस्वरूप
विशदयति— "दीर्घं वा इत्यादिना। 'इदं' चयनलक्ष
'कर्म', 'दीर्घं' विस्तृतं खलु। अस्तु पुनर्द्राघीयः, तावता
भयहेतुरित्यत आह— "यद्वै न इति। 'नः' अस्माकम् 'इ
दीर्घे कर्मणि 'इमम्' अग्निं 'नाष्ट्रा रक्षांसि' 'न हन्युः' हिंस्युरिति
अयं सम्भावने लिङ् ‡, 'इति'-शब्दो देवाभिप्रायसमाप्तौ। भीति
निवृत्तिप्रकारं दृष्टवन्त इत्याह— "त एता मिति। 'ते' दे
'एतस्य' दीर्घस्य चयनाख्यकर्मणः 'पुरस्तात्' चयनात् प्रागे
'एवैताम्' अग्निहोत्रलक्षणां 'संस्थां' समाप्तिम् 'अपश्यन्' दृष्टव
दृष्ट्वा चानुष्ठितवन्त इत्याह— "त मत्रैवेति। 'अत्रैव' चयना

*, † इहैव पुरस्तात् ४ क० १२६ पृ० ८ प० द्रष्टव्यम्।
‡ ६ पा० सू० ३. ३. १६१।

प्रागवसरे एव 'तं' चित्यात्मक मग्निं सर्वं निरवशेषं 'समस्थापयन्' समापितवन्तः, अत्रादावित्यर्थः। 'अचिन्वन्' चितवन्त इति भाविनि भूतवदुपचारः। उक्त मर्थं प्रकृते योजयति— "तथैवैन मिति ॥ ७ ॥

अभिहोमे मन्त्रं विधाय व्याहृतिरूपेण त्रयोदशधा विभज्य चितिपुरीषात्मना स्तौति— "सजूरब्द इति चितिरित्यादिना *। मन्त्रार्थस्तु,— 'अब्दः' संवत्सरः 'अयवोभिः' मासैरर्द्धमासैश्च 'सजूः' समानजोषणः। यवा अयवाश्चार्द्धमासा मासाश्चोच्यन्ते; अर्द्धमासा एव वा, "पूर्वपक्षा वै यवा अपरपक्षा अयवाः"-इति श्रुतेः †। 'उषाः' रात्रेरपरः कालः। 'अरुणीभिः' अरुणवर्णाभिर्गोभिः 'सजूः' समानजोषणः। "अरुण्यो गाव उषसः"-इति निघण्टुः ‡। 'अश्विना' नासत्यौ देवौ 'दंसोभिः' कर्मभिः सजोषसौ समानजोषणौ। 'सूरः' सूर्यः 'एतशेन' हरितवर्णेनाश्वेन 'सजूः'। 'वैश्वानरः' विश्वनरनेता अग्निः 'इडया' अन्नाख्या घृतेन 'आज्येन हविषा च 'सजूः' 'स्वाहा' इद माज्यं सुहुत मस्तु ॥ ८ ॥

त्रयोदशधा विभक्ता मन्त्रावयवा व्याहृतिरूपाः स्युरित्याह— "त्रयोदशैता इति। व्याक्रियन्त एति 'व्याहृतयः'। 'एताः' इति स्त्रीलिङ्गत्वं व्याहृतिशब्दापेक्षम्। व्याहृतिगतां त्रयोदशसङ्ख्यां प्रशंसति— "त्रयोदश मासा इति। संसर्प्योंहस्पतिसञ्ज्ञको-

---

* वा सं० १२. ७४।

† शत० ब्रा० ८ का० २ प्र० ५ ब्रा० ११ क०।

‡ १ अ० १५ ख० ७ प०।

ऽधिमासस्त्रयोदश: * ; "अस्ति त्रयोदशो मास:"-इतिश्रुते: †
"त्रयोदशाग्नेरिति। चित्यस्याग्नेश्चितय: पुरीषाणि च मिलि
त्रयोदश सम्पद्यन्ते। तथाहि— आदितश्चतस्रश्चितय:, पुरीषनिव
मान्ता:, स्तोमभागान्ता पञ्चमी चिति:, तदनन्तरभावि पुरी
मेकम्; नाकसत्प्रभृतिपुरीषनिवपनान्ता षष्ठी चितिरिति द्वे, ता
विकर्णीस्वयमातृण्णयोरुपधानं हिरण्यशकलै: प्रोक्षण मग्न
भ्याधानं चेति सप्तमी चिति:। सा त्रयोदशीत्यादिविभाग ऊह्य
"यावानग्निरित्यादि। असकृद् गतम् ॥

आज्यस्य होमसाधनत्व मनूद्य प्रशंसति— "आज्येनेत्य
दिना। आज्यस्याग्नित्वम् "तेजो वै घृतम्"-इतिश्रुते: ‡। "प
गृहीतेनेत्यादि। व्याख्यातचरम्। तत्राभिहोमे स्रुच उद्गृहीतत्
विधाय प्रशंसति— "ऊर्द्ध्वा मिति। 'उद्गृह्णन्' स्रुच मूर्द्ध्वां कुर्व
जुहोतीत्यर्थ:। 'तत्' तेन स्रुच ऊर्द्ध्वकरणेन 'अग्निं' प्रज
'चितिभि:' ऊर्द्ध्वं चितवान् भवति। "पञ्चगृहीतेनोद्गृह्णन्नभि
जुहोति सजूरब्द इति"-इति सूत्रम् § ॥ ८ ॥ [२. ३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

---

* अत्र मागे ३६ पृ० ६ पं० द्रष्टव्या।
† शत० ब्रा० ४. २. ५. ५।
‡ ऐ० ब्रा० ८. ४. ६। तै० सं० २. ५. २. ७।
§ का० श्रौ० सू० १७. ३. २। वा० सं० १२. ७४।

( अथ चतुर्थं ब्राह्मणम्. )

अथोदचमसान्निनयति। एतद्वै देवा * अब्रुवं-श्चेतयध्व मिति चिति मिच्छतेति व्वाव तदब्रुवंस्ते चेतयमाना व्वृष्टि मेव चिति मपश्यंस्ता मस्मिन्न-दधुस्तथैवास्मिन्नय मेत द्दधाति ॥ १ ॥

उदचमसा भवन्ति †। आपो वै व्वृष्टिर्व्वृष्टि मेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धु-श्चतुःस्रक्तिना चतस्रो वै दिशः सर्व्वाभ्य एवा-स्मिन्नेतद्दिग्भ्यो व्वृष्टिं दधाति ॥ २ ॥

त्रींस्त्रीनुदचमसान्निनयति। त्रिवृदग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद् वृष्टिं दधाति ॥ ३ ॥

द्वादशोदचमसान् कृष्टे निनयति। द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद् वृष्टिं दधाति ॥ ४ ॥

स वै कृष्टे निनयति। तस्मात् कृष्टाय व्वर्षति स यत् कृष्ट ऽएव निनयेन्नाकृष्टे कृष्टायैव

* 'देवाः' —इति ख। † 'भवन्ति'—इति क।

व्वर्षेन्नाकृष्टायाथ यदकृष्टऽएव निनयेन्न कृष्टेऽकृष्टायैव व्वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात् कृष्टाय चाकृष्टाय च व्वर्षति ॥ ५ ॥

त्रीन् कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्‌वृष्टिं दधाति ॥ ६ ॥

यद्वेवोदचमसान्निनयति । एतद्वा ऽअस्मिन् देवाः संस्करिष्यन्तः पुरस्तादपो दधुस्तथैवास्मिन्नेतत् संस्करिष्यन् पुरस्तादपो दधाति ॥ ७ ॥

त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ८ ॥

द्वादशोदचमसान् कृष्टे निनयति । द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ९ ॥

स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत् कृष्ट ऽएव निनयेन्नाकृष्टे प्राणेष्वेवापः स्युर्नेतरस्मिन्नात्मन्नथ यदकृष्ट ऽएव निनयेन्न कृ

ऽआत्मन्नेवापः स्युर्न् * प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमा उभयत्रापः प्राणेषु चात्मंश्च ॥ १० ॥

त्रीन् कृष्टे चाकृष्टे च निनयति। त्रिवृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ११ ॥

पञ्चदशोदचमसान्निनयति। पञ्चदशो वै वज्र एतेनैवास्यैतत् पञ्चदशेन वज्रेण सर्व्वं पाप्मान मपहन्ति † ॥ १२ ॥

अथ सर्व्वौषधं वपति। एतद्वै देवा ऽअब्रु-वंश्चेतयध्व मिति चिति मिच्छतेति व्वाव तद-ब्रुवंस्ते चेतयमाना अन्न मेव चितिमपश्यंस्ता म-स्मिन्नदधुस्तथैवास्मिन्नय मेतद्दधाति ॥ १३ ॥

सर्व्वौषधं भवति। सर्व्व मेव तदन्नं यत् सर्व्वौषधꣳ सर्व्व मेवास्मिन्नेतदन्नं दधाति तेषा मेकमन्न मुद्धरेत्तस्य नाश्नीयाद्यावज्जीव मौदुम्बरेण

* 'स्युन्न्'—इति क।

† 'मपहन्ति'—इति क।

चमसेन तस्योक्तो बन्धु श्चतुःस्रक्तिना चतस्रो
दिशः सर्व्वाभ्य एवास्मिन्नेतद्दिग्भ्यो ऽन्नं दध
त्यनुष्टुब्भि र्व्वपति व्वाग्वा ऽअनुष्टुब् वाचो
ऽअन्न मद्यते ॥ १४ ॥

तिसृभिस्तिसृभिर्ऋग्भि र्व्वपति । त्रिवृदग्नि
वानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं
धाति ॥ १५ ॥

द्वादशभिर्ऋग्भिः कृष्टे व्वपति । द्वा
मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्
मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥

स वै कृष्टे व्वपति । तस्मात् कृष्टेऽन्नं पच्य
यत् कृष्टऽएव व्वपेन्नाकृष्टे कृष्टऽएवान्नं पच्येत
कृष्टेऽथ यदकृष्टऽएव व्वपेन्न कृष्टेऽकृष्टऽएवा
पच्येत न कृष्टे कृष्टे चाकृष्टे च व्वपति तस्मा
कृष्टे चान्नं पच्यते ॥ १७ ॥

तिसृभिः कृष्टे चाकृष्टे च व्वपति । त्रि
दग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेत
दधाति ॥ १८ ॥

यद्वेव सर्व्वौषधं व्वपति। एतद्वा ऽएनं देवाः संस्करिष्यन्तः पुरस्तात् सर्व्वेण भेषजेनाभिषज्यं-स्तथैवैन मय मेतत् संस्करिष्यन् पुरस्तात् सर्व्वेण भेषजेन भिषज्यति ॥ १९ ॥

सर्व्वौषधं भवति। सर्व्वं मेतद् भेषजं यत् सर्व्वौषधꣳ सर्व्वेणैवैन मेतद् भेषजेन भिषज्यति ॥ २० ॥

तिसृभिस्तिसृभिर्ऋग्भिर्व्वपति। त्रिवृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद् भिषज्यति ॥ २१ ॥

द्वादशभिर्ऋग्भिः कृष्टे व्वपति। द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद् भिषज्यति ॥ २२ ॥

स वै कृष्टे व्वपति। प्राणांस्तद्भिषज्यति स यत् कृष्ट ऽएव व्वपेन्नाकृष्टे प्राणानेव भिषज्येन्ने-तर मात्मान मथ यदकृष्टऽएव व्वपेन्न कृष्ट ऽआत्मान मेव भिषज्येन्न प्राणान् कृष्टे चाकृष्टे च व्वपति प्राणांश्च तदात्मानं च भिषज्यति ॥ २३ ॥

तिसृभिः कृष्टे चाकृष्टे च व्वपति। त्रिवृ
दग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत
भिषज्यति ॥ २४ ॥

पञ्चदशोदचमसान्निनयति। पञ्चदशभिर्ऋग्भि
र्व्वपति तच्चिꣳशच्चिꣳशदक्षरा व्विराड्विराडु कृत्
मन्नꣳ सर्व्व मेवास्मिन्नेतत् कृत्स्नमन्नं दधाति ॥२५॥

या ओषधीः पूर्व्वा जाताः। देवेभ्यस्त्रियु
पुरेत्यृतवो वै देवास्तेभ्य ऽएतास्त्रिः पुरा जाय
व्वसन्ता प्रावृषि शरदि मनै नु बभ्रूणा मह मि
सोमो वै बभ्रुः सौम्या ऽओषधय ओषधः पुरु
शतं धामानीति यदिदꣳ शतायुः शतार्घः शत
वीर्य ऽएतानि हास्य तानि शतं धामानि स
चेति य ऽएवेमे सप्त शीर्षन्प्राणास्तानेतदाह ॥ २६ ॥

शतं वो ऽअम्ब धामानि। सहस्र मुत
रुह इति यदिदꣳ शतधा च सहस्रधा च व्विरू
अधा शतक्रत्वो यूय मिमं मे ऽअगदं कृतेति य मि
भिषज्यामीत्येतत् * ॥ २७ ॥

* 'भिषज्यामीत्येतत्'—इति ग, घ

ता एता एकव्याख्यानाः । एत मेवाभि यथैत मेव भिषज्येदेतं पारयेत्ता अनुष्टुभो भवन्ति व्वाग्वा ऽअनुष्टुप् व्वागु सर्व्वं भेषजᳫं सर्व्वेणैवेन मेतद् भेषजेन भिषज्यति ॥ २८ ॥

अथातो निरुक्तानिरुक्ताना मेव * । यजुषा द्वावनड्वाहौ युनक्ति तूष्णी मितरान्यजुषा चतस्रः सीताः कृषति तूष्णी मितरास्तूष्णीं दर्भस्तम्ब मुपदधाति यजुषाभिजुहोति तूष्णी मुदचमसान्निनयति यजुषा व्वपति ॥ २९ ॥

प्रजापतिरेषोऽग्निः । उभयम्वेतत् प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितᳫं रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्त मपरिमितᳫं रूपं तदस्य तेन संस्करोति स ह वा ऽएतᳫं सर्व्वं कृत्स्नं प्रजापतिं संस्करोति य एवं व्विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष यदग्निस्तस्मात्

* 'मेव'—इति ग, घ ।

पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्य निरुक्तानि ॥ ३० ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२. ४.] ॥

अथ कृष्टे चैते कर्षणकर्मणोदचमसकरणक मपान्नि विधत्ते— "अथोदचमसान्निनयतीति। उदकपूर्णाश्चमसा उ चमसास्तानासिञ्चेदित्यर्थः। "एतद्वै देवा इत्याद्यसकृद् गतम् * "वृष्टि मेवेति। वर्षणरूपां चितिं मित्यर्थः ॥ १ ॥

उदकनिनयने चमसकरणतां विधाय वृष्ट्यात्मना स्तौति- "उदचमसा भवन्तीति। 'वृष्टिरापः खलु' अपां वृष्टिजत्वात्। चमसस्य उदुम्बरविकारत्वं विधत्ते— "औदुम्बरेणेति "तस्योक्त इति। उदुम्बरविकारत्वस्यार्थवादः। "तदेतत् सर्वं म यदुदुम्बरः, सर्वे वनस्पतय इत्यादिना षष्ठकाण्डे प्रपञ्चि इत्यर्थः †। चमसस्य चतुष्कोणत्वं विधाय प्रशंसति—चतुःस्रक्ति नेति। "सर्वाभ्य इति। चतसृभ्योऽपि दिग्भ्य इत्यर्थः ॥ २ ॥

चतसृषु चतसृषु सीतासु त्रयाणां त्रयाणा मुदचमसानां निनय विधाय प्रशंसति— "त्रींस्त्रीनिति ‡। "नित्यवीप्सयोः"-इति § द्विर्वचनम्। "त्रिवृदग्निरित्याद्यसकृदुक्तार्थम् ‖ ॥ ३ ॥

---

* पुरस्तादिहैव १२३ पृ० द्रष्टव्यम्।

† ६ अ० ३ ब्रा० ३ क० (६ भा० १३८ पृ०)।

‡ का० श्रौ० सू० १७. ३. ३।

§ पा० सू० ८. १. ४।

‖ इहैव १प्र० ४ब्रा० १५ कण्डीव्याख्या द्रष्टव्या (११८ पृ०)।

कृष्टप्रदेशे द्वादशभिरुदचमसैर्निनयनं विधाय स्तौति—"द्वादशोदचमसानिति । "द्वादशमासा इत्यादेः स्पष्टोऽर्थः ॥ ४ ॥

तस्योदकनिनयनस्य कृष्टत्वेनाधिकरणत्व मनूद्य स्तौति—"स वै कृष्टे इति । यस्मात् कृष्टप्रदेशे उदकनिनयनं क्रियते, तस्मादेव कारणाल्लोके 'कृष्टाय' कर्षणसंस्कारसंस्कृताय भूमिभागार्थं 'वर्षति' वृष्टिर्भवति । "स यत् कृष्ट एवेत्यादिना कृष्टाकृष्टस्थले उदकनिनयनार्यैकैकत्र निनयननिन्दा प्रतिपाद्यते; अर्थस्तु निगदसिद्धः ॥ ५ ॥

कृष्टाकृष्टात्मके यदुदकनिनयनं विहितम्, तत् करणचमसाना मपि त्रिसङ्ख्या मुपजीव्य स्तौति— "त्रीन् कृष्टे चेति *। "त्रिवृदग्निरित्याद्यसकृद् गतम् ॥ ६ ॥

उक्तेऽर्थे पुरावृत्त मवतारयति— "यद्देवेत्यादिना । 'पुरस्तात्' चयनात् प्रागेव 'अपः' उदकानि स्थापितवन्तः । शिष्टं स्पष्टम् ॥ ७ ॥

त्रींस्त्रीनित्यादि । पूर्ववद् व्याख्येयम् † ॥ ८ ॥

द्वादशोदचमसानित्यादि च ॥ ९ ॥

कृष्टप्रदेशे उदकनिनयनस्य प्राणाधिकरणनिनयनरूपता माह—"स वै कृष्ट इति । कृष्टाकृष्टयोरुभयत्रोदकनिनयने प्राणशब्दाभिधेयेषु चक्षुरादिषु तदाश्रयभूते 'आत्मनि' शरीरे चापां निनयनं कृतं भवतीत्ययं स यत् कृष्ट एवेत्यादेस्तात्पर्यार्थः ‡ ॥ १० ॥

कृष्टाकृष्टयोरुदकनिनयनचमसगतं त्रित्व मनूद्य तस्याप्यपां

* का० श्रौ० सू० १७. ३. ४ ।

† इहत्या तृतीयकण्डीटीप्पनी द्रष्टव्या ( १४० पृ० '॥' ) ।

‡ का० श्रौ० सू० १७. ३. ५ ।

निधानहेतुता माह— "त्रीन् कृष्टे चेति । अर्थस्तु पूर्ववत् ॥ ११

पृथग्विहिता मुदचमससङ्ख्यां सम्भूय प्रशंसति— "पञ्चदशोद सानिति । "पञ्चदशो वै वज्र इति । पञ्चदशस्तोमस्येन्द्रस्य सह प्रजापतिबाहुसकाशादुत्पत्तेरिन्द्रसम्बन्धी वज्रोऽपि दशस्तोमात्मकः *, तादृशेनैतेन वज्रेणास्य यजमानस्य सर्वं पाप्मानं अपहतवान् भवति ॥ १२ ॥

अथ प्रकृत औदुम्बरचमसे सर्वधान्यावापं विधत्ते— सर्वौषधं वपतीति । अन्न मेव धान्यरूपा मेव चिति मित्य गत मन्यत् ॥ १३ ॥

सर्वत्व मनूद्य स्तौति— "सर्वौषधं भवतीति । ओषधीनां समूहः औषधम् । "तस्य समूहः"-इत्यण् † । ओषधयश्चात्र ग्रा रण्यादिबीजात्मिका द्रष्टव्याः ‡ । यत्सर्वौषधम् , एतत् सर्वं निःशेष मन्नम् । "सर्व मेवेति । 'एतत्' एतेन सर्वौषधावापेन 'अग्नि अग्नौ सर्व मेवान्नं निहितवान् भवति । तन्नोप्तानां प्रकृता मन्नानां मध्ये एकस्य ओषधिरूपस्य बीजस्य वर्जनं विधत्ते— मेक मिति । 'तेषाम्' ओषधिविकाराणा मन्नानां मध्ये मन्न मुद्धरेत्' पृथक् कुर्यात् , न आवपेदित्यर्थः । तत्र च धर्मं विधत्ते— "तस्य नाश्नीयादिति । 'तस्य' उद्धृतस्यान्नस्य 'याव नाश्नीयात्' । अतएवोक्तं कात्यायनेन— "तस्मिन्सर्वौषध पत्येकवर्ज मभोजनं तस्योच्छ्वासात्"-इति § ।

* तै० सं० ७. १. १. ४. द्रष्टव्यम् ।
† पा० सू० ४. २. ३७ ।
‡ तै० सं० ५. ४. ८. १ द्रष्टव्यम् ।
§ का० श्रौ० सू० १७. ३. ६. ७ ।

उदकनिनयन इव बीजावपनेऽपि चतुरस्रं मौदुम्बरं चमसं करणत्वेन विधत्ते—"औदुम्बरेण चमसेनेति । व्याख्यातं प्राक् चैतत् * । 'सर्वाभ्य एवास्मिन्नित्यादि । 'सर्वाभ्यः' प्राच्यादिभ्यश्चतसृभ्यो दिग्भ्यः सकाशात् 'एतेन' चतुःस्रक्तिचमसकरणकेन बीजावापेन 'अस्मिन्' अग्नौ 'अन्नं' 'दधाति' स्थापयति । बीजावपनं मन्त्राणां छन्दोद्वारेण प्रशंसति—"अनुष्टुब्भिरिति । "या ओषधीरित्याद्याः † अनुष्टुप्छन्दस्कास्ताभिर्वपेदित्यर्थः । "वाग्वा अनुष्टुब्"–इत्यादि । सा तु "चतुरुत्तराणि छन्दांस्यसृजत"–इतिश्रुतेः सर्वच्छन्दोरूपत्वादनुष्टुभो वाक्त्वम् ‡ अन्न मपि वाचैवाद्यमान मित्यन्नात्मकस्यौषधिवापस्य वाक्संस्तुतानुष्टुप्करणकत्वं युक्त मिति भावः ॥ १४ ॥

पञ्चतृचात्मको ह्यनुवाकस्तत्र सर्वत्र क्रमेण तृचैरेवौषधिवापः कर्त्तव्य इति विधाय त्रित्वसङ्ख्यां प्रशंसति— "तिसृभिस्तिसृभिरिति § । "नित्यवीप्सयोः"–इति ‖ द्विर्वचनम् । "त्रिवृदग्निरित्यादि व्याख्यातम् ¶ ॥ १५ ॥

कृष्टप्रदेशे द्वादशभिर्ऋग्भिर्वपनं विधाय स्तौति— "द्वादशभिरिति । चतसृषु सीतास्वेकैकस्यां तिसृभिर्वपने सति द्वादशर्चः सम्पद्यन्ते, सैव द्वादशसङ्ख्या चानूद्य स्तूयते । निगदसिद्ध मन्यत् ॥ १६ ॥

---

* इहत्येव द्वितीयकण्डीव्याख्या द्रष्टव्या ( १४० पृ० ) ।

† वा० सं० १२. ७५—८६ ।

‡ शत० ब्रा० ३का० १प्र० ४ब्रा० २१—२३क० (३भा० ४८, ४६पृ०) द्रष्टव्यम् ।

§ का० श्रौ० १७. ३. ८ ।

‖ पा० सू० ८. १. ४ ।

¶ तृतीयकण्डीटीप्पनी ( १४०पृ० '‖' ) द्रष्टव्या ।

तस्य बीजावापस्य कृष्टक्षेत्राधिकरणत्व मनूद्य स्तौति "स वै कृष्ट इति। यस्मात् कृष्टप्रदेशे बीजावापः क्रियते, त देव कारणात् लोके कृष्टकर्षणसंस्कारसंस्कृते भूमिभागे व्री यवादिलक्षणम् 'अन्नं पच्यते' फल मिति। "यत् कृष्ट एवे दिना कृष्टाकृष्टक्षेत्रे वपनार्यैकत्र बीजावापनिन्दा प्रतिपाद्य निगदसिद्धोऽर्थः। कृष्टाकृष्टात्मके यद्बीजावपनं विहितम्, करणमन्त्राणा मपि ॥ १७ ॥

त्रिसङ्ख्या मुपजीव्य स्तौति— "तिसृभिः कृष्टे चेति ॥ १८

एव मन्त्रचितिरूपेण वीजावापं संस्कृत्य भेषजरूपेणापि स्तौ — "यद्वैवेत्यादिना। पुरावृत्तकथनम्। सर्वा ह्योषधयो याव मूलफलकन्दादिरूपेण भेषजानि भवन्ति, तथा सति सर्वौष सम्बन्धिबीजावपनेन सर्वेणैव भेषजेन 'देवाः' 'एनम्' अग्निम् 'अ षज्यन्' अचिकित्सन्। "भिषज चिकित्सायाम्"-इति धातुः तद्वद् अयं यजमानोऽपि 'एनम्' अग्निं 'संस्करिष्यन्' ततः प्रा सर्वौषधिबीजावापेन सर्वेणैव भेषजेन 'भिषज्यति' चिकित्सति यथा करिष्यमाणचयनसंस्कारो वितथो न भवेत्, तथैनं भिषज् दित्यर्थः ॥ १९ ॥

सर्वत्व मनूद्य स्तौति— "सर्वौषधं भवतीति। पूर्व व्याख्येयम् ॥ २० ॥

त्वचकरणकं बीजावपन मनूद्यैतदपि भेषजहेतुत्वेन स्तौति "तिसृभिर्ऋग्भिरिति ॥ २१ ॥

---

* पा० सू० ३. १. २७ कण्ड्वादिषु द्रष्टव्यम्।

चतसृषु सीतासु करणमन्त्राणां द्वादशसङ्ख्या मनूद्य भेषज हेतुत्वेन स्तौति— द्वादशभिर्ऋग्भिरिति ॥ २२ ॥

कृष्टप्रदेशे वपनस्य प्राणभैषज्यरूपता माह— "स यत् कृष्ट एवेत्यादि। अकृष्टप्रदेशस्य शरीरस्य च साम्यं गर्त्तराहित्यं कृष्टाकृष्टयोरुभयत्र बीजावापेन प्राणशब्दाभिधेयांश्चक्षुरादीन्, तदाश्रयभूतम् 'आत्मानं' शरीरम्, एतेन भिषज्येदित्यर्थः ॥ २३ ॥

बीजवपने च * मन्त्रगतं त्रित्व मनूद्य, तस्यापि भेषजहेतुता माह— "तिसृभिः कृष्टे चाकृष्टे चेति ॥ २४ ॥

उदचमससङ्ख्यां बीजावापमन्त्रसङ्ख्यां चानूद्य सम्भूय प्रशंसति— "पञ्चदशोदचमसानिति। "त्रिंशदक्षरा विराडिति। द्वाभ्या मक्षराभ्या मनुष्टुभो न्यूनत्वात् त्रिंशदक्षरा ऋक् विराट्छन्दस्का भवति। "ऊनाधिकेनैकेन निचृद्भुरिजौ, द्वाभ्यां विराट्स्वराजौ"-इति † हि तल्लक्षणम्। सा च 'विराट्' 'कृत्स्न मन्नम्'; भूरूपा हि तादृशी विराट्। अत एव श्रूयते— "इयं वै विराडिति ‡। सा च स्वेप्सितव्रीहियवादिसर्वधान्योत्पत्तिहेतुत्वात् सर्वान्नरूपा। तथा च विराट्सम्पत्त्या 'अस्मिन्' अग्निक्षेत्रे 'सर्व मेवान्नम् एतत्' 'कृत्स्नं' निरवशेषं 'दधाति' स्थापयति ॥ २५ ॥

अथ बीजावापमन्त्रपदाना मनुवादपूर्वक मभिप्रायं व्याचष्टे— "या ओषधीरित्यादिना §। देवेभ्यस्त्रियुगं पुरेत्यस्य मन्त्रभागस्याभिप्राय माह—"ऋतवो वै देवा इति। 'याः' 'ओषधीः' ओषधयः

---

* "कृष्टाकृष्टबीजवपने च"— इति ङ।

† पि० सू० ४ खण्डे, ऋ० प्रा० ४ पटले, का० सर्वानु० १ कण्डां च द्रष्टव्यम्।

‡ शत० ब्रा० १का० ४प्र० ३ब्रा० २०क० (१भा० ३४६पृ०) द्रष्टव्यम्।

§ वा० सं० १२. ७५—८६।

सृष्ट्यादावुत्पन्नास्ताः 'देवेभ्यः' ऋतुभ्यो वसन्तादिभ्यः 'पुरा'
वसन्तप्रावृट्शरदा मादिषु संवत्सरमध्ये 'त्रियुगं' त्रिकालं जा
इत्यर्थः ॥

उत्तरार्द्धं मनूद्य व्याचष्टे— "मनै नु बभ्रूणा मि
अमृतरूपेण सर्वेषां भरणात् 'बभ्रुः' सोमः, ओषधयो
सोमदेवताकत्वात् । तदत्र बभ्रुशब्दाभिधेयास्ताट्टगोषधि
णामविशेष एव 'पुरुषः' मनुष्यशरीर मिति तत्तादात्म्
अय मर्थः,— 'बभ्रूणां' सोम्यानां ओषधीनां सम्बन्धानि
माणानि, 'अहं' 'नु' अद्य 'मनै' मन्ये जानामि । कानि
स्तानि मत्त्वयानीत्याशङ्क्य चतुर्थपादं व्याचष्टे— "शतं धा
नीतीति । ओषधिपरिणामस्य पुरुषस्य शरीरस्य यदिदं
संवत्सरं जीवनम्, एवं शतसङ्ख्याका अर्थाः प्रयोजनानि,
च तन्निष्पादकानि शतसङ्ख्याकानि वीर्याणि सामर्थ्यानि, 'एता
खल्वस्य ओषधिविकारस्य शरीरस्य 'तानि' मन्त्रोक्तानि
सङ्ख्याकानि 'धामानि'। धामशब्दस्य त्रयोऽर्थाः यास्केनोक्ताः
"धामानि त्रयाणि भवन्ति,— स्थानानि, नामानि, जन्मानीति
"सप्त चेति। 'य एवेमे' 'सप्त' सप्तसङ्ख्याकाः 'शीर्षन्' शी
सम्बद्धाश्चक्षुःश्रोत्रादिरूपाः 'प्राणाः' सप्त चेत्येतत्, ता
'प्राणान्' प्रतिपादयतीत्यर्थः। उदीरितलक्षणानि शतसङ्ख्याक
धामानि, सप्तशीर्षण्यान् प्राणांश्च ओषधीनां सम्बन्धित्वेन जा
मीत्यन्वयः ॥ २६ ॥

द्वितीयस्या ऋचः पूर्वार्द्धं मनूद्य व्याचष्टे— "शतं वो अम्ब

* निरु० ६, ३, ७।

इदम्' इदानीं 'शतधा' शतप्रकारेण 'सहस्रधा' सहस्रप्रकारेण च 'विरूढाः' 'उत्पन्नाः' ओषधयो दृश्यन्त इति 'यत्', 'एतत्' एतेनार्द्धर्चेन प्रतिपाद्यत इत्यर्थः। 'अम्ब' हे मातः! ओषधयः 'वः' युष्माकं 'धामानि' स्थानानि 'शतं' शतसङ्ख्याकानि। 'उत'-शब्दोऽप्यर्थे। तथा 'वः' युष्माकं 'रुहः' प्ररोहाः अङ्कुरा अपि 'सहस्रं' सहस्रसङ्ख्याका इति।

द्वितीयार्द्ध मनूद्य तात्पर्य माह— "अधा शतक्रत्व इति। 'अध'-शब्दो हेतौ। हे 'शतक्रत्वः' शतकर्माण ओषधयः! 'यूयं' मदीयम् 'इमं' पुरुषं 'अगदं' व्याधिरहितं 'कृत' कुरुत। 'यम् इमम्' आतुर मिदानीम् अहं 'भिषज्यामि', त मेव कुरुतेत्येतदस्य वाक्यस्य तात्पर्य मित्यर्थः। "भिषज् चिकित्सायामिति धातुः * कण्ड्वादिः ॥ २७ ॥

एव मृद्द्वयं व्याख्याय उत्तरासा मप्येव मेव व्याख्यान मित्यतिदिशति— "ता एता एकव्याख्याना इति। 'ता एताः' बीजावपनार्था ऋचः 'एकव्याख्यानाः' समानव्याख्यानाः, अतो न पृथक्तया व्याख्यायन्त इत्यर्थः॥

अतिदिष्टं व्याख्यानं योजयति— "एत मेवाभीति। "इमं मे अगदं कृतेति। योऽयं पुरुषोऽनुक्रान्तः, एत मेवाभिलक्ष्य उत्तरा ऋचोऽप्याम्नाताः, तासाञ्चायं तात्पर्यगम्योऽर्थः,— 'यथा' येन प्रकारेण 'एत मेव' पुरुषं चिकित्सको 'भिषज्येत्' भेषजैर्युक्तं कुर्यात्, तेन च भैषज्येन 'एतं' व्याधिग्रस्तं 'पारयेत्' पार मारोग्यं प्रापयेत्, हे ओषधयः! तथा कुरुतेति शेषः॥

* पा० सू० ३. १. २७ कण्ड्वादिषु २२ धा०।

तासां छन्दोद्वारेण भेषजहेतुता माह— "ता अनुष्टु
भवन्तीति। "वाग्‌वु सर्वं भेषज मिति। वाक् खलु सर्वं भेषज
तद्धेतुत्वात्। एवं सति 'एनं' पुरुषविधं चेष्यमाण मग्निं 'एत
एतेनानुष्टुप्छन्दसः प्रयोगेण 'सर्वेणैव भेषजेन' 'भिषज्यति' भेष
कृतवान् भवतीत्यर्थः ॥ २८ ॥

अथ विहिताना मनडुद्योजनादीना मोषधिवापान्ता
कर्मणां समन्त्रकामन्त्रकत्वं सम्भूय स्तौति— "अथातो निरु
निरुक्ताना मेवेति *। 'अथ' अनन्तरं यतः समन्त्रकामन्त्र
भेदेन द्विविधानि विहितानि कर्माणि, अतः कारणात् ता
'निरुक्तानिरुक्तानां' समन्त्रकामन्त्रकाणां विहिताना मेव कर्म
स्तुतिः क्रियत इति शेषः। निरुक्तानिरुक्तानि कर्माणि क्रमे
णानुक्रामति— 'यजुषा' मन्त्रेण "सीरा युञ्जन्ति"–इत्यादिकेन
'द्वौ धुर्यावनड्वाहौ युनक्ति', 'इतरान्' अनडुहोऽग्रे बध्यमान
तूष्णीं युनक्ति। तथा 'चतस्रः सीताः' पुरुषो मन्त्रेण 'कृषति
'इतराः' द्वादश सीताः 'तूष्णीं' कृषति। तूष्णीं दर्भस्तम्ब मित्याद
व्याख्येयम् ॥ २९ ॥

एवं निरुक्तानिरुक्तभेदेन विहितानि कर्माण्यनूद्य चित्याग्नि
रूपस्य प्रजपतेरपि निरुक्तानिरुक्तात्मना परिमितापरिमित
त्मना च द्वैरूप्य माह— "प्रजापतिरेषोऽग्निरिति। 'यः' अ
मग्निः 'एषः' एव 'प्रजापतिः'। यदेतन्निरुक्तानिरुक्तात्मक मुभ
विधं जगत्, असावेव स प्रजापतिः। अतो निरुक्तानिरुक्तज
त्तादात्म्यात् प्रजापतिरपि 'निरुक्तश्च' इष्टकाकार इति निःशे

* का० श्रौ० १७. २. ११।

† वा सं० १२. ६७, ६८।

णीतश्च, अनिरुक्तः तद्विपरीतः 'च' अत एव 'परिमितः' परिच्छिन्नश्च, 'अपरिमितश्च' अपरिच्छिन्नश्च भवति ॥

इत्थं प्रजापतिरूपस्यापि निरुक्तानिरुक्तभेदेन द्वैविध्य मुक्त्वा, समन्त्रकेन निरुक्तेनानडुद्योजनादिकर्मणा निरुक्तभागस्य, इतरेणेतरभागस्य च संस्कारं विभज्य योजयति--"तद्यद्यजुषा करोतीत्यादिना। विद्वदनुष्ठानं प्रशंसति--"स ह वा इति। 'कृत्स्नं' सर्वावयवसहितम्, 'सर्वं' निरवशेषम्; अतो न पौनरुक्त्यम्। बाह्याभ्यन्तरभावेन निरुक्तानिरुक्तधर्मयोगात् चित्याग्नेः पशुरूपता मापाद्य स्तौति—"बाह्यानि रूपाणीति। यान्येतानि निरुक्तानि कर्माण्यनुक्रान्तानि, तान्यग्नेः 'बाह्यानि रूपाणि'। अनिरुक्तानि 'अन्तराणि' अभ्यन्तरवर्त्तीनि भवन्ति। ईदृशो यदय मग्निः, एषः 'पशुः' एव, 'तस्मात्' एव कारणात् लोके 'पशोः' 'बाह्यानि' बहिरवस्थितानि 'रूपाणि' रोमादीनि 'निरुक्तानि', 'अन्तराणि' असृगादीनि 'अनिरुक्तानि' च दृश्यन्ते॥ ३०॥ २ [ २. ४. ]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ २॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।

रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणि: सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुल: स्वर्णजं वर्णमुख्य:,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्य: ।
आज्योत्थं प्राज्यजन्मा लवणज मनृण: शार्करं चार्कतेजा:,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्य: * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे द्वितीयोऽध्याय: समाप्त: ॥ २ ॥

---

* अनयाष्टीप्यन्य: पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्या: ।

( अथ तृतीयाध्यायस्य प्रथमं ब्राह्मणम् . )

चितो गार्हपत्यो भवति * । अचित आहवनीयो-ऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौरा-हवनीयोऽथ योऽयं व्वायुः पवत ऽएष सोम एतं तदिमौ लोकावन्तरेण दधाति तस्मादेष इमौ लोकावन्तरेण पवते ॥ १ ॥

यद्वेव चिते गार्हपत्ये † । अचित ऽआहवनीये ‡-ऽथ राजानं क्रीणात्यात्मा वा ऽअग्निः प्राणः सोम आत्मंस्तत् प्राणं मध्यतो दधाति तस्मादय मात्मन् प्राणो मध्यतः ॥ २ ॥

यद्वेव चिते गार्हपत्ये § । अचित ऽआहवनीये-ऽथ राजानं क्रीणात्यात्मा वा ऽअग्नी रसः सोम आत्मानं तद्रसेनानुषजति तस्मादय मान्त मेवात्मा रसेनानुषक्तः ॥ ३ ॥

---

* 'भवति' – इति ग, घ ।

†, § 'गार्हपत्ये'—इति क, ख ।

‡ 'आहवनीये'—इति ख ।

राजानं क्रीत्वा पर्युह्य *। अथास्मा ऽआतिथ्य
हविर्निर्वपति तस्य हविष्कृता व्वाचं व्विसृजते
वा ऽएतद्व्यतिषजत्यध्वरकर्म्म चाग्निकर्म च कर्म्म
समानतायै समान मिदं कर्म्मासदिति ॥ ४ ॥

यद्वेव व्यतिषजति। आत्मा वा ऽअग्निः प्राण
ऽध्वर आत्मंस्तत् प्राणं मध्यतो दधाति तस्माद
मात्मन् प्राणो मध्यतः † ॥ ५ ॥

यद्वेव व्यतिषजति। आत्मा वा ऽअग्नी रस
ऽध्वर आत्मानं तद्रसेनानुषजति तस्मादय मान्त मेवा
त्मा रसेनानुषक्तोऽथाहवनीयस्योर्द्ध मैति ॥ ६ ॥

तद्वैके। उभयत्रैव पलाशशाखया व्युदूहन्त्यु
भयत्र वै चिनोतीति न तथा कुर्यादवस्यति व्वा
गार्हपत्येनोर्द्ध एवाहनीयेन रोहति तस्मात्तथा
कुर्यात् ॥ ७ ॥

अथ गार्हपत्य ऽएवोषान्निवपति ‡। नाहवनीये

---

* 'पर्युह्यः'—इति ख। 'पर्युह्य'—इति ग, घ।

† 'मध्यतः'- इति ग, घ।

‡ 'निवपति'—इति ग, घ।

वै लोको गार्हपत्यः पशव ऊषा अस्मिंस्तल्लोके पशून् दधाति तस्मादिमेऽस्मिंल्लोके पशवः * ॥ ८ ॥

अथाहवनीय ऽएव पुष्करपर्णं मुपदधाति। न गार्हपत्य ऽआपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो दधात्युभयत्र सिकता निवपति रेतो वै सिकता उभयत्र वै व्विक्रियते तस्माद्रेतसोऽधि व्विक्रियाता ऽइति ॥ ६ ॥

ता नाना मन्त्राभ्यां निवपति। मनुष्यलोको वै गार्हपत्यो देवलोक आहवनीयो नानो वा ऽएतद्दैवं च मानुषं च द्राघीयसा मन्त्रेणाहवनीये निवपति ह्रसीयसा गार्हपत्ये द्राघीयो हि देवायुषꣳ ह्रसीयो मनुष्यायुषꣳ स पूर्व्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकता अस्माद्रेतसोऽधीमा व्विक्रियान्ता ऽइति ॥ १० ॥

तदाहुः। यद्योनिः परिश्रितो रेतः सिकता अथ पूर्व्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति कथ मस्यैतद्रेतोऽपरासिक्तं परिगृहीतं भवती-

* 'पशवः'—इति क। 'पशवः'—इति ग, घ।

त्युल्बं वा ऽऊषास्तद्यदूषान् पूर्वान्निवपत्येतेनो ह्यस्य तदुल्बेन रेतोऽपरासिक्तं परिगृहीतं भवत्यथाहवनीये परिश्रितो ऽभिमन्त्रयते तस्योक्तो बन्धुरथ सिकता निवपति रेतो वै सिकता एतयो ऽअस्य तद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति* ॥ ११

अथाहवनीय ऽएवाप्यानवतीभ्या † मभिमृशति न गार्हपत्येऽयं वै लोको गार्हपत्यः स्वर्गो लोक आहवनीयोऽह्नो वा ऽअय मस्मिंल्लोके जातो यजमानः स्वर्ग ऽएव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीय ऽएवाप्यानवतीभ्या ‡ मभिमृशति न गार्हपत्ये स्वर्ग ऽएवैनं तल्लोके प्रजनयति § ॥ १२ ॥

अथ लोगेष्टका ‖ उपदधाति । इमे वै लोका एषो ऽग्निर्दिशो लोगेष्टका ¶ एषु तल्लोकेषु दिश उपदधाति तस्मादिमा एषु लोकेषु दिशः ॥ १३ ॥

बाह्येनाग्नि माहरति । आत्मा वा ऽअस्य त

---

* 'भवति'—इति ग, घ ।

†, ‡ '०प्यायनवतीभ्याम्'—इति सायणसम्मत इति डा० वेबरः

§ 'प्रजनयति'—इति ग, घ ।

‖ 'लोकेष्टका'—इति सा०-सम्मतः पाठ इति डा० वेबरः ।

दिशो या एषु लोकेष्वथ या इमांल्लोकान् परेण दिशस्ता अस्मिन्नेतद्दधाति ॥ १४ ॥

बर्हिर्व्वेदेरियं वै व्वेदिः। आप्ता वा ऽअस्य ता दिशो या अस्या मथ या इमां परेण दिशस्ता अस्मिन्नेतद्दधाति ॥ १५ ॥

यद्वेव लोगेष्टका उपदधाति। प्रजापतेर्व्विस्रस्तस्य सर्व्वा दिशो रसोऽनु व्यचरत् तं यत्र देवाः समस्कुर्व्वंस्तदस्मिन्नेताभिर्लोगेष्टकाभिस्तꣳ रस मदधुस्तथैवास्मिन्नय मेतद्दधाति ॥ १६ ॥

बाह्येनाग्नि माहरति। आप्तो वा ऽअस्य स रसो य एषु लोकेष्वथ य इमांल्लोकान् पराङ्सोऽत्यचरत्त मस्मिन्नेतद्दधाति ॥ १७ ॥

बर्हिर्व्वेदेरियं वै व्वेदिः। आप्तो वा ऽअस्य स रसो योऽस्या मथ य इमां पराङ्सोऽत्यचरत्त मस्मिन्नेतद्दधाति ॥ १८ ॥

स्फ्येनाहरति। व्वज्रो वै स्फ्यो व्वीर्यं वै व्वज्रो व्वित्तिरियं व्वीर्येण वै व्वित्तिं व्विन्दते ॥ १९ ॥

स पुरस्तादाहरति। मा मा हिꣳसीज्जनिता यः

पृथिव्या इति प्रजापतिर्व्वै पृथिव्यै जनिता मा मा
हिꣳसीत् प्रजापतिरित्येतद्यो वा दिवꣳ सत्यधर्म्मा
व्यानडिति यो वा दिवꣳ सत्यधर्म्मासृजतेत्येतद्यश्
पश्चन्द्राः प्रथमो जजानेति मनुष्या वा ऽआपश्चन्
यो मनुष्यान् प्रथमो ऽसृजतेत्येतत् कस्मै देवा
हविषा व्विधेमेति प्रजापतिर्वै कस्तस्मै हवि
व्विधेमेत्येतत् ता माहत्यान्तरेण परिश्रित आत्मन्
पदधाति स यः प्राच्यां दिशि रसोऽत्यचरत्
मस्मिन्नेतद्दधात्यथो प्राची मेवास्मिन्नेतद्दिशं दधाति
॥ २० ॥

अथ दक्षिणतः। अभ्यावर्त्तस्व पृथिवि यज्ञेन
पयसा सहेति यथैव यजुस्तथा बन्धुर्व्वपां ते ऽअग्नि
रिषितो ऽअरोहदिति यद्वै किं चास्याꣳ सारं
व्वपा ता मग्निरिषित उपादीप्तो रोहति ता माह
त्यान्तरेण पक्षसन्धि मात्मन्नुपदधाति स यो दक्षि
णायां दिशि रसो ऽत्यचरत्त मस्मिन्नेतद्दधात्यथो
दक्षिणा मेवास्मिन्नेतद्दिशं दधाति † ॥ २१ ॥

*, † 'दधाति'—इति ग, घ।

अथ पश्चात् *। अग्ने यत्ते शुक्रं यच्चन्द्रं यत् पूतं यच्च यज्ञिय मितीयं वा ऽअग्निरस्यै तदाह तद्देवेभ्यो भरामसीति तदस्मै दैवाय कर्म्मणे हराम इत्येतत्ता माहृत्यान्तरेण पुच्छसन्धि मात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽत्यचरत् त मस्मिन्नेतद्दधात्यथो प्रतीची मेवास्मिन्नेतद्दिशं दधाति स न सम्प्रति पश्चादाहरेन्नेद्यज्ञपथाद्रस माहराणीतीत इवाहरति † ॥ २२ ॥

अथोत्तरतः ‡। इष मूर्ज्ज मह मित आद मितीष मूर्ज्ज मह मित आदद ऽइत्येतदृतस्य योनि मिति सत्यं वा ऽऋतꣳ सत्यस्य योनि मित्येतन् महिषस्य धारा मित्यग्निर्वै महिषः स हीदं जातो महान्त्सर्व्व मैषादा मा गोषु विशत्वा तनूष्वित्यात्मा वै तनूरा मा गोषु चात्मनि च विशत्वित्येतज्जहामि सेदि मनिरा ममीवा मिति सिकताः प्रध्वꣳसयति

---

* 'पश्चात्'—इति ग, घ।

† 'इवाहरति'—इति ग, घ।

‡ 'अथोत्तरतः'—इति ग, घ।

तद्यैव सैदिर्यानिरा यामीत्रा ता मेतस्यां दि
दधाति तस्मादेतस्यां दिशि प्रजा अशनायुका
माहृत्यान्तरेण पचसम्भि मात्मन्नु पदधाति स
उदीच्यां दिशि रसो ऽत्यचरत्त मस्मिन्न तद्दधात्य
ऽउदीची मेवास्मिन्ने तद्दिशं दधाति ॥ २३ ॥

ता एता दिशः। ताः सर्व्वत उपदधा
सर्व्वतस्तद्दिशो दधाति तस्मात् सर्व्वतो दि
सर्व्वतः समीचीः* सर्व्वतस्तत् समीचीर्द्दिशो दधा
तस्मात् सर्व्वतः समीच्यो दिशस्ता नानोपदधा
नाना सादयति नाना सूददोहसाधिवदति ना
हि दिशस्तिष्ठन्नु पदधाति तिष्ठन्तीव हि दिशो
तिष्ठन्वै व्वीर्य्यवत्तरः ॥ २४ ॥

ता एता यजुष्मत्य इष्टकाः। ता आत्म
वोपदधाति न पचपुच्छेष्वात्मन् ह्येव यजुष्मत्य इष्ट
उपधीयन्ते न पचपुच्छेषु ॥ २५ ॥

तदाहुः। कथ मस्यैताः पक्षाः स्पृता उपहि
भवन्तीति रसो वा ऽएताः स्वयꣳस्पृत उ वै रसं

* 'समीची'—इति क।

ऽयो यद्वै किं चैत मग्निं व्वैश्वानर मुपनिगच्छति तत एव तत् पक्वꣳ शृत मुपहितं भवति * ॥ २६ ॥

अथोत्तरव्वेदिं निवपति। इयं वै व्वेदिर्द्यौरुत्तरवेदिर्दिशो लोगेष्टकास्तद्यदन्तरेण व्वेदिं चोत्तरवेदिं च लोगेष्टका उपदधातीमौ तल्लोकावन्तरेण दिशो दधाति तस्मादिमौ लोकावन्तरेण दिशस्तां युगमात्रीं वा सर्व्वतः करोति चत्वारिꣳशत्पदां वा यतरथा कामयेताथ सिकता निवपति तस्योक्तो बन्धुः ॥ २७ ॥

ता उत्तरवेदौ निवपति। योनिर्व्वा ऽउत्तरवेदिर्योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्व्व मात्मानं प्रच्छादयति सर्व्वस्मिंस्तदात्मन्नेतो दधाति तस्मात् सर्व्वस्मादेवात्मनो रेतः सम्भवति + ॥ २८ ॥

अग्ने तव श्रवो व्वय इति। धूमो वा ऽअस्य

* 'भवति'—इति ग, घ।

† 'सम्भवति'—इति क, 'सम्भवति'—इति ख।

श्रवो व्ययः स ह्येन ममुष्मिंल्लोके श्रावयति म
भ्राजन्ते अर्च्चयो व्विभावसविति महतो भ्राजन्ते
ऽर्च्चयः प्रभूवसवित्येतद् बृहद्भानो शवसा व्वा
मुक्थ्य मिति बलं वै शवो बृहद्भानो बलेना
मुक्थ्य मित्येतद्दधासि दाशुषे कव ऽइति य
मानो वै दाश्वान्दधासि यजमानाय कव ऽइत्ये
तत् ॥ २९ ॥

पावकवर्चाः शुक्रवर्चा इति। पावकवर्चा
ह्येष शुक्रवर्चा अनूनवर्चा उदियर्षि भानुनेत्य
नूनवर्च्चा उद्दीप्यसे भानुनेत्येतत् पुत्रो मात
व्विचरन्नुपावसीति पुत्रो ह्येष मातरा व्विचरन्
पावति पृणक्षि रोदसी ऽउभे ऽइतीमे वै द्यावा
पृथिवी रोदसी ते ऽएष उभे पृणक्ति धूमेना
वृष्ट्येमाम् * ॥ ३० ॥

ऊर्ज्जोनपाज्जातवेदः सुशस्तिभिरिति † । ऊर्ज्जो
नपाज्जातवेदः सुष्टुतिभिरित्येतन् मन्दस्व धीतिभि

---

* 'वृष्टेमाम्'—इति ग, घ।

† 'सुशस्तिभिरिति'—इति क, 'सुशस्तिभिरिति'—इति ग,

हिंत इति दीप्यस्व धीतिभिर्हित इत्येतत्त्वे ऽइषः सन्दधुर्भूरिवर्पस इति त्वे ऽइषः सन्दधुर्बहुवर्पस * इत्येतच्चित्रोतयो व्वामजाता इति यथैव यजु-स्तथा बन्धुः ॥ ३१ ॥

इरज्यन्नग्ने प्रथयस्व जन्तुभिरिति। मनुष्या वै जन्तवो दीप्यमानो ऽग्ने प्रथस्व मनुष्यैरित्येतदस्मे रायो ऽअमर्त्यत्यस्मे रयिं दधदमर्त्येत्येतत् स दर्शतस्य व्वपुषो व्विराजसीति दर्शतस्य ह्येष व्वपुषो व्विराजति पृणक्षि सानसिं क्रतु मिति पृणक्षि सनातनं क्रतु मित्येतत् ॥ ३२ ॥

इष्कर्त्तार मध्वरस्य प्रचेतस मिति। अध्वरो वै यज्ञः प्रकल्पयितारं यज्ञस्य प्रचेतस मित्येतत् क्षयन्तꣳ राधसो मह इति क्षयन्तꣳ राधसि महतीत्येतद्रातिं व्वामस्य सुभगां मही मिष मिति रातिं व्वामस्य सुभगां महती मिष मित्येतद्दधासि सानसिꣳ रयि मिति दधासि सनातनꣳ रयि मित्येतत् ॥ ३३ ॥

* 'सन्दधुर्बहुवर्पस'—इति च दृष्टं डा० वेबरमहोदयेन।

ऋतावान मिति। सत्यावान मित्येतन्
हिष मित्यग्निर्वै महिषो व्विश्वदर्शत मिति व्विश्व
दर्शतो ह्येषोऽग्निं सुम्नाय दधिरे पुरो ज
इति यज्ञो वै सुम्नं यज्ञाय वा ऽएतं पु
दधते श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानु
युगेत्याशृण्वन्तं सप्रथस्तमं त्वा गिरा देवं मनु
हवामह ऽइत्येतत् * ॥ ३४ ॥

स एषोऽग्निरेव व्वैश्वानरः। एतत् षड्
मारभ्यायैवेमाः सिकता न्युप्यन्त्यग्नि मेवास्मिं
तद्वैश्वानरं रेतो भूतं सिञ्चति षड्चेन षड्ऋ
संव्वत्सरः संव्वत्सरो व्वैश्वानरः † ॥ ३५ ॥

तदाहुः। यद्रेतः सिकता उच्यन्ते कि मा
सां रेतो रूप मिति ‡ शुक्ला इति ब्रूयाच्छुक्लं
हि रेतोऽथो पृश्नय इति पृश्नीव हि रेतः ॥ ३६ ॥

तदाहुः। यदार्द्रं रेतः शुष्काः सिक

---

* 'ऽइत्येतत्'—इति ग, घ।
† 'वैश्वानरः'—इति ग, घ।
‡ 'रेतो रूप मिति'—इति क, ख।

निवपति कथ मस्यैता आर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दाᳫंस्यार्द्र उ वै रसस्तद्यदेनाश्छन्दोभिर्निवपत्येव मु हास्यैता आर्द्रा रेतोरूपं भवन्ति ॥ ३७ ॥

तदाहुः । कथ मस्यैता अहोरात्राभ्या मुपहिता भवन्तीति । द्वे वा अहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैव मु हास्यैता अहोरात्राभ्या मुपहिता भवन्ति ॥ ३८ ॥

तदाहुः । कथ मस्यैता अहोरात्रैः सम्पन्ना अन्यूना अनतिरिक्ता उपहिता भवन्तीत्यनन्तानि वा ऽअहोरात्राण्यनन्ताः सिकता एव मु हास्यैता अहोरात्रैः सम्पन्ना अन्यूना अनतिरिक्ता उपहिता भवन्त्यथ कस्मात् समुद्रियं छन्द इत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तत् समुद्रियं छन्दः ॥ ३९ ॥

तदाहुः । कथ मस्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्तीति मनो वै यजुस्तदिदं मनो यजुः सर्व्वाः सिकता अनुविभवत्येव मु हास्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्ति ॥ ४० ॥

तदाहुः । कथ मस्यैताः सर्व्वैश्छन्दोभिरु
हिता भवन्तीति यदेवैना एतेन षडृचेन निवप
यावन्ति हि सप्तानां छन्दसा मक्षराणि तावन्ते
तस्य षडृचस्याक्षराण्येव मु हास्यैताः सर्व्वैश्छन्दो
भिरुपहिता भवन्ति ॥ ४१ ॥

यद्वेव सिकता निवपति । प्रजापतिरेषोऽग्नि
सर्व्व मु ब्रह्म प्रजापतिस्तद्वैतद् ब्राह्मण उत्सन्नं
यत् सिकता अथ यदनुत्सन्न मिदं तद्योऽय मग्नि
श्चीयते तद्यत् सिकता निवपति यदेव तद् ब्राह्मण
उत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ता असङ्ख्याता
अपरिमिता निवपति को हि तद्वेद यावत् तद्
ब्रह्मण ‡ उत्सन्नꣳ स ह वा ऽएतꣳ सर्व्वं कृत्
प्रजापतिꣳ संस्करोति य एवं व्विद्वान्सिकता
निवपति ॥ ४२ ॥

तदाहुः §। कैतासा मसङ्ख्यातानाꣳ सङ्ख्ये
द्वे ऽइति ब्रूयाद् द्वे हि सिकते शुक्ला च कृष्णा चा

*, †, ‡ 'ब्राह्मण'—इति क, ख।

§ 'तदाहुः'—इति ग, घ।

सप्तविꣳशतिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वापञ्चाशे शते ऽइत्येतावन्ति ह्येतस्य षड्चस्याक्षराण्यथो पञ्चविꣳशतिरिति पञ्चविꣳशꣳ हि रेतः ॥ ४३ ॥

ता एता यजुष्मत्य इष्टकाः। ता आत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन् ह्येव यजुष्मत्य इष्टका उपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्रजातिꣳ * स्थापयानीति † ॥ ४४ ॥

अथैना आप्यानवतीभ्या मभिमृशति। इद मेवैतद्रेतः सिक्त माप्याययति तस्माद्योनौ रेतः सिक्त माप्यायते सौमीभ्यां प्राणो वै सोमः प्राणं तद्रेतसि दधाति तस्माद्रेतः सिक्तं प्राण मभिसम्भवति पूर्येव यद्दते प्राणात् सम्भवेदेषो हैवाच ‡ सूददोहाः प्राणो वै सोमः प्राणः सूददोहाः ॥ ४५ ॥

---

* 'प्रजनयति'--इति क।

† 'स्थापयानीति'—इति ग, घ।

‡ देषां हैवाच'—इति च दृष्टं डा० वेवरमहोदयेन।

आप्यायस्व समेतु ते । विश्वतः सोम वृष्ण्य मिति रेतो वै वृष्ण्य माप्यायस्व स मेतु ते सर्व्वतः सोम रेत इत्येतद् भवा वाजस्य सङ्गथ ऽइत्यन्नं वै वाजो भवान्नस्य सङ्गथ ऽइत्येतत् सं ते पयाꣳसि स मु यन्ति वाजा इति रसो वै पयोऽन्नं वाजाः सं ते रसाः स मु यन्त्वन्नानीत्येतत्सं वृष्ण्यान्यभि मातिषाह इति सꣳ रेताꣳसि पाप्मसह इत्येतदाप्यायमानो ऽअमृताय सोमेति प्रजात्यां तदमृतं दधाति तस्मात् प्रजातिरमृता दिवि श्रवाꣳस्युत्तमानि धिष्वेति चन्द्रमा वा ऽअस्य दिवि श्रव उत्तमꣳ स ह्येन ममुष्मिंल्लोके श्रावयति द्वाभ्या माप्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ४६ ॥

अथातः सम्पदेव * । चतस्रो लोगेष्टका उपदधाति षड्चेन निवपति द्वाभ्या माप्याययति तद् द्वादश द्वादश मासाः संवत्सरः संवत्सरो-

---

* 'सम्पदेव' — इति ग, घ ।

ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवति ॥ ४७ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [३. १.]

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ साग्निचित्ये क्रतौ सोमक्रयणस्य कालं विधाय स्तौति— "चितो गार्हपत्य इति। गार्हपत्याहवनीयचयनयोर्मध्यकाले चोदकप्राप्तः सोमक्रयः कर्त्तव्य इत्यर्थः। सोमस्य गार्हपत्याहवनीययोर्मध्येऽवस्थानं लोकत्रयरूपेणोपपादयति— "अयं वै लोक इति। भूलोकस्वर्लोकात्मकौ गार्हपत्याहवनीयौ। 'योऽयं वायुः पवते', 'एषः' एव क्रीयमाणः 'सोमः'; तत्क्रयस्य गार्हपत्यचयनादुर्द्ध्वं माहवनीयचयनात् पूर्वं मेतस्मिन् समयेऽनुष्ठाभात्। 'एतं' सोमात्मकं वायुं 'इमौ लोकावन्तरेण' अनयोर्लोकयोर्मध्ये 'दधाति' स्थापयति। "अन्तरान्तरेणेति * द्वितीया। यस्मादेवं वायुसंस्तुतः सोमो मध्ये क्रीयते, तस्मादेष दृश्यमानो 'वायुः' 'इमौ लोकौ' भूलोकस्वर्लोकौ 'अन्तरेण' 'पवते' परिवर्त्तते ॥ १ ॥

इत्थं सोमक्रयस्य मध्येऽनुष्ठान मधिलोकं स्तुत्वा अध्यात्ममपि स्तौति— "यद्वेवेति। "आत्मा वा अग्निरिति। गार्ह-

† पा० सू० २. ३. ४।

पत्याहवनीयचित्यात्मकः 'अग्निः' 'आत्मा' विस्रस्तावयवस्य प्रजापतेः शरीरम्। तन्मध्यवर्त्ती प्राणवायुः 'सोमः'; अतस्तं गार्हपत्याहवनीयचयनयोर्मध्ये क्रियमाणत्वात् 'आत्मन्' आत्मनि शरीरे 'प्राण मेव मध्यतो दधाति' धारयति। 'तस्मात्' कारणात् पञ्चवृत्त्यात्मकः 'अयम् प्राणः' सर्वप्राणिनां 'आत्मनि' आत्मनि शरीरे 'मध्यतः' दृश्यते ॥ २ ॥

राजक्रयस्य मध्येऽनुष्ठान मनूद्य कृत्स्नशरीरे रसानुषङ्गहेतुत्वेन स्तौति— "यद्वेति। "रस. सोम इति। अभिषवादिसंस्कृतो हि सोमः सुत्यादिवसे रसात्मको भवति; शरीरसंस्तुतयोर्गार्हपत्याहवनीयनयोर्मध्ये रसात्मकस्य तस्यानुप्रवेशात्। 'आत्मानं' शरीरं आप्यायनहेतुना 'रसेन' 'अनुषजति' अनुषक्त मनुस्यूतं करोति। 'तस्मात्' एव कारणात् 'अय मात्मा' देहः 'आन्तं' शिरःप्रभृति पादपर्यन्तं 'रसेन' 'अनुषक्तः' व्याप्तो दृश्यते ॥ ३ ॥

आतिथ्यहविष्कृदन्ते आहवनीयचितिसंस्कारं विधित्सुः, प्राक्तनं चोदकप्राप्तं प्रयोगजात मनुक्रामति— "राजानं क्रीत्वेति। क्रयानन्तरम्, क्रीतस्य परिवहणं कृत्वापि अनन्तरम्, 'आ' सोमाय 'आतिथ्यं' पूजार्हं 'हविः' प्रकृतिवत् 'निर्वपति'; 'तस्य' कर्मणः सम्बन्धिना 'हविष्कृता' "हविष्कृदेहीति मन्त्रेण * प्राक् नियमितां 'वाचं' 'विसृजते' †। अस्मिन् समये आहवनीयचिति संस्कारं विधित्सुस्तदुपोद्घातत्वेन सौमिकाग्निकयोः कर्मणोः परस्परं व्यतिषङ्गं विधत्ते— "अथ वा इति। 'अथ' खलु 'एत' एवं कुर्वन्नध्वर्युः 'व्यतिषजति' व्यतिषक्तं परस्परं सं

* वा० सं० १. १५ ३।

† शत० ब्रा० १. १. ४. ११ (१ भा० ७४ पृ०) द्रष्टव्यम्।

करोति। "षन्ज सङ्गे *"-इत्यस्माल्लटि "दंशसञ्जस्वञ्जां शपि"-इत्यनुनासिकलोपः †। किन्तदिति तदाह--"अध्वरेति। व्यतिषङ्गस्य प्रयोजन माह—"कर्मण इति। सौमिकाग्निकभेदेन द्विविधस्य कर्मणः 'समानतायै' एकीभवनार्थम्। ननु व्यतिषङ्गमात्रात् कथ मनयोरैक्यसिद्धिः, तत्राह— "समान मिद मिति। 'इदम्' अनुष्ठीयमानं सौमिक माग्निकं च 'कर्म' 'समानम्' एकम् 'असत्' भवेत् 'इति' अनेनाभिप्रायेण तदुभयं व्यतिषजति; न खलु व्यतिषङ्ग मन्तरेणानयोरैक्यसिद्धि रिति भावः ॥ ४ ॥

एतद्व्यतिषजन मनूद्य स्तौति—"यद्वेवेति। "प्राणोऽध्वर इति। 'अध्वरः' सोमयागः प्राणस्थानीयः, 'आत्मन्' आत्मनि 'मध्यतः' मध्ये 'तत्' 'प्राणं' स्थापयति। 'तस्मादयं प्राणः' शरीरमध्ये वर्त्तत इति शेषः ॥

तथा— "रसोऽध्वर इति। 'अध्वरः' सोमयागो रसस्थानीयः; सर्वप्रकृतित्वात्। गत मन्यत्। वाग्विसर्जनानन्तर माहवनीयसमीपदेशगमनं विधत्ते— "अथाहवनीयस्यार्द्ध मैतीति। अर्द्धशब्दो देशवाची। 'आहवनीयस्य' अग्नेः यत् स्थानं कर्षणादिसंस्कारसंस्कृतं हविष्कृदाह्वानानन्तरम्, तत् स्थान मागच्छेदित्यर्थः ॥ ५ ॥ ६ ॥

गार्हपत्यस्थानवदाहवनीयस्थानस्यापि पलाशशाखया व्युदूहन सेकीयमतेनोपन्यस्य दूषयति— "तद्वेक इति ‡। 'तत्' तत्र उभयत्रैव, गार्हपत्ये आहवनीये च 'एके' शाखिनः 'पलाश-

* धा० पा० ६८७ धा० ।
† पा० सू० ६. ४. २५ ।
‡ का० श्रौ० सू० १७. १. ३.।

शाखया व्युदूहनं कुर्वन्ति। 'उभयत्र' खलु 'चिनोति' इति हेतुः। व्युदूहनस्य चयनार्थत्वात् आहवनीयचितावपि तत् का मित्यर्थः।

तदेतन्निराकरोति— "न तथेति। प्रतिज्ञात मर्थ पादयति— "अवस्यति वावेति। गार्हपत्यचयनेन हि यं मध्यवस्यति अध्यवसानसमये भूशोधनार्थं व्युदूहन मपेक्षित अथ पुनरारोहणसमये आहवनीयचयनेनाप्यूर्द्ध्वः सन्नारोह 'तस्मात्' 'तत्र' कर्त्तव्य मित्यर्थः॥ ७॥

गार्हपत्यचितिवत् प्रसक्त मूषाणां निवपन मपि कर्त्तव्य मिति निगमयति— "अथ गार्हपत्य एवेति। कारव्यवच्छेद्य माह— "नाहवनीये इति। अत्र हेतु माह "अयं वै लोक इति। भूरितिव्याहृत्या आहितत्वाद् गा पत्यो भूलोकात्मकः; "भूरिति गार्हपत्य मादधाति"-इति ब्राह्मणम्। ऊषरप्रदेशस्य पशुभिर्लेह्यमानत्वात् ऊषाणां प त्मकत्त्वम्॥ ८॥

अथाहवनीये प्रतिनियतं विधास्यमानं पुष्करपर्णोप मनूद्य प्रतिनियतफलप्रतिपादनेन स्तौति— "अथाहव एवेति। अवधारणफल माह— "न गार्हपत्य इति। अत्र माह— "आपो वा इति। पुष्करपर्णस्याप्सु जननात् तदब मित्यर्थः। "द्यौराहवनीय इति। सुवरिति व्याहृत्या आहि त्वाद् आहवनीयो द्युलोकात्मकः। 'तत्' तत्र पुष्करपर्णोपधा द्युलोके 'अपः' उदकानि वृष्ट्युपादानत्वेन स्थापयतीत्यर्थः॥

गार्हपत्यवदाहवनीयेऽपि सिकतानिवपनं कर्त्तव्य मि विधत्ते— "उभयत्रेति। तदेतदुपपादयति— "रेतो वा इ

सितभास्वरत्वादिरूपसाम्यात् सिकतानां रेतस्त्वम्, 'उभयत्र' गार्हपत्यस्थाने आहवनीयस्थाने च चितिरूपेण चित्योऽग्निः 'विक्रियते' विशिष्टरूपवान् क्रियते। विक्रियमाणश्चासौ 'तस्मात्' सिकतालक्षणात् 'रेतसः' 'अधि' उपरि 'विक्रियाते' विक्रियेत, विकृतिं भजेत। 'इति' अनेनाभिप्रायेण उभयत्र सिकतानां निवपनम् ॥ ८ ॥

उभयत्र मन्त्रभेदं विधाय स्तौति— "ता नाना मन्त्राभ्या मिति। 'ताः' सिकताः भिन्नमन्त्राभ्या मित्यर्थः। "अग्नेर्भस्मासीति * हि मन्त्रेण गार्हपत्ये सिकतानिवपनं विहितम् †; "अग्ने तव श्रवो वय ‡ इत्याहवनीये सिकतानिवपनस्य मन्त्रो विधास्यते §। एवं नानामन्त्रत्व मनुद्य स्तूयते— गार्हपत्याहवनीययोर्भूलोकस्वर्लोकात्मकत्वं क्रमेण प्रतिपादितम्, "नानो वा एतदिति। 'दैवं' देवसम्बन्धि, 'मानुषं' मनुष्यसम्बन्धि च यदेतत् स्थानद्वयम्, तदेतन्नानैव खलु विभिन्न मेव। मन्त्रं दैर्घ्यह्रस्वत्वाभ्यां स्तौति— "द्राघीयसेति। "अग्ने तव श्रव इति मन्त्रः, "अग्नेर्भस्मासीति मन्त्रापेक्षया 'द्राघीयान्' अतिशयेन दीर्घः; तेन 'मन्त्रेण' आहवनीये सिकता निवपति। 'ह्रसीयसा' ह्रस्वतरेण 'अग्नेर्भस्मासीति मन्त्रेण। मन्त्रगतं द्राघीयस्त्वं ह्रसीयस्त्वं च प्रतिपादयति— "द्राघीयो हीति। दीर्घतमं हि 'देवायुषं' देवाना मायुर्जीवितम्, 'ह्रसीयः' ह्रस्वतमं स्वल्पं हि

* वा० सं० १२. ४६. २।

† पुरस्तात् १ प्र० १ ब्रा० ६ क० ( ४, २१ पृ० ) द्रष्टव्यम्।।

‡ वा० सं० १२. १०६।

§ पुरस्तादिहैव ६ कण्डिकायां ( १५६ पृ० ) द्रष्टव्यम्।

'मनुष्यायुषं' मनुष्यजीवितम्; अतो देवलोकमनुष्यलोकयोः तयोराहवनीयगार्हपत्ययोस्तादृङ् मन्त्रसम्बन्धो युक्त इत्यर्थः॥

गार्हपत्यचयने सिकतानिवपनस्य परिश्रितां पूर्वभावि मनूद्य स्तौति— "स पूर्वा इति। तथा निवपने का माह— "रेतो वै सिकता इति। 'अस्मात्' सिकतारूप 'रेतसः' 'अधि' उपरि 'इमाः' परिश्रितो 'विक्रियान्ते' वि रूपाः कृता भवेयुः। अन्यथा हि निरुपादानत्वात् परि विक्रिया न स्यादिति भावः॥ १०॥

सिकतानिवपनस्य परिश्रितां पूर्वत्वे दोषं दर्शयति "तदाहुरिति। 'तत्' तत्र विषये 'आहुः' चोदयन्ति वादिनः। योनौ हि रेतः सिच्यते, परिश्रितश्च योनिसंस्तुत तथा सति 'अस्य' अग्नेः 'एतत्' सिकतारूपं 'रेतः' 'अपरा आधारादन्यत्र सिक्तम्; परिश्रिद्रूपयोन्यभावात् कथं परिगृ परिवेष्टितं भवतीत्यस्य चोद्यस्य परिहार माह— "उल्ब जषा इति। गर्भस्यान्तर्वेष्टन मुल्बं, तत्संस्तुता जषाः; पूर्वनिवपनात् तदनन्तरम् न्युप्तं सिकतारूपं 'रेतः'; तेनो 'अपरासिक्तं' गर्भाशयादन्यत्र सिक्तं 'परिगृहीतं' परिवे च 'भवति'।

आहवनीयचितौ तु सिकतानिवपनात् पूर्वं परिश्रि परिश्रयण मभिप्रेत्य तदभिमन्त्रणं विधत्ते—"अथाहवनीय इति गार्हपत्यचयनादाहवनीयचितेर्वैलक्षण्यद्योतकः 'अथ'-शब्दः। आ वनीयचितौ सिकतानिवपनात् पूर्वं परिश्रित्सञ्ज्ञकान् श

* का० श्रौ० सू० १७. ३. ६।

परपर्यायान् क्षुद्रपाषाण मभिमन्त्रयते— "चित: स्थेति * मन्त्रेण। सूत्रितं हि —"आहवनीयपरिश्रितोऽभिमन्त्रयते चित: स्थेतीति†। परिश्रिद्विधिशेष मर्थवादवाक्यं प्रागाम्नातम् ‡— "योनिर्वै परिश्रित्"-इत्यादिक मतिदिशति— "तस्योक्त इति। 'तस्य' परिश्रयणस्य विधिशेष उक्त:।

सिकतानिवपनं विधाय स्तौति— "अथ सिकतानिवपतीति। 'अथ' परिश्रयणानन्तरम्। "रेतो वा इत्याद्युक्तार्थ: § ॥ ११ ॥

न्युप्तानां सिकतानां समन्त्रक मभिमर्शनं विधत्ते— "अथाहवनीय इति ‖। आहवनीयस्थाने न्युप्ताना मेव सिकतानाम् 'आप्यायनवतीभ्यां' आप्यायतिधातुनिष्पन्नशब्दयुक्ताभ्याम्', "आप्यायस्वसन्ते ¶"-इत्येताभ्या मृग्भ्या मभिमर्शनं कर्त्तव्य मित्यर्थ:। अवधारणफल माह— "न गार्हपत्य इति। एतदेवोपपादयति— "अयं वा इत्यादिना। 'अस्मिंल्लोके जात:' 'अयम्' 'यजमान:'-इत्यय मर्थ:। 'अर्द्ध:' प्रत्यक्षसिद्ध:, न यत्नसम्पाद्य:। 'स्वर्गे लोके एव' हि 'प्रजिजनयिषितव्य:' प्रजनयितुं प्रकर्षेणोत्पादयितु मिष्ट:, अत: स्वर्गलोकसंस्तुते 'गार्हपत्ये' तत्र स्वभावत एव जातत्वादिति भाव: ॥ १२ ॥

---

* वा० सं० १२. ४६. ३।

† का० श्रौ० सू० १७. ३. ८ ख।

‡ पुरस्तात् १५३ पृ० १५ पं० द्रष्टव्यम्।

§ पूर्वत्रैहैव ८-कण्डीभाष्यं द्रष्टव्यम् (१७० पृ०)।

‖ का० श्रौ० सू० १७. ३. १६।

¶ वा० सं० १२. ११२, ११३।

अथ लोगेष्टकाना मुपधानं विधत्ते— "अथेति *। तदेतत् प्रशंसति— "इमे वै लोका इति। 'इमे' खलु पृथिव्यादयस्त्रयो 'लोकाः'। 'एषः' एव खलु 'अग्निः'। लोकसंस्तुताभिस्तिसृभि स्स्वयमातृण्णाभिर्युक्तत्वात् लोकत एव सिद्धाः लोष्टरूपा इष्टका 'लोकेष्टकाः', परोक्षं 'लोगेष्टका इत्युच्यन्ते †। तथाविधत्वं च तैत्तिरीये आम्नायते— "दिग्भ्यो लोष्टान् समस्यति, दिशा मेव वीर्य मवरुन्धे"-इति ‡ लोकसम्बन्धिन्यः प्राच्यादिदिशः ता लोकेष्टकाः। अतस्तदुपधानेन 'एषु' एव लोकेषु ता एव 'दिशः' स्थापयति। 'तस्मात्' एव कारणात् 'इमाः' प्राच्यादि-'दिशः' 'एषु लोकेषु' दृश्यन्ते॥ १३॥

वेदेर्बाह्यदेशेनेष्टकाना माहरणं विधाय स्तौति— "बाह्येनाग्नि मिति। अग्निबाह्येन अग्निचेत्राद्बाह्यदेशेनैता इष्टकाः 'आहरति। "आप्ता वा इत्यादि। 'अस्य' अग्नेः यजमानस्य वा 'ता दिशः' 'आप्ताः' प्राप्ताः। 'याः' इमाः 'एषु' लोकेषु दृश्यन्ते। 'अथ' या 'दिशः' 'इमान् लोकान्' परेण एभ्यो लोकेभ्यो बहिर्वर्त्तन्ते, 'अस्मिन्' अग्नौ 'एतत्' एतेन बाह्यदेशादाहरणेन 'दधाति' धारयति॥ १४॥

आहरणस्याग्निचेत्रापेक्षया बहिर्देशसम्बन्धः, वेद्यपेक्षयापि तथात्वं विधत्ते—"बहिर्वेदेरिति §। अग्नेर्लोकत्रयात्मकत्वात् ततो बहिराहरणम्, लोकत्रयाद् बहिरवस्थितानां दिशा माप्तिहेतु

* का० श्रौ० सू० १७. ३. ११।

† 'लोगेष्टकाः मृत्खण्डानि'—इति कर्काचार्यः।

‡ तै० सं० ५. २. ५. २० द्रष्टव्यम्।

§ का० श्रौ० सू० १७. ३. १२।

रित्युक्तम् ; इदानीं तु वेदेर्भूमिरूपत्वात् अस्या बहिरवस्थिताः यावत्यो दिशः, तासां प्राप्त्यर्थं वेदिबाह्यदेशादाहरण मित्यभिप्रेतोऽर्थः। "अथ या इमां परेणेति। 'अस्याः' पृथिव्याः 'परेण' परस्ताद्, बहिरित्यर्थः। "एनबन्यतरस्याम्"-इति * परशब्दादेनप्, "एनपा द्वितीया" † ॥ १५ ॥

विहितं लोकेष्टकोपधान मनूद्य प्रकारान्तरेण स्तौति— "यद्वेवेति। 'विस्रस्तस्य' विस्रस्तावयवस्येत्यर्थः। 'सर्वाः' प्राचादिदिशः' अनु लक्ष्य तदीयो 'रसः' 'व्यचरत्' विविध मचरत्, 'यत्र' यस्मिन् देशे 'तं' तथाविधं प्रजापतिं 'देवाः' 'समस्कुर्वन्' चित्याग्निरूपेण संस्कृतवन्तः। "अडभ्यासव्यवायेऽपीति ‡ कात् पूर्वः सुट् तत्र 'अस्मिन्' अग्न्यात्मके प्रजापतौ 'एताभिर्लोकेष्टकाभिः तं रसम्' 'अदधुः' स्थापितवन्तः। एव मेव 'अस्मिन्' अग्नौ 'अयं' यजमानोऽपि 'एतद्' रसं 'दधाति' धारयति, लोकेष्टकोपधानेनेत्यर्थः ॥ १६ ॥

आहरणस्याग्निबाह्यत्व मनूद्य स्तौति— "बाह्येनेति। पूर्ववदेनप् §, अत एव 'अग्निम्' इति द्वितीया ‖; अग्नेर्बाह्यदेशेनेत्यर्थः। "आप्तो वा अस्येत्यादि। "आप्ता वा अस्य ता दिश इत्यादिवद् ¶ व्याख्येयः। "इमान् लोकान् पराङ् रस इति। 'इमान्' पृथिव्यादिलोकान् विहाय परागतो रस इत्यर्थः ॥ १७ ॥

* पा० सू० ५. ३. ३५ ।

† पा० सू० २. ३. ३१ ।

‡ पा० ६. १. १४० सू० १ वा० ।

§, ‖ इहैव पूर्वत्र (*, †) टीप्पन्यौ द्रष्टव्ये।

¶ इहैव पूर्वत्र १७४ पृ० द्रष्टव्यम्।

बहिर्वेदेरित्येतदपि अनूद्य पृथिवीसकाशाद् बहिर्भूतायाः स्थापनं हेतुत्वेन स्तौति — "बहिर्वेदेरिति। आहरतीति शेषः। एतदपि पूर्ववद् व्याख्यातप्रायम् *। "इमां पराङ् इति इमा मतिक्रम्य परागतो रसः इत्यर्थः॥ १८॥

इत्थं लोकेष्टकाना माहरणे अग्नेर्वेदेश्च बाह्यो देशो विहितः अथ तत्र साधनं विधाय स्तौति — "स्फ्येनेति। "वज्रो वै स्फ्य इति, त्रेधा भग्नस्य वज्रस्यांशत्वात् स्फ्यस्य वज्रात्मकता। तथा तैत्तिरीयकम्— "इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीय मिति †। वृत्रासुरवधहेतुत्वात् स वज्रो वीर्यात्मकः। 'इयं' वेदिलक्षणा भूमिः 'वित्तिः' लब्धव्या धनरूपा, तथा च स्फ्येनाहरन् वज्ररूपेण 'वीर्येण' एव 'वित्तिं' लब्धव्यां भूमिं 'विन्दति' लभते॥ १९॥

अथ पूर्वस्माद्दिग्भागादाहरणं समन्त्रकं विधत्ते—"स पुरस्ता-दाहरतीति ‡। 'पुरस्तात्' पूर्वस्याः दिशः सकाशाल्लोकेष्टकां स्फ्येन 'आहरति'। पञ्चम्यर्थे अस्तातिः §। "मा मा हिंसीदिति ‖ तन्मन्त्रः 'यः पृथिव्याः' 'जनिता' जनयिता 'स मां' 'मा हिंसीत्' मा वधिष्ट। य इति सर्वनाम्ना कृत्स्नजगत्कारणत्वेन प्रसिद्धः प्रजापति-रेव प्रतिपाद्यते इत्याह— "प्रजापतिर्वा इति। 'पृथिव्यै'-इति षष्ठ्यर्थे चतुर्थी ¶। 'जनिता' जनयिता "जनिता मन्त्रे"-

* इहैव पुरस्तात् १५ क० भाष्यं (१७४ पृ०) द्रष्टव्यम्।
† तै० सं० ५. २. ६. ४१।
‡ का० श्रौ० सू० १७. ३. ११।
§ पा० सू० ५. ३. २७।
‖ वा० सं १२. १०२। ¶ पा० सू० २. ३. ६२ सू० १ वा०।

इति *। निपातनाट्टिलोपः। उक्त मर्थं योजयति— "मा मा हिंसीत् प्रजापतिरित्येतदिति।

द्वितीयपाद मनूद्य तत्र व्यानडिति क्रियापदस्यार्थ माह— "यो वा दिव मिति। 'सत्यधर्म्मा' सत्य मवितथं धर्म्म साधारणशक्तिर्यस्य तादृशो 'यः' 'दिवं' 'व्यानट्' व्याप्नोत्। व्यापन मत्र सर्जन मेवेत्याह— "असृजतेत्येतदिति। "मनुष्या वा इत्यादि। 'चन्द्राः' आह्लादिकाः, 'आपः' रेतोरूपाः। अनेन च कारणवाचिशब्देन कार्यभूता मनुष्या एवोच्यन्त इत्यर्थः। अत एव छान्दोग्ये समाम्नातम्— "पञ्चम्या माहुतावापः पुरुषवचसो भवन्तीति †। पर्यवसित मर्थं माह— "मनुष्यान् प्रथम इति। सर्वप्राणिभ्यः पूर्व मुत्पन्नत्वात् प्रजापतिरेव प्रथमः। अत एवाम्नातम्— "हिरण्यगर्भः समवर्त्तताग्र इति ‡।

चतुर्थपाद मनूद्य तत्र 'किं'-शब्दस्यार्थ माह— "प्रजापतिर्वै क इति। निरुक्तानिरुक्तरूपत्वेनानिर्द्धारितस्वरूपत्वात् किंशब्दः प्रजापतेर्वाचक इत्यर्थः। एवम्भूतो यः 'तस्मै देवाय' "क्रियाग्रहण मपि कर्त्तव्य मिति § कर्मणः सम्प्रदानत्वाच्चतुर्थी। तं देवं 'हविषा' 'विधेम' परिचरेमेति, विदधातिः परिचरणार्थः॥

एव माहृताया इष्टकायाः स्थानविशेषे उपधानं विधत्ते— "ता माहृत्येति। परिश्रित्सञ्ज्ञाना मुपहितानां शर्कराणा मभ्यन्तरदेशे आत्मनि ता मुपदध्यात् स्थापयेत्। तस्य प्रयोजन

---

* पा० ६. ४. ५३ सू०।

† छा० उप० ५. ६. १ द्रष्टव्यम्।

‡ वा० सं० १३. ४।

§ पा० १. ४. ३२ सू० १ वा०।

माह— "स य इति। 'स यः' प्रसिद्धो यो 'रसः' विस्रस्तात् प्रजापतिशरीरात् 'प्राच्यां दिशि' 'अत्यक्षरत्' अतिक्रम्य स्रुतो वत्, एतेनोपधानेन, 'तम्' एव रसम् 'अस्मिन्' प्रजापति ऽग्नौ पुनः स्थापयति। 'अथो' अपि च 'प्राची' दिक्सम्बन्धा मेव दिशम् 'अस्मिन्' स्थापितवान् भवति ॥ २० ॥

दक्षिणस्या दिश आहरणं समन्त्रकं विधत्ते— "अथ द णत इति। पञ्चम्यर्थे तसिः *। आहरतीति शेषः। अथ पूर्वदिग्भागात् यत् आहरणम्, तदनन्तरं दक्षिणस्या दि सकाशात् लोकेष्टका माहरतीत्यर्थः। "अभ्यावर्त्तस्वेति तन्मन्त्रः। पूर्वार्द्धस्य निगदव्याख्यातत्व माह— "यथैव य स्तथा बन्धुरिति। यजुर्वाक्यं यथैव श्रूयते, तादृगेव तद् ख्यायकं ब्राह्मणवाक्यम्; अतः स्पष्टार्थत्वान्न पृथग् व्याख्या इत्यर्थः।

उत्तरार्द्ध मनूद्य तत्र वपाशब्दस्यार्थ माह— "यद्वै किञ्चि अस्यां पृथिव्यां यदेव किञ्चिद् वस्तु तरुगुल्मादिकं दृश्यते, एव 'अस्यै' 'वपा' विधेया। सेति नपुंसकलिङ्गार्थो निर्देशः‡ षष्ठ्यर्थे चतुर्थी §। अय मर्थः— हे पृथिवि! 'यज्ञेन' यागसाध 'पयसा' पयोलक्षणेन 'रसेन' सह अस्मदभिमुख मावर्त्तस्व। 'द तः' प्रेरितो दोसोऽय मग्निः त्वदीयं तरुगुल्मादिरूपम् 'आरोह अधितिष्ठति। आहृतायास्तस्याः स्थानविशेषे उपधानं विधत्ते

* पा० सू० ५. ३. ७।

† वा० सं १२. १०३।

‡ 'सेति पुंल्लिङ्गनिर्देशः'— इति ङ-पाठः।

§ पा० २. ३. ६२सू० वा०।

"ता माहृत्येति। 'तां' लोकेष्टकां दक्षिणदिग्भागाद् बहिर्वेदेः 'आहृत्य' 'पक्षसन्धि मन्तरेण' दक्षिणपक्षस्य आत्मभागस्य च यः सन्धिप्रदेशः, तस्याभ्यन्तरे आत्मभागे स्थापयेदित्यर्थः। अनेनापि पूर्ववद्रसस्थापनं दिक्स्थापनञ्चात्र कृतं भवतीत्याह— "स यो दक्षिणाया मिति ॥ २१ ॥

प्रतीच्यां दिशि समन्त्रकं लोकेष्टकाया आहरणं विधत्ते— "अथ पश्चादिति *। 'अथ' अनन्तरं प्रतीच्याः दिशः सकाशात् स्फ्येन लोकेष्टका माहरतीति शेषः। तन्मन्त्रः— "अग्ने यत्त इति †। अत्राग्निशब्देन तदधिष्ठिता भूमिरेव अभेदोपचारेणोच्यत इत्याह— "इयं वा अग्निरिति। 'अस्यै' पृथिव्यै। तादर्थ्ये चतुर्थी। पूर्वार्द्धर्चेन प्रार्थनं पृथिव्यर्थ मित्यर्थः। तृतीयपाद मनूद्य देवशब्दस्य विवक्षित मर्थ माह— "तदस्मै देवायेति। एतदग्निचयनाख्यं कर्मैवात्र देवशब्दस्यार्थः। चितिरूपावयवभेदापेक्षया बहुवचन मित्यभिप्रायः॥

अर्थस्तु— हे पृथिवि! त्वदीयं यत् 'शुक्रं' रसवदङ्गम्, यच्च 'चन्द्रम्' आह्लादकरम्, तथा 'पूतं' शुद्धम्, 'यज्ञियं' यज्ञार्हञ्च यदस्ति, 'तत्' 'अस्मै' अग्न्याख्याय देवाय 'कर्मणे' आहराम इति। 'तां' लोकेष्टकाम् 'आहृत्य' इत्यादि पूर्ववत् ‡। "पुच्छसन्धि मिति। पक्ष्याकारस्य चित्याग्नेः पुच्छस्यात्मभागस्य च यः सन्धिः, 'तम् अन्तरेण' तस्य मध्ये 'आत्मन्' आत्मनि। अन्यद् गतार्थम्॥

---

* का० श्रौ० सू० १७. ३. १२।

† वा० सं० १२. १०४।

‡ एतत्पूर्वकण्डीभाष्यं (१ पं०) द्रष्टव्यम्।

साक्षात्पश्चादाहरणं निषेधति— "स न सम्प्रतीति । 'स' अध्वर्युः 'सम्प्रति' मुख्या या प्रतीची दिक्, तत्सकाशात् 'नाहरेत्' । निषिद्धुरभिप्राय माह— "नेद्यज्ञपथादिति यज्ञस्य पन्थाः यज्ञपथः, अग्नेः पाश्चात्यो देशो हविर्धा नादिः; ततः सकाशात् नैव * रस माहराणीति । यदि खलु तादृग्विधात्साक्षात्पश्चाद्भागादाहरेत्, तर्हि प्रजापतिसम्बन्धिनो विस्रस्तरसस्याहृतत्वात् तत्र करिष्यमाणो यज्ञो नीरसः स्यादित्यभिप्रायः । कथं तर्हि तत्राहरण मित्यत आह— "इ इवेति । 'इतः' प्रतीच्या दिश 'इव', न तु साक्षात् प्रतीच्या दिश उत्तरापरस्या दिश आहरेदित्यर्थः । तदुक्तं कात्यायनेन- "उत्तरापरस्याः पश्चादिति † ॥ २२ ॥

उत्तरस्या दिश आहरणं विधत्ते— "अथोत्तरत इति आहरतीति शेषः । "इष मूर्ज्ज मित्याहरणमन्त्रः ‡ । 'आदम्' -इतिक्रियापदस्यार्थ माह -- "आदद इत्येतदिति । मनसा यथार्थं सङ्कल्पनम् 'ऋतम्', यथार्थभाषणं 'सत्यम्' । अतः "ऋतस्य योनिम्"-इति § मन्त्रभागे तादृशो भेदो न विवक्षित इत्यभिप्रेत्याह— "सत्यं वा ऋत मिति । "महिषस्य धारा मिति । महिषशब्दस्यार्थं माह— "अग्निर्वै महिष इति । कथ मस्य महिषशब्दाभिधेयतेत्याशङ्क्य तन्निर्ब्रूते--"स हीदं जात इति 'सः' खल्वग्निः 'इदम्' इदानीं 'जातः' जातमात्र एव 'महान्

* 'नेद्'—इति च-पाठः ।
† का० श्रौ० सू० १७. ३. १२ ।
‡ वा० सं० १२. १०५ ।
§ वा० सं० १२. १०५ ख ।

अतिरिक्तो * भूत्वा 'सर्वं' जगत् 'ऐष्णात्' व्याप्नोत्, अतो महत्त्वादेषितृत्वाच्च महिषशब्दाभिधेयः सम्पन्न इत्यर्थः। "ऐष्णात्"-इति "इष आभीक्ष्ण्ये"-इत्यस्माल्लङ् †। तृतीयं पाद मनूद्य तत्र तनूशब्दस्यार्थ मभिधाय योजयति— "आ मेति। तनूष्विति बहुवचनम् तेन बह्ववयवोपेत आत्मा देह उच्यते। गत मन्यत्॥

मन्त्रार्थस्तु—'इषम्' इष्यमाण मन्नम्। 'ऊर्ज्जं' बलकरं रसम्। 'इतः' अस्या उदीच्या दिशः सकाशादहम् 'आददे'। किंविशिष्टम्? 'ऋतस्य' सत्यस्य यथार्थफलस्य यज्ञस्य 'योनिः' कारणम्, 'महिषस्य' महतोऽग्नेः 'धारां' धाराप्रवाहभूतां तत्साधिताम्। ईदृशी च सा, मा मुद्दिश्य मदीयासु 'गोषु' 'तनूषु' शरीरेषु 'आविशतु'-इति चतुर्थेन पादेन सम्बन्धः॥

तस्यां दिशि सिकतानां प्रध्वंसनं विधत्ते— "जहामीति। अत एवोक्तं कात्यायनेन— "उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदि मिति ‡।

मन्त्रस्यार्थ माह— "तद्येवेति। 'तत्' तत्र 'येव' खलु 'सेदिः' अवसादापरपर्याया हानिः, या च 'अनिरा' इरा अन्नं तदभावरूपा पीडा, 'या' च 'अमीवा' रोगात्मिका। 'ताम्' एतस्याम्' उत्तरस्यां 'दिशि' एतन्मन्त्रकरणकेन सिकताप्रध्वंसनेन स्थापयति। इरादीनां तत आहृतत्वादिति भावः। एतच्च तत्कार्यदर्शनादवगम्यत इत्याह— "तस्मादिति। यस्माद् अवसादादीनि स्थापितानि, तस्मादेतस्या मुत्तरस्यां दिशि

---

* 'अविविक्ती'—इति ङ, च।

† क्र्या० प० ५३ धा०।

‡ का० श्रौ० सू० १७. ३. १३।

सर्वाः 'प्रजाः' 'अशनायुक्ताः' अशनाया अशनेच्छा क्षुधा, तया पीडिता अदृश्यन्त इत्यर्थः ॥

"ता माहृत्येत्यादि पूर्ववत् * ॥ २३ ॥

अथैताः सम्भूय प्रशंसति— "ता एता दिश इति । 'ताः' प्राच्यादिदिक्षु क्रमेणोपहिताः 'एताः' इष्टकाः 'दिशः' दिगात्मिकाः, 'ताः' सर्वाभ्यो दिग्भ्यः आहृत्य 'उपदधाति'। तेन चोपधानेन 'सर्वतः' एव 'दिशः' 'दधाति' स्थापयति । 'तस्मात्' एव कारणात् इदानीं सर्वतो दिशो दृश्यन्ते ।

धर्मविशेषं विधाय स्तौति— "सर्वतः समीचीरिति † सर्वासु दिक्षु 'समीचीः' सङ्गतदिगाभिमुख्यं गता उपदधाति न तु तिर्यक्त्वेनेत्यर्थः । 'तत्' तेन 'सर्वतः' दिश एव 'समीचीः' अनूचीनाग्राः स्थापयति । "तस्मादिति फलनिर्देशः । उपधानादीनां पृथगनुष्ठानं विधत्ते— "ता नानोपदधातीति । प्रतीष्टकं समन्त्रकं स्थापनं पृथगेव कर्त्तव्यम्, "तया देवतयेति सादन मपि पृथक्, "ता अस्येति सूददोहसा मन्त्रेणाधिवदन मपि पृथक् । तत्र कारण माह— "नाना ह्यीति । 'हि' यस्मात् 'दिशः' परस्परं विभिन्नाः, अतो दिक्संस्तुताना मप्यासां पृथगुपधानादिकं युक्त मित्यर्थः । तस्मिन्नुपधाने स्थितिगुणं विधत्ते — "तिष्ठन्निति । 'तिष्ठन्', न तु आसीन इत्यर्थः । "तिष्ठन्तीव हि दिश इति । प्राच्याद्याः 'दिशः' अपि 'हि' 'तिष्ठन्तीव' ऊर्द्ध्वाकारतया दृश्यमानाः स्थितियुक्ता इव लक्ष्यन्त इत्यर्थः ।

---

* २१-कण्डीभाष्यं (१७९ पृ०, १ पं०) द्रष्टव्यम् ।

† का० श्रौ० सू० १७. ३. १४ ।

'अथो' अपि च आसीनात् पुरुषात् 'तिष्ठन्' खलु 'वीर्यवत्तरः' अधिकवीर्यवान् । इतोऽपि तिष्ठता उपधेया इत्यर्थः ॥ २४ ॥

अथासां समन्त्रकत्व मनूद्य अग्निचित्स्यात्मभागे एवोपधानं प्रतिपादयति— "ता एता इति । "यजुष्मत्य इति । करण-भूतैर्यजुर्मन्त्रैर्युक्ता इत्यर्थः । 'ताः' 'आत्मन्' आत्मनि आत्मभागे एव 'उपदधाति' । अवधारणफल माह— "न पच्छेति । तत्र कारण माह— "आत्मन् ह्येवेति । आत्मभागे एव हि यजु-र्मन्त्रोपधेया वक्ष्यमाणा इष्टका उपधीयन्ते ; अत एवासा मुपधान मपि समन्त्रक मित्यात्मन्येवेति नियमद्वय मुपपन्न मित्यर्थः ॥ २५ ॥

अथेतरेष्टकावदासां अपणाभावादशृतत्व माशङ्क्य निरस्यति — "तदाहुरिति । 'अस्य' अग्नेः 'एताः' लोकेष्टकाः 'कथं' केन प्रकारेण 'पक्वाः शृताः' पाचनसंस्कारसंस्कृताः सुशृताः * सत्य उपहिताः 'भवन्ति'-इति ब्रह्मवादिनां प्रश्नः । 'रसो वा एताः'-इति अस्योत्तरम् । विस्रस्तस्य प्रजापतिशरीरस्य रसरूपाः खल्वेता इष्टकाः 'स्वयं शृताः' खलु, अग्न्यादिपाकानपेक्षः खलु रसः । परिहारान्तर माह— "अथो इति । 'अथो'-शब्दः पक्षान्तर-द्योतने । एष एव हि चित्योऽग्निः जीव्यो † भूत्वा विश्वनरसम्बन्धी वर्त्तते, 'यत्' किञ्चिदप्यामद्रव्यम् 'एत मग्निं वैश्वानरं' प्राप्नोति, 'तत एव' तस्मादेव संसर्गात् 'तत्' सर्वं 'पक्वं शृतं' पाकेन संस्कृतं सुशृतं 'तत्' तत्र 'उपहितं भवति' इत्यर्थः ॥ २६ ॥

---

* पद मेतत् छ-पुस्तकमात्रे दृश्यते ।

† 'भाव्यो'—इति ङ-पाठः ।

चोदकप्राप्त मुत्तरवेदिनिवपनं यस्मिन् काले कर्त्तव्य मिति विधत्ते— "अथेति। लोकेष्टकोपधानानन्तर्य मथशब्दार्थः। एत दुपपादयति— "इयं वा इत्यादिना। 'इयं' भूमिरेव महावेदिः उत्तरवेदिस्तु द्युलोकात्मिका, लोकेष्टकात्मिका दिशः। ए च वेद्युत्तरवेद्योर्मध्ये लोकेष्टकोपधानं द्यावापृथिव्योर्मध्ये दि स्थापनाय भवति। 'तस्मात्' कारणादिदानी मनयोर्लोकयो र्मध्ये दिशोऽलक्ष्यन्त इत्यर्थः। उत्तरवेदेः परिमाणं विधत्ते- "तां युगमात्री मिति। षडशीत्यङ्गुलपरिमितं युगम्; उक्त ञ्चापस्तम्बेन— "अष्टाशीतिशत मीषातिर्यगक्षश्चतुःशतम्, षड शीतिर्युगं वास्येति। 'सर्वतः' सर्वासु दिक्षु तावन्मात्र मुत्तरवेदिं कुर्यादित्येकं परिमाणम्, 'चत्वारिंशत्पदां वेति परि माणान्तरम्। चत्वारिंशत्पदानि प्रमाण मस्याः सा तथोक्ता अनयोः प्रमाणयोर्मध्ये 'यथा' येन प्रकारेण 'कामयेत' तथा कुर्यादित्यर्थः॥

सिकतानिवपनं विधत्ते— "अथेति *। उत्तरवेदिनिवपना नन्तर्य मथशब्दार्थः। "तस्योक्त इति। 'तस्य' सिकतानिवपनस्य स्तावको वाक्यशेषः "अग्नेरेतद् वैश्वानरस्य भस्म यत् सिकताः -इत्यादिः † प्रागाम्नात इत्यर्थः॥ २७॥

तस्य निवपनस्य स्थानविशेषं विधाय स्तौति— "ता उत्तर वेदाविति। अग्निवपनक्षेत्रे युगमात्रीत्यादिलक्षणा योत्तरवेदि र्नियुक्ता, तस्यां सिकतां निवपति। "योनिर्वा उत्तरवेदिरिति।

* का० श्रौ० सू० १७. ३. १३।

† पुरस्तात् १ प्र० १ ब्रा० ६ क० (७भा० ४पृ०) द्रष्टव्यम्।

निखिलयागोत्पत्तिकारणाहवनीयस्थानत्वात् 'उत्तरवेदिः' अपि 'योनिः'; अत एवाग्निप्रणयनीयास्वाम्नायते*—"ऊर्णावन्तं प्रथमः सीद योनि मिति †। 'तत्' तेन उत्तरवेदौ सिकतानां निवपनेन 'योनौ' एव 'रेतः' सिक्तं भवतीत्यर्थः। 'यत्' खलु 'योनौ' गर्भाशये रेतः 'सिच्यते', 'तत्' 'प्रजनिष्णु' प्रजननशीलम्, उत्पत्तिमद् 'भवति'॥

अस्यात्मभागस्य ताभिः प्रच्छादनं विधत्ते— "ताभिः सर्वं मिति। 'तत्' तेन प्रच्छादनेन 'सर्वस्मिन्नेव' आत्मनि 'रेतः' 'दधाति' स्थापयति। 'तस्मात्' एव कारणात् 'सर्वस्मादेव' हस्तपादादिसर्वावयवसहितात् 'आत्मनः' देहात् 'रेतः' 'सम्भवति' उत्पद्यते। अतएव मन्त्रवर्णः—

"अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे"-इति ‡ ॥ २८ ॥

अस्मिन्निवपने "अग्ने तवेति षड्चं सूक्तं § करणत्वेन विधत्ते— "अग्ने तव श्रवो वय इतीति ‖। तव श्रव इति पदस्याभिप्रेत मर्थ माह— "धूमो वा अस्येति। 'अस्य' अग्नेः 'श्रवः' श्रवणहेतुः 'वयः' स्वरूपं 'धूमो वै' धूमः खलु। एतदुपपादयति— "स ह्येन मिति। 'एनम्' अग्निम् 'अमुष्मिन्' स्वर्गे 'लोके' 'सः' खलु धूमः 'श्रावयति' प्रख्यापयति; आकाशे धूमं दृष्ट्वा यागार्थ मग्नय आहिता इति द्युलोकवर्त्तिनो देवा बुध्यन्त इत्यर्थः। अतोऽन्त-

* ऐ० ब्रा० १. ५. २।
† ऋ० सं० ६. १५. १६ (ख)।
‡ सा० वे० म० ब्रा० १प्र. ५ख. १६म।
§ वा सं० १२. ३०६—१११।
‖ का० श्रौ० सू० १७. ३. १५।

र्भावितण्यर्थात् शृणोतेः श्रावयत्यनेनेति करणे अपि सति * प्रत्यये श्रव इति रूपं भवति ।

द्वितीयं पाद मनूद्य तत्रत्यं पदद्वयं व्याचष्टे— "महि भ्राजन्त इति । महत्प्रातिपदिकस्य अच्छब्दलोपे सति मही सप्तम्यन्तं पदम् । अत्र "सुपां सुलुक्"-इति † व्यत्ययेन षष्ठ्यर्थे वर्त्तत इति व्याचष्टे— "महतो भ्राजन्त इति । 'विभा' शब्दस्य तेजोवाचकत्वं प्रसिद्धम् , अत्र तु भूयस्त्व मेव तेन शब्देन विवक्षित मित्याह— "प्रभूवसवित्येतदिति ।

तृतीयपाद मनूद्य शवसेत्यस्य बल मर्थः , 'वाज'-शब्दस्य चान्न मर्थ इत्याह— "बलं वै शव इति ।

चतुर्थपाद मनूद्य दाशुष इति पदस्यार्थ माह— "यजमानो वै दाश्वानिति । "दाशृ दाने"-इत्यस्मात् ‡ क्वसौ "दाश्वान् साह्वान्"-इति § निपातनाद् दत्तवानित्यर्थो भवति । स चात्र प्रकरणाद् यजमान एवेत्यभिप्रायः ॥

ऋगर्थस्तु ,— हे 'अग्ने !' 'तव' सम्बन्धी 'श्रवः' धूमः आहुति परिणामरूपत्वाद् 'वयः' देवाना मन्नम् । हे 'विभावसो' प्रभूत धनाग्ने ! 'महि' महतस्तव 'अर्चयः' अर्चींषि 'भ्राजन्ते' दीप्यन्ते किञ्च हे 'बृहद्भानो' महादीप्ते ! हे 'कवे' क्रान्तदर्शिन् 'शवसा' बलेन सहितम् 'उकथ्यम्' उक्थार्हं प्रशस्यं 'वाजम्' अन्नं 'दाशुषे' दत्तवते यजमानाय 'दधासि' प्रयच्छसीति ‖ ॥ २८ ॥

* "ऋदोरप्"—पा० सू० ३. ३. ५७ ।

† पा० सू० ७. १. ३९ ।

‡ भ्वा० उ० ८८२ धा० ।

§ पा० सू० ६. १. १२ ।   ‖ वा० सं १२. १०६ ।

द्वितीया मृच मप्येव मेव * पादशो व्याचष्टे— "पावकवर्चा इति †। 'एषः' अग्निः 'पावकवर्चाः' शोधकदीप्तिः, 'शुक्लवर्चाः' शुक्लवर्णतेजस्क इत्येतदुभयं प्रसिद्धम्; अतो न पृथग् व्याख्येय मिति 'हि'-शब्दार्थः। उदियर्षीत्यस्यार्थ माह— "उद्दीप्यस इति। अग्नेरुद्गमनं नामोर्द्ध्वज्वलनम्, अत उद्दीप्यस इत्यस्मि-न्नर्थे पर्यवस्यतीत्यभिप्रायः। तृतीयपादार्थोऽपि प्रसिद्ध इति 'हि'-शब्देनैव व्याचष्टे— "पुत्रो ह्येष इति। चतुर्थपाद मनूद्य व्याचष्टे— "इमे वा इति। 'इमे' खलु 'द्यावापृथिव्यौ' 'रोदसी'-शब्देन वाच्ये ‡ 'एषः' अग्निस्ते 'उभे' 'पृणक्ति' संयुक्ते करोति। केन कि मिति तदाह— "धूमेनेति। द्यावापृथिव्योर्मध्ये वर्त्त-मानोऽय मग्निः 'धूमेन' उद्गच्छता 'अमूं' दिवं पृणक्ति; आहुति-द्वारा जनितया 'वृष्ट्या' च 'इमां' पृथिवीं संयोजयति॥

मन्त्रार्थस्तु— 'पावकवर्चाः' शोधकदीप्तिः, 'शुक्लवर्चाः' निर्मलदीप्तिः, 'अनूनवर्चाः' न्यूनतारहिततेजस्कश्च सन्, हे अग्ने! त्वं 'भानुना' तेजसा 'उदियर्षि' उद्गच्छसि, उद्दीप्यसे, द्यावा-पृथिव्योर्मध्ये जातत्वात् तयोः 'पुत्रः' भूत्वा 'मातरौ' सकल-भूतानां निर्मात्र्यौ द्यावापृथिव्यौ 'विचरन् उपावसि' समीपगतो रक्षसि। यथा लौकिकः पुत्रो मातृसमीपे सञ्चरन् तां रक्षति; तद्वत्। रक्षणप्रकारोऽभिधीयते— 'उभे' 'रोदसी' द्यावापृथिव्यौ क्रमात् धूमेन वृष्ट्या च 'पृणक्षि' संयोजयसि। "पृची सम्पर्के"— इति § धातुः॥ ३०॥

* 'ऋच मनूद्य ता मेव'—इति ङ-पाठः।

† वा० सं० १२. १०७।

‡ निघ० ३. ३०. ४।

§ रु० प० २५ धा०

तृतीया मृचं व्याचष्टे—"ऊर्ज्जोनपादित्यादिना *। सुशस्तिभि-रिति पदं व्याचष्टे— "सुष्टुतिभिरित्येतदिति। द्वितीयतृतीययोः पादयोः 'मन्दस्व'-'भूरि'-शब्दावनुवादेन व्याख्यातौ। चतु पादस्तु निगदसिद्ध इत्याह— "यथैव यजुरिति॥

ऋगर्थस्तु— हे 'जातवेदः' जातानां वेदितः! हे 'ऊर्जो नपात्' बलकरस्य अन्नरसस्य न पातयितः!, पौत्र! वा 'सुशस्तिभिः' सुष्टुतिभिः अस्मत्प्रयुक्ताभिः हृष्टो भूत्वा 'हित निहितस्त्वं 'धीतिभिः' कर्मभिः, प्रभाभिर्वा 'मन्दस्व' दीप्यस्व 'त्वे' त्वयि खलु 'इषः' इष्यमाणान्यन्नानि 'सन्दधुः' संहिता बभूवुः। इषो विशिष्यन्ते— 'भूरिवर्पसः'-इति। "वर्पः"-इ रूपनाम †। बहुरूपाः, 'चित्रोतयः' विचित्ररक्षणोपेताः, 'वाम जाताः' प्रशस्तजननोपेताः॥ ३१॥

चतुर्थी मृच मनूद्य व्याचष्टे— "इरज्यन्नग्न इति ‡। "मनुष वै जन्तव इति। जायन्ते पुरुषार्थोपयोगित्वेनोत्पद्यन्त इ जन्तवोऽत्र मनुष्याः; न तु क्रिमिकीटादय इत्यर्थः। "इरज्यतिः § कण्ड्वादिर्दीप्तिकर्मेत्यभिप्रेत्याह— "दीप्यमान इति। द्वितीयपा 'रेः ‖'-शब्द-स्यार्थ माह— "रयिं दधदिति। तृतीयपादार्थः प्रशि इति 'हि'-शब्देन व्याचष्टे— "दर्शतस्य ह्येष इति। चतुर्थपा

* वा० सं० १२. १०८।

† निघ० ३. ७. ३।

‡ वा० सं० १२. १०६।

§ कण्ड्वा० ६ धा०।

‖ 'रायः'—इति ङ-पाठः, 'रयि'—इति छ-पाठः।

'सानसि'-शब्दः सनातनपर्याय इति * च व्याचष्टे— "सनातनं क्रतु मित्येतदिति ॥

ऋगर्थस्तु — हे 'अग्ने !' 'जन्तुभिः' प्रशस्तजनैर्मनुष्यैर्ऋत्विग्भिः 'इरज्यन्' दीप्यमानः सन् 'प्रथयस्व'। स्वार्थिको णिच्। प्रथस्व, विस्तीर्णो भव। हे 'अमर्त्य' मरणरहिताग्ने! त्वत्प्रसादात् 'अस्मे' अस्माकं 'रायः' धनानि सन्तु। ब्राह्मणे तु "अस्मे रयिं दधदित्यर्थतो व्याख्यानम् †। तथाविधः 'सः' त्वं 'दर्शतस्य' 'दर्शनीयस्य वपुषः' ज्वालारूपस्य शरीरस्य शोभातिशयेन 'विराजसि' विशेषेण 'दीप्यसे', तथा 'सानसिं' सनातनं नित्यफलविषयं 'क्रतुं' यजमानसङ्कल्पं 'पृणक्षि' फलेन संयोजयसीति ॥ ३२ ॥

पञ्चमी मृचं व्याचष्टे—"इष्कर्त्तार मिति ‡। उपसर्गस्यादिलोपश्छान्दसः। निष्कर्त्तारम्। तथैव तैत्तिरीयैराम्नायते §। 'अध्वरस्य' यज्ञस्य निःशेषेण कर्त्ता निष्कर्ता। तथैव यज्ञस्य प्रकल्पयितृत्वर्थः सिद्ध्यतीत्याह— "अध्वरो वा इति। द्वितीयपादे राधसो मह इति षष्ठ्यन्तयोः सप्तम्यर्थता माह— "राधसि महतीति। तृतीयपादे 'महि'-इतिशब्दस्य 'महती'-शब्दपर्यायता माह— "महती मिष मित्येतदिति ॥

अथ मर्थः— 'इष्कर्त्तारं' यज्ञस्य निःशेषेण कर्त्तारम्, अत एव प्रकृष्टज्ञानवन्तम्। 'राधः'-इति धननाम ‖। 'महति' प्रभूते

---

* उण० ४ पा० १०६ सू० द्रष्टव्यम्।

† पुरस्तात् १६१ पृ० ७ पं० द्रष्टव्यम्।

‡ वा० सं० १२. ११०।

§ तै० सं० ४. २. ७. १० द्रष्टव्यम्।

‖ निघ० २. १० १७।

'राधसि' धने विषये 'क्षयन्तं'। "क्षयतिरैश्वर्यकर्मा" *। ईश्वरत्वेन सन्तम्, ममेति शेषः। स त्वं 'वामस्य' वननीयस्य धनस्य 'रातिं' दानं 'सुभगां' शोभनां 'महीं' महतीम् 'इषम्' इष्यमाणमन्नं च 'सानसिं' सनातनं चिरन्तनं गवाश्वादिपशुरूपं 'रयिं' च यजमानाय 'दधासि' धारयसीति ॥ ३३ ॥

षष्ठी मृच मनूद्य पादशो व्याचष्टे— "ऋतावान मिति †। यद्यपि ऋतसत्ययोर्मानसवाचिकयथार्थसङ्कल्पनतद्भाषणरूपत्वात् भेदोऽस्ति, तथाप्यत्र तादृशो भेदो न विवक्षित इत्याह—"सत्यावान् मित्येतदिति। "अग्निर्वै महिष इति। "स ह्येदं जातो महान्त्सर्वं मैक्षतादिति ‡ तन्नामनिर्वचनस्य प्रागाम्नातत्त्वादिति भावः। सर्वैर्दर्शनीयत्त्व मस्य प्रसिद्ध मतो न पृथग् व्याख्यातव्य मित्यभिप्रेत्याह— "विश्वदर्शतो ह्येष इति। "यज्ञो वै सुम्न मिति। यद्यपि सुखवाची 'सुम्न'-शब्दः §, तथाप्यत्र प्रकरणात्तत्साधनो यज्ञ एव तस्यार्थः। उत्तरार्द्ध मनूद्य श्रुत्कर्णपदं व्याचष्टे— "आशृण्वन्त मिति। श्रवणशीलकर्णोपेतम्, आ समन्तात् शृण्वन्त मिति यावत्। 'गिरा'-इतिविशिष्टसाधनश्रवणात् योग्यक्रियाध्याहारेण वाक्यं पूरयति— "मनुष्या हवामह इत्येतदिति ॥

ऋगर्थस्तु— सत्यवन्तं, महान्तं, सर्वेषां दर्शनीयम्, एवम्भूत मग्निम्, ऋत्विग्यजमानलक्षणाः 'जनाः' 'सुम्नाय' सुखसाधन

* निघ० २. २१. ३।

† वा० सं० १२. १११।

‡ पुरस्तात् १५७ पृ० १२ पं०, ततः १८० पृ० १७ पं०।

§ निघ० ३. ६. १६।

भाय यज्ञाय 'पुरो दधिरे' पुरस्कुर्वन्ति, वय मपि 'श्रुत्कर्णम्' अभिमतफलप्रार्थनं सम्यक् शृण्वन्तं, 'सप्रथस्तमम्' अतिशयित-कीर्त्तिवन्तं, 'दैव्यं' स्वार्थिकस्तद्धितः, देवं 'त्वा' त्वां 'गिरा' स्तुतिरूपया वाचा 'हवामहे' आह्वयामः। कर्त्तारो विशेष्यन्ते— "मानुषेति। 'मानुषाणि' मनोः सम्बन्धीनि 'युगा' युगानि, युगलानि भूत्वा, जायापत्यात्मना युगलभूता मनुष्या इत्यभिप्रायः ॥ ३४ ॥

इत्थं सिकतानिवपने करणभूतं षड्चं व्याख्याय तस्य वैश्वानराग्न्यात्मकतां प्रतिपादयन् स्तौति— "स एष इति। यत् 'एतत् षड्चं' सूक्तम्, 'एषः' साक्षात् 'वैश्वानरोऽग्निरेव', तथाविधस्याग्नेः 'आरम्भाय' उत्पादनाय 'एव' हि 'इमाः सिकता न्युप्यन्ते'; तस्माद्वैश्वानरात्मकेन सूक्तेन तन्निवपनात् 'वैश्वानरं' तम् अग्निं 'रेतोभूतं' रेतोरूपेणावस्थितम्, एतस्मिंश्चेष्यमाणे अग्नौ 'सिञ्चति' प्रक्षिपति। षड्चकरणकत्त्व मनूद्य तत् सङ्ख्याद्वारेण स्तौति— "षड्चेति *। न्युप्यत इति शेषः। "संवत्सरो वैश्वानर इति। संवत्सरधारणेन जायमानत्वात् वैश्वानराग्नेः संवत्सरात्मकता ॥ ३५ ॥

सिकतानां रेतस्त्वे तत्साम्य मवश्यं वर्णनीय मिति प्रश्नपूर्वकं तदाह— "तदाहुरिति। यदीमाः सिकता रेतःसंस्तुताः, तत्तावश्यं तत्साधर्म्यं वक्तव्यम्,— 'किं' तदासां सिकतानां सम्बन्धि 'रेतोरूपं' रेतःसम्बन्धी धर्मविशेष इति प्रश्नार्थः। "शुक्ला इत्याद्युत्तरम्। शौक्ल्य मासां रेतसश्च तादात्म्यहेतुः साधारणो धर्मः;

---

* का० श्रौ० सू० १७. ३. १५। वा० सं० १२. १०६—१११।

अथ मेकस्तादात्म्यहेतुः। 'अथो' अपि च 'पृश्नयः' सूक्ष्मपरिमाण बिन्दुरूपा हि सिकताः, 'रेतोऽपि हि' 'पृश्नीव' सिकतोपमं सूक्ष्मपरिमाणबिन्दुभिर्युक्त मिव भवति; अय मपरस्तादात्म्य हेतुरित्यर्थः ॥ ३६ ॥

नन्वार्द्रं रेतः, शुष्काः सिकताः, कथ मासा मार्द्रत्वलक्षणं रेतोरूपं स्यादिति प्रश्नपूर्वकं तत् प्रतिपादयति— "तदाहुरिति "कथ मस्यैता इति। 'अस्य' वैश्वानरस्याग्नेः 'एताः' सिकता 'कथ मार्द्राः' सत्यो 'रेतोरूपं' रेतसः सम्बन्धि आर्द्रत्वलक्षण स्वरूपं 'भवन्तीति' प्रश्नः। "रसो वा इत्याद्युत्तरम्। गायत्र्या दीनि हि 'छन्दांसि' 'रसः'; सारवत्त्वात्। रसस्य चार्द्रत्व मन्य प्रसिद्ध मित्याह— "आर्द्र उ वा इति। ततः किं मित्या — "तद्यदेना इति। अस्मिन् षडृचे गायत्र्यादीनां सप्तानां छन्दसा मन्तर्भावोऽग्रे प्रतिपादयिष्यते *; 'तत्' तथा सति 'यत्' यस्माद् 'एनाः' † सिकताः शब्दरसात्मकैः 'छन्दोभिर्निवपति' ततः 'एवम्' अनेन प्रकारेण खलु 'अस्य' सम्बन्धिन्यः सिकता 'आर्द्राः' सत्यः रेतःस्वरूपं प्रतिपद्यन्त इत्यर्थः ॥ ३७ ॥

अथ सिकतानां शुक्लकृष्णरूपद्वयं स्तोतुं पृच्छति— "तदाहु रिति। ननु चित्योऽग्निः संवत्सरात्मकः, संवत्सरश्चाहोरात्रा त्मकः, तत्समुदायरूपत्वात्; अतः सिकतोपधान मप्यहो रात्राभ्यां करणभूताभ्यां निष्पादनीयम्, तत् कथ मुपपद्यते इति ब्रह्मवादिनां प्रश्नः। "द्वे वा इति परिहारः। 'द्वे' एव

* इहैव परस्तात् ४१ कण्डी (मूलन्तु—१६४पृ० १पं०) द्रष्टव्यम्।

† 'एताः'—इति सर्वटीकापुस्तकपाठः, मूलपुस्तकेषु तु मद्दृष्टेषु सर्वेष्वेव 'एनाः'—इति।

अहोरात्रे' पर्यावर्त्तमाने ; तत्र 'शुक्लम्' अहः, 'कृष्णं' रात्रिः ; सिकता अपि शुक्लकृष्णभेदेन द्विविधाः ; अतस्तद्वर्णयोगादेतासा मुपधानम् 'अहोरात्राभ्याम्' एव कृतं भवतीत्यर्थः ॥ ३८ ॥

इत्थं वर्णतोऽहोरात्रसाम्य मुक्तम्, अथ सङ्ख्यासम्पत्तिरपि कथ मित्याशङ्कापूर्वकं प्रतिपादयति— "तदाहुरिति । संवत्सर-सम्बन्धिभिः 'अहोरात्रैः' समानसङ्ख्याकाः, न्यूनाधिकसङ्ख्यारहिताः कथम् 'उपहिता भवन्तीति' प्रश्नः । "अनन्तानि वा"-इत्युत्तरम् । संवत्सराणा मानन्त्यात् तदवयवा अहोरात्रा अप्यनन्ताः । यद्यपि "रात्राह्नाहाः पुंसि"-इति * पुल्लिङ्गेन भवितव्यम्, तथापि "हेमन्तशिशिरावहोरात्रे च च्छन्दसि"-इति † निपातनाल्लिङ्गाद् बहुवचनान्तस्यापि नपुंसकलिङ्गता । "एव मु हास्येत्यादि स्पष्टम् ॥

अथैतदुपधानकरणस्य षडृचस्य यच्छन्दस्तस्य समुद्रिय मिति यन्नाम कस्मान्निमित्तादिति पृच्छति— "अथ कस्मादिति । तन्नि-मित्त माह—"अनन्तो वा इति । 'अनन्तः' अन्तरहितः ; समाप्ति-रहितः खल्वयम् समुद्रो जलनिधिः, सिकताश्चानन्ताः ; परि-गणनानर्हत्वात् । अतस्तासा मुपधानमन्त्रसम्बन्धिनश्छन्दसोऽपि अन्तराहित्यात् समुद्रसाम्यात् समुद्रे भवं समुद्रिय मिति व्युत्पत्त्या तन्नामधेयतेत्यर्थः ॥ ३९ ॥

नन्वनन्तानां सिकताना मुपधानम् पृथक् पृथक् कथं समन्त्रकं स्यादिति पृच्छति— "तदाहुरिति । "मनो वा इत्याद्युत्तरम् । मन एव हि सर्वासां सिकतानां साधारणं यजुः ; तदुच्चारणहेतुत्वात् मनसो यजुष्ट्वम् । 'तदिदं' मनो-

* पा० सू० २. ४. २९ ।

† पा० सू० २. ४. २८ ।

रूपं 'यजुः' सर्वाः सिकताः 'अनु'-लक्ष्य 'विभवति' प्रत्ये
व्याप्तुं शक्नोति। अनेनैव हि प्रकारेण 'अस्य' चित्यस्या
'एताः' सर्वाः सिकताः 'पृथक् नाना' 'यजुर्भिः' विभिन्नैः य
मन्त्रैः 'उपहिता भवन्ति' ॥ ४० ॥

अपि एतस्मिन् षडृचे सप्तानां छन्दसा मन्तर्भावप्रदर्श
स्तौति— "तदाहुरित्यादिना। 'एताः' सिकताः 'सर्वैः' गायत्र्या
दिभिः सप्तभिः 'छन्दोभिः' 'कथ मुपहिता भवन्ति'। "अग्ने
श्रवः"-इत्यादीनां षण्णा मृचां * प्रतिनियतैकच्छन्दोरूपत्वादि
भिप्रायेण प्रश्नः। "यदेवैना इत्युत्तरम्। 'यत्' यत एव कारण
'एनाः' 'एतेन' षडृचेन सूक्तेन 'निवपति', तेनैताः सर्वैश्छन्दो
रुपहिता भवन्ति'।

कथ मिति चेत्, उच्यते— गायत्र्यादीनां जगत्यन्ता
सप्तानां छन्दसां यावन्त्यक्षराणि मिलित्वा सम्पद्यन्ते, ताव
तस्य षडृचस्याक्षराणि भवन्ति। तथाहि,— गायत्री चतु
विंशत्यक्षरा, उष्णिगष्टाविंशत्यक्षरा, अनुष्टुभो द्वात्रिंशदक्षराणि
बृहत्याः षट्त्रिंशदक्षराणि, पङ्क्तेश्चत्वारिंशत्, चतुश्चत्वारिं
शत् त्रिष्टुभः, अष्टाचत्वारिंशज्जगत्याः; तानि च सम्भूय द्विपञ्चा
शदधिकशतद्वयसङ्ख्याकानि भवन्ति।

अस्मिन् षडृचे प्रथमा चत्वारिंशदक्षरा, द्वितीया एकचत्वारिं
शत्, तृतीया चतुर्थी च चत्वारिंशदक्षरा, पञ्चमी-षष्ठ्यौ
द्विचत्वारिंशदक्षराणि; एवं पञ्चचत्वारिंशदधिकशतद्वयसङ्ख्या
कानि भवन्ति। अन्यानि सप्ताक्षराणि छैप्रसंयोगविभाग

* वा सं० १०६—१११।

ष्टव्यानि । एवं सप्तच्छन्दांस्यक्षरसङ्ख्याद्वारेणास्मिन् षडृचे अन्तर्भवन्ति । "एव मु हास्येति, प्रतिपादितार्थनिगमनम् ॥ ४१ ॥

उत्सन्नयज्ञभागस्य पुनराहरणार्थत्वेन सिकतानिवपनं स्तौति— "यद्वेवेति । 'एषः' चित्योऽग्निः विराडात्मकः 'प्रजापतिः' । 'सर्वं' निरवशेष मेव कृत्स्नं 'ब्रह्म' मन्त्रजातम्, स 'प्रजापतिः' । 'तत्' तथा सति तस्य ब्रह्मणो यदेतत् 'उत्सन्नं' विशीर्णं स्वरूपम्, तत् सिकतात्मना परिणतम् । 'अथ 'यत्' तु 'अनुत्सन्नम्' अविनष्टं ब्रह्मणो रूपं चीयमानाग्निरूपम् । 'तत्' ततोऽनेन सिकतानिवपनेन 'ब्रह्मण उत्सन्नम्' एव रूपं पुनः अस्मिन् प्रजापत्यात्मकेऽग्नौ सन्दधातीति ॥

तासा मपरिमितत्व मनूद्य स्तौति— "ता असङ्ख्याता इति । 'तद्ब्रह्मण उत्सन्नं' रूपम्, यत् परिमाणविशिष्ट मिति, तत् को नाम जानीयात्? अतस्तासा मपरिमितत्वम्; अपरिमितस्योत्सन्नरूपस्य प्राप्तौ सम्पद्यत इत्यर्थः ॥

विद्वदनुष्ठानं प्रशंसति— "स ह वा इति । 'सर्वं' निरवशेषम्, 'कृत्स्नं' सर्वावयवसहितम् । स्पष्ट मन्यत् ॥ ४२ ॥

अपरिमिताना मप्येतासां सङ्ख्याविशेषप्रदर्शनेन स्तुतिश्चिकीर्षिता, तदर्थं पृच्छति — "तदाहुरिति । 'असङ्ख्यातानाम्' अपरिमितानाम् 'आसां' सम्बन्धिनी सङ्ख्या कीदृशीति प्रश्नः । चतुर्धा सङ्ख्यासद्भावं प्रशंसति— "द्वे इत्यादिना । शुक्लकृष्णात्मना द्वैराश्यादपरिमितानां सिकतानां द्वित्वम् । "सप्तविंशतिशतानीति । सिकताना महोरात्ररूपता प्रागुक्ता * । संवत्सरसम्बन्धिना

* पुरस्तात् १८२ पृ० द्रष्टव्यम् ।

मह्नां रात्रीणाञ्च परिगणने सति विंशत्यधिकानि सप्तशतानि भवन्ति ; अतस्तदात्मिकानां सिकताना मपि सैव सङ्ख्या भवतीत्यर्थः । "द्वे द्वापञ्चाशे शते इति । द्विपञ्चाशदधिकद्विश सङ्ख्यया सङ्ख्याः सिकता इति ब्रूयात् । तदुपधानमन्त्र षड्चस्य तावत्सङ्ख्याकाक्षरोपेतत्वात् तेषा मक्षराणां सिकताना तादात्म्य मित्यर्थः ।

"अथो पञ्चविंशतिरिति । पञ्चविंशतिसङ्ख्यया सङ्ख्याः सिकता कुत इत्यत आह— "पञ्चविंशं हीति । शरीरं हि प्रकृतिमहदा चतुर्विंशतितत्त्वात्मकम् , तत उत्पन्नं 'रेतः' 'पञ्चविंशं पञ्चविंश सङ्ख्यापूरकम् *, रेतःसंस्तुताश्च सिकताः ; अतः पञ्चविंश सङ्ख्याकत्वं तासां प्रतिपत्तव्य मित्यर्थः ॥ ४३ ॥

लोकेष्टकावत् सिकताना मप्यात्मभागे एवोपधानं विध — "ता एता इति । इद मपि लोकेष्टकाप्रकरणस्थवाक्य वद् व्याख्येयम् † । सिकताना मपीष्टकात्वादितरेष्टकास्विव प्रस सादनं निषेधति— "न सादयतीति । "तया देवतयेति ‡ मन्त्रे स्थापनं सादनम् , तन्न कर्त्तव्यम् । निषेधकारण माह— "नेद् इति । प्रजोत्पत्तिकारणं 'रेतः' शुक्रम् , नैव क्वचिदेव 'स्था यानि' 'इति' अनेनाभिप्रायेण ; सादने हि तत् क्वचिदेव प्रतिष्ठि स्यात् , न तु चलितं सत् गर्भाशये प्रविशेदिति भावः ॥ ४४ ॥

अथ समन्त्रक मेतासा मभिमर्शनं विधत्ते— "अथै

---

* शरीरमित्याद्येतदन्तं नानाऽशुद्धपाठसमन्वित मिदं वाक्यं ज-पुस्तके ।

† पुरस्तादिहैव २२-कण्डीभाष्य मारभ्य द्रष्टव्यम् ( १७६ पृ० ) । का० श्रौ० सू० १७. ३. ११, १२ द्रष्टव्ये ।

‡ वा० सं० १२. २ । का० श्रौ० सू० १७. १. १२ ।

इति। 'आप्यायनवतीभ्यां' आप्यायनक्रियाप्रतिपादकः शब्दः, आप्यायनम्, उपचारात्; तद्वतीभ्यां "आप्यायस्व"—"सन्ते"-इत्येताभ्याम् *। "इद मेवैतदिति। 'इद मेवैतत्' सिकतात्मकं रूपं 'सिक्तं रेतः' 'आप्यायति' धातुयुक्तमन्त्रकरणकाभिमर्शनेनाप्यायति प्रवर्द्धयति। यत एवैवं यज्ञे, तस्मादेव स्त्रीणां 'योनौ' पुरुषैः 'सिक्तं रेतः' 'आप्यायते' शरीराकारेण परिणतं सद्वर्द्धते। मन्त्रसम्बन्धिदेवताद्वारेण प्रशंसति— "सौमीभ्या मिति। सोमोऽनयोर्देवता "सास्य देवतेत्यर्थे सोमात् अण्" † "टिड्ढाणञिति ‡ ङीप्। ऋग्भ्या मभिमृशतीति शेषः § ॥

"प्राणो वै सोम इति। प्राणस्य तावदुदकमयत्वं प्रसिद्धम्; "आपोमयः प्राणः"—इति श्रुतेः‖। तथाच सोमोऽपि अमृतमयरसात्मकतया प्राणोपादानत्वात् प्राण एव। 'तत्' तेन सौमीभ्या मभिमर्शनेन सिकतात्मके सिक्ते रेतसि सोमात्मकं प्राण मेव स्थापयति। "तस्मात्"—इत्यादिना लोकस्थितिनिरूपणम्। यस्माद्वैदिके कर्मणि रेतसि प्राणः स्थापितः, तस्मादेव कारणात् प्राण मभिलक्ष्य प्राणसहित मेव गर्भाशये 'सिक्तं रेतः' 'सम्भवति' शरीराकारेण परिणमते। यत्तु प्राणादृते रेतः सिच्यते, तत् पूयेदेव, न शरीराकारेण सम्पद्यत इत्यर्थः। एव मेवैतरेयकेऽप्याम्नातम्— "न ह वा

---

* वा० सं० १२. ११२, ११३।

† पा० सू० ४. २. २४।

‡ का० श्रौ० सू० १७. ३. १६।

§ पा० सू० ४. १. १५।

‖ छा० उप० ६. ५. ४।

ऋते प्राणाद्रेतः सिच्यते, यद्वा ऋते प्राणाद्रेतः सिच्यते, पूर्वेव सम्भवेदिति।

अस्याभिमर्शनस्य सूददोहसाधिवदनकार्यकरत्वात् तदात्मकता माह— "एषो हैवात्वेति। यत् सौमीभ्या मभिमर्शनम् 'एषा' वा 'अत्र' सिकतोपधाने 'सूददोहाः' "ता अस्य सूददोहस इति * मन्त्रकरणक मधिवदनम्॥

कथ मन्यस्यान्यात्मतेत्यत आह— "प्राणो वा इति। अभिमर्शनमन्त्रप्रतिपाद्यस्य सोमस्य सूददोहसश्च प्राणात्मकत्वसाम्यादित्यर्थः॥ ४५॥

तत्र प्रथमा मृच मनूद्याप्रसिद्धार्थं पदं व्याचष्टे— "आप्यायस्वेति। "रेतो वै वृष्ण्य मिति। वृषा सेचनसमर्थो युवा, तत्र भवं वृष्ण्य मिति व्युत्पत्तेः वृष्ण्यशब्देन रेतः प्रतिपाद्यत इत्यर्थः॥

पदार्थ मुक्त्वा वाक्यार्थं योजयति— "सर्वतः सोम रेत इत्येतदिति। "अन्नं वै वाज इति। वाजशब्दस्य "वज व्रज गतौ" † -इत्यस्माद् व्युत्पन्नस्य गत्यर्थत्वात् अत्र च तत्प्रतिपादकत्वायोगात् रूढ्या वाजशब्देनान्न मुच्यत इत्यर्थः। अत एव वाजशब्दोऽन्ननामसु पठ्यते— "अन्धः वाजः पय"-इति ‡। हे सोम त्वम् 'आप्यायस्व' वर्द्धस्व, अस्मान् वर्द्धय वा। त्वदीयं 'वृष्ण्यं' वृषसम्बन्धि 'रेतः' इम मग्निं 'विश्वतः' सर्वतः 'समेतु' प्राप्नोतु। अन्नस्य सङ्गमनाय त्व मस्माकं भवेति मन्त्रार्थः॥

---

* वा० सं० १२. ५५। का० श्रौ० सू० १६. ७. १४।

† धा० प० २५२, २५३ धा०।

‡ निघ० २. ७. २।

द्वितीया माप्यायनवती मनूद्याप्रसिद्धार्थानि पदानि व्याचष्टे— "सन्ते पयांसीति *। अत्र पयःशब्दो रसपरः, वाजशब्दोऽन्नपरः, तथा चाय मर्थ इत्याह— "सन्ते रसा इति। द्वितीयार्द्धे 'अभिमाति'-शब्देन पाप्मोच्यत इत्याह— "पाप्मसह इत्येतदिति। तृतीयपादे 'अमृत'-शब्दस्याभिप्राय माह— "प्रजात्या मिति। पुत्रपौत्रादिरूपेण यैव प्रजातिलक्षणा प्रजोत्पत्तिरूपा क्रिया 'अमृता', "आप्यायमान इत्यनेन मन्त्रभागेन तस्यां प्रजात्या ममृतत्वं स्थापयति। यस्मादेवं 'तस्मात्' 'प्रजातिः' प्रजोत्पत्तिः 'अमृता' मरणरहिता अविच्छिन्ना सार्वकालिकी वर्त्तते इत्यर्थः। चतुर्थपादे 'श्रवः'-शब्दस्यार्थ माह— "चन्द्रमा वा अस्य दिवि श्रव इति। 'अस्य' ( अधियज्ञं † ) लतारूपेण वर्त्तमानस्य सोमस्य 'दिवि' द्युलोके 'उत्तमम्' उत्कृष्टं 'श्रवः' नाम चन्द्रमा एवोच्यते। कथ मस्य श्रवःशब्दाभिधेयतेति तत् प्रतिपादयति— "स ह्येन मिति। 'अमुष्मिन्' स्वर्गे लोके 'सः' खलु 'चन्द्रमाः' 'एनं' सोमम् अमृतात्मना पीयमानः सन् 'श्रावयति' प्रख्यापयति, अतः श्रावयितृत्वात् श्रवःशब्देन स उच्यत इत्यर्थः॥

मन्त्रगतं द्वित्वं छन्दोविशेषञ्चानूद्य 'तस्य' स्तावको वाक्यशेषः प्रागाम्नात इत्याह— "द्वाभ्या मिति। "द्विपाद्यजमान इत्यादिर्द्वित्वसङ्ख्यास्तुतिः॥ ४६॥

लोकेष्टकादिसङ्ख्यां सम्भूय स्तौति— "अथातः सम्पदेवेति। स्पष्टो-

---

* वा० सं १२. ११३।

† च-पुस्तके एषोऽधिकः पाठः।

ऽर्थः । "यावानग्निरित्यादि । प्रागुक्तोऽर्थः * ॥ ४७ ॥ ३ [३.१.]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

आप्यानवतीभ्या मभिमृश्य । प्रत्येत्यातिथ्येन प्रचरत्यातिथ्येन प्रचर्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्यैतां चर्म्मणि चितिꣳ समवशमयन्ति तद्यच्चर्म्मणि चर्म्म वै रूपꣳ रूपाणा मुपाप्त्यै लोमतो लोम वै रूपꣳ रूपाणा मुपाप्त्यै रोहिते रोहिते ह सर्व्वाणि रूपाणि सर्व्वेषाꣳ रूपाणा मुपाप्त्या ऽआनडुहे ऽग्निरेष यदनड्वानग्निरूपाणा मुपाप्त्यै प्राचीनग्रीवे तद्धि देवत्रा † ॥ १ ॥

तदग्रेण गार्हपत्यम् । अन्तर्व्वेद्युत्तरलोम प्राचीनग्रीव मुपस्तृणाति तदेतां चितिꣳ समवशम-

---

* पुरस्तात् ११८ पृ० द्रष्टव्यम् ।

† 'देवत्रा'—इति ग, घ ।

यन्त्यथ प्रोक्षति तद्यत् प्रोक्षति शुद्ध मेवैतन्मेध्यं करोत्याज्येन तद्धि शुद्धं मेध्य मथो ऽअनभ्यारोहाय न हि किञ्चनान्यद्धविराज्येन प्रोक्षन्ति तूष्णी मनिरुक्तं वै तद्यत् तूष्णीꣳ सर्व्वं वा ऽअनिरुक्तꣳ सर्व्वेणैवैतच्छुद्धं मेध्यं करोत्यथो ऽअनभ्यारोहाय न हि किञ्चनान्यद्धविस्तूष्णीं प्रोक्षन्ति ॥ २ ॥

यद्वेव प्रोक्षति । हविर्वा ऽएतत् तदेतदभिघारयति यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्य माज्येनाज्येन हि हविरभिघारयन्ति तूष्णीं तूष्णीꣳ हि हविरभिघारयन्ति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रꣳ हि देवानाम् ॥ ३ ॥

तदाहुः । यत् प्रथमा मेव चितिं प्रोक्षति कथ मस्यैष सर्व्वोऽग्निः प्रोक्षितो भवति कथं चर्म्मणि प्रणीतः कथ मश्वप्रणीत इति यदेवात्र सर्व्वासां चितीना मिष्टकाः प्रोक्षत्येव मु हास्यैष सर्व्वोऽग्निः प्रोक्षितो भवत्येवं चर्म्मणि प्रणीत एव मश्वप्रणीत उद्यच्छन्त्येतां चितिम् ॥ ४ ॥

अथाहाग्निभ्यः प्रक्रियमाणेभ्योऽनुब्रूहीति । एतद्वै

देवानुपप्रैष्यत एतं यज्ञं तꣳस्यमानान् रक्षाꣳसि नाष्ट्रा अजिघाꣳसन्न * यक्ष्यध्वे न यज्ञं तꣳस्यध्व इति तेभ्य एतानग्नीनेता इष्टका व्वज्रान् क्षुरपवीन् कृत्वा प्राहरंस्तैरेनानस्तृणवत तान्स्तृत्वाभयेऽनाष्ट्र एतं यज्ञ मतन्वत ॥ ५ ॥

तद्वा एतत् क्रियते। यद्देवा अकुर्वन्निति नु तानि रक्षाꣳसि देवैरेवोपहतानि † यत् त्वेतत् करोति यद्देवा अकुर्वंस्तत् करवाणीत्यथो यदेव एव यः पाप्मा तेभ्य एतानग्नीनेता इष्टका व्वज्रान् क्षुरपवीन् कृत्वा प्रहरति तैरेनान्स्तृणुते तान्स्तृत्वाभयेऽनाष्ट्र एतं यज्ञं तनुते ॥ ६ ॥

तद्यदग्निभ्य इति। बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत् प्रक्रियमाणेभ्य इति प्र हि हरति ॥ ७ ॥

तद्धैकेऽन्वाहुः। पुरीष्यासो अग्नयः प्रावणेभिः सजोषस इति प्रायणरूपं न तथा कुर्यात्

* 'आजिघाꣳसन्न'--इति क।

† 'देवैरेवापहतानि'--इति क, ख।

दाग्नेयीरेव गायत्रीः कामवतीरनुब्रूयादा ते वत्सो मनो यमत्तुभ्यं ता अङ्गिरस्तमाग्निः प्रियेषु धामस्विति ॥ ८ ॥

आग्नेयीरन्वाह। अग्निरूपाणा मुपाप्त्यै कामवतीः कामाना मुपाप्त्यै गायत्रीर्गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतꣳ सिञ्चति तिस्रस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतद्रेतो भूतꣳ सिञ्चति ताः सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्याꣳ सप्तचितिकोऽग्निः सप्तऽर्त्तवः संव्वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत् तद् भवत्युपाꣳश्वन्वाह रेतो वाऽअत्र यज्ञ उपाꣳशु वै रेतः सिच्यते पश्चादनुब्रुवन्नन्वेति छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥ ९ ॥

अथाश्वꣳ शुक्लं पुरस्तान्नयन्ति। एतद्वै देवा अबिभयुर्यद्वै न इह रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतं व्वज्र मपश्यन्न मु मेवादित्य मसौ वाऽआदित्य एषोऽश्वस्त ऽएतेन व्वज्रेण पुरस्ताद्

रक्षाᳪसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रे स्वस्ति समा
श्नुवत तथैवैतद्यजमान एतेन वज्रेण पुरस्ता
रक्षाᳪसि नाष्ट्रा अपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नु
ऽआगच्छन्त्यग्निं दक्षिणतः पुच्छस्य चिति मुपनि
धत्युत्तरतोऽश्व माक्रमयन्ति ॥ १० ॥

त मुत्तरार्द्धेनाग्नेः * । अन्तरेण परिश्रितः प्रा
नयन्ति तत् प्राच्यै दिशः पाप्मान मपहन्ति
दक्षिणा तद्दक्षिणायै दिशः पाप्मान मपहन्ति
प्रत्यञ्चं तत् प्रतीच्यै दिशः पाप्मान मपहन्ति
मुदञ्चं तदुदीच्यै दिशः पाप्मान मपहन्ति सर्व्वा
एवैतद्दिग्भ्यो रक्षाᳪसि नाष्ट्रा अपहत्याथैन मुद
प्राञ्चं प्रसृजति तस्योक्तो बन्धुः ॥ ११ ॥

तं प्रत्यञ्चं यन्तम् । एतां चिति मवघ्रापयत्य
वा ऽआदित्य एषोऽश्व इमा उ सर्व्वाः प्रजा य
इमा इष्टकास्तद्यदवघ्रापयत्यसाविव तदादित्य इमा
प्रजा अभिजिघ्रति तस्मादु हैतत् सर्व्वोऽस्मी
मन्यते प्रजापतेर्व्वीर्येण तद्यत् प्रत्यञ्चं यन्त मवघ्रा

* 'त मुत्तरार्द्धे नाग्ने'—इति ग, घ ।

पयति प्रत्यङ् ह्येवैष यन्निमाः सर्व्वाः प्रजा अभिजिघ्रति ॥ १२ ॥

यद्देवावघ्रापयति । असौ वा ऽआदित्य एषोऽश्व इम ऽउ लोका एताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव तदादित्य इमांल्लोकान्त्सूत्रे समावयते तद्यत् तत् सूत्र मुपरि तस्य बन्धुः ॥ १३ ॥

यद्देवावघ्रापयति । अग्निर्द्देवेभ्य * उदक्रामत्सोऽपः प्राविशत्ते देवाः प्रजापति मब्रुवंस्त्वमिम मन्विच्छ स तुभ्यꣳ स्वाय पित्र ऽआविर्भविष्यतीति त मश्वः शुक्लो भूत्वान्वैच्छत्त मद्भ्य उपोदासृप्तं पुष्करपर्णे व्विवेद त मभ्यवेत्यावचक्रे स हैन मुदुवोष तस्मादश्वः शुक्ल उदुष्ट मुख इवाथो ह दुरक्षो भावुकस्तु मु वा ऽऋत्वेव हिꣳसित्वेव मेने तꣳ होवाच व्वरं ते ददामीति ॥ १४ ॥

स होवाच । यस्त्वानेन रूपेणान्विच्छादिन्दादेव त्वा स इति स यो हैन मेतेन रूपेणान्विच्छति व्विन्दति हैनं व्विक्त्वा हैवैनं चिनुते ॥ १५ ॥

* 'अग्निर्द्देवेभ्यः'—इति क ।

स शुक्लः स्यात् । तद्ध्येतस्य रूपं य एष तपति यदि शुक्लं न विन्देदप्यशुक्लः स्यादश्वस्त्वेव स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादाग्नेयो वा ऽअनड्वानग्निरु सर्व्वेषां पाप्मना मपहन्ता * ॥ १६ ॥

अथातोऽधिरोहणस्यैव † । तꣳ हैके पुरस्तात् प्रत्यञ्च मधिरोहन्ति पश्चाद्वा प्राञ्चं न तथा कुर्यात् पशुरेष यदग्निर्यो वै पशुं पुरस्तात् प्रत्यञ्च मधिरोहति विषाणाभ्यां तꣳ हन्त्यथ यः पश्चात् प्राञ्चं पद्भ्यां त मात्मनैवैन मारोहेद्यं वा ऽआत्मना पशुमारोहन्ति स पारयति ‡ स न हिनस्त्युत्तरतो यꣳ हि कञ्च पशुमारोहन्त्युत्तरत एवैन मारोहन्त्यारुह्याग्नि मौत्तरवेदिकं कर्म्म कृत्वात्मन्नग्निं गृह्णीते ऽआत्मन्नग्निं गृहीत्वा सत्यꣳ साम गायति पुष्करपर्णं मुपदधाति तस्यातः § ॥ १७ ॥

अथैतꣳ सायं भृतेऽश्वं परिणयन्ति । एतद्

* 'मपहन्ता'—इति ग, घ ।

† 'अथातोऽधिरोहणस्यैव'—इति ग, घ ।

‡ 'मारयति'—इति क ।

§ 'तस्यातः'—इति क । 'तस्यातः'—इति ग, घ ।

दिवा अबिभयुर्यद्वै न इम मिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्मा ऽएतं व्वज्र मभिगोप्तार मकुर्व्वन्नमु मेवादित्य मसौ वा ऽआदित्य एषोऽश्वस्तथैवास्मा ऽअय मेतं व्वज्र मभिगोप्तारं करोति ॥ १८ ॥

तं वा ऽउपास्तमय मादित्यस्य परिणयति । एष वा ऽअस्य प्रत्यक्षं दिवा गोप्ता भवति रात्रि सा च यान्यु वै रक्षाᳬसि रात्र्या एवास्मा ऽएतं व्वज्र मभिगोप्तारं करोति सर्व्वतः परिणयति सर्व्वत एवास्मा ऽएतं व्वज्र मभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिवृत मेवास्मा ऽएतं व्वज्र मभिगोप्तारं करोत्यथैन मुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुरथ स पुनर्व्विपल्ययते तस्योपरि बन्धुः ॥ १९ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [३. २.]॥

एव माहवनीयदेशस्य संस्कारसमनन्तरं कर्त्तव्यं प्राकृतं प्रयोगजात मनुक्रामयितुं प्रागुक्तयोः * आग्निकलौकिकयोः कर्मणोर्व्यतिषङ्गं दर्शयति †— "आप्यानवतीभ्या मित्यादिना। 'प्रत्येत्य' उत्तरवेदिदेशात् प्राग्वंशम् प्रत्यागत्येत्यर्थः। अन्यत्

* 'प्रागुक्त'—इति ङ, छ, ज ।

† 'दर्शयितुं'—इति ङ, छ, ज ।

निगदव्याख्यातम्। प्रथमं प्रवर्ग्योपसदन्तं कर्त्तव्य मिति समुदायार्थः ॥

अनन्तर माग्निकस्य कर्मणः प्रवेशं दर्शयति— "अथै मिति। 'अथ'-शब्दः प्रथमोपसदानन्तर्ये। आनडुहे लोहि 'चर्मणि' 'एतां' प्रथमां 'चितिं' प्रथमचित्यर्थ मिष्टकासमूहं 'सम शमयन्ति' सम्यग् घृतावोक्षणेन तप्ताना मिष्टकानां शम कुर्युरित्यर्थः। तस्य चर्माधिकरणतां स्तौति— "तद्यच्चर्मणि च वै रूप मिति। चर्मसम्बन्धिनां * लोम्नां नानावर्णोपेतत्वा असृगादीना मान्तरधातूनां त्वचाच्छादने सति रूपकरणे चर्मणो रूपात्मकता, अतश्च तस्मिन्निष्टकानिधानं सर्व रूपाणां प्राप्तिः सम्पद्यत इत्यर्थः। तच्च लोमप्रदेशे कर्त्त मिति विधाय स्तौति— "लोमत इति। 'चितिं समव मयन्ति'-इत्यनुषङ्गः। लौहित्यगुणं चर्मणो विधाय स्तौति †— "रोहित इति। एतत् सर्वं कात्यायनेनापि सूत्रितम्— "आतिथ्यशेषाद्योपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तःपात्य पुरस्तादिष्टकाः करोति प्रथमचितेरिति ‡। लोहितवर्ण लोमसु मूलमध्याग्रभेदेन शुक्लादीनि सर्वाणि रूपाणि दृश्य इत्यर्थः ॥

चर्मणोऽनडुद्विकारतां विधाय स्तौति— "आनडुह इति। अनः वहतीत्यनड्वान्, तथाविधस्य बलीवर्दस्याग्निरूपत्वं प्रागाम्नात

* 'चर्मसम्बद्धानां'-इति ङ।

† लोमत इत्यारभ्य स्तौतीत्येतदन्तः पाठो न दृश्यते ङ-पुस्तकादन्यत्र।

‡ का० श्रौ० सू० १७. ३. १७।

—"अग्निदग्ध मिव वा अस्य वर्हं भवतीति *। "अग्निरूपाणा मिति। चित्यस्याग्नेः सम्बन्धीनि यानि रूपाणि, तेषां मध्येऽनडुहाप्येकं रूपम्; अतस्तत्सम्बन्धिनश्चर्मण आस्तरणेन तेषा मग्निरूपाणा मुक्तवच्यमाणानां कार्त्स्न्येन प्राप्त्यर्थं सम्पद्यत इत्यर्थः। स्तरणे प्रकारविशेषं विधत्ते— "प्राचीनग्रीवे इति। प्राचीना प्रागायता ग्रीवा यस्य तत्तथोक्तम्, एतच्च विधेयविशेषणम्, चर्मणः प्राचीनग्रीवता यथा भवति तथा स्तृणीयादित्यर्थः। "तद्धि-देवत्रेति। 'तद्धि' प्राग्दिक्सम्बन्धित्वं 'देवत्रा' देवेषु योग्यम्; तस्याः दिशो देवैरात्मीयत्वेन स्वीकृतत्वात्। अत एव हि तैत्तिरीयके श्रूयते—"देवमनुष्या दिशो व्यभजन्त प्राचीं देवा इति †। देवत्रेति "देवमनुष्येत्यादिना ‡ सप्तम्यर्थे त्रा-प्रत्ययः ॥ १ ॥

उदीरितलक्षणस्य चर्मणो देशविशेषे स्तरणं विधत्ते— "तदग्रेणेति। 'गार्हपत्य मग्रेण' गार्हपत्यचितेरदूरेण पूर्वभागे महावेदिमध्ये 'तत्' चर्म उदीरितविशेषणविशिष्टम् 'उपस्तृणाति'। 'तत्' 'तत्र' 'एतां' प्रथमां 'चितिं' प्रथमचितेः पर्याप्तमिष्टकासङ्घं § 'समवशमयन्ति' संशान्तोष्णांश ‖ कुर्युः। आज्येन प्रोक्षणं विधत्ते— "अथेति। औष्ण्यसंशमनानन्तरंतां चितिं माज्येन 'प्रोक्षति'

* पुरस्तात् ( ३६ पृ० ) १. १. २. ६ द्रष्टव्यम्।
† तै० सं० ६. १. १. १।
‡ पा० सू० ५. ४. ५६।
§ 'सङ्घातं'—इति ज-पाठः।
‖ 'सोष्णांत्योष्णां'—इति ङ-पाठः, वेबरदृष्टश्च।

२७

प्रकर्षेण सिञ्चति *। तदेतदनूद्य स्तौति— "तद्यदिति। तस्मिन् प्रोक्षणे द्रव्यं विधत्ते— "आज्येनेति। प्रोक्षतीत्यनुषङ्गः। "तद्धि शुद्ध मिति। 'तत्' खल्वाज्यं शुद्धम्; "तेजो वै घृत मित्यादि श्रुत्या † तस्य तेजोरूपत्वप्रतिपादनात् पुरोडाशादिहविःशुद्धिहेतुत्वाच्च। अत एव 'मेध्यं' मेधार्हम्। 'अथो' अपि च 'अनध्यारोहाय' अध्यारोहण मतिक्रमणम्, आज्येन प्रोक्षण मनतिक्रमणाय श्रैष्ठ्याय सम्पद्यते। एतदेव दर्शयति— "न ह्येति। इष्टकाभ्योऽन्यत् चरुपुरोडाशादिकं कि मपि हविर्न हि आज्यकरणकेन प्रोक्षणेन संस्क्रियते; उदकेनैव हि तस्य प्रोक्षणम्; अब्विलक्षणेन तेजोरूपेणाज्येनेष्टकानां प्रोक्षणम्, किं पादसंस्पर्शविरहरूपानध्यारोहणाय भवतीत्यर्थः। प्रोक्षणस्य मन्त्रकत्वं विधाय स्तौति— "तूष्णी मिति। "अनिरुक्तं इत्यादि गतम् ‡। न हि अन्यत्र तूष्णीं प्रोक्षण मस्ति, अतस्तल्लक्षणेनेष्टकाप्रोक्षणस्य सर्वात्मकानिरुक्तत्वसम्पादनं तस्य चितेरग्रेरनतिक्रमणीयत्वाय कल्प्यत इत्यर्थः॥ २॥

अथैतत् प्रोक्षण मनूद्य हविष्ट्वसम्पादनद्वारा स्तौति— "यद्वेति। "हविर्वा इत्यादि यत्, तदिष्टकारूपं हविः खलु हविर्हि देवानां तृप्तिकरम्; अतस्तदेतदिष्टकारूपं हविः आज्यप्रोक्षणं 'अभिघारयति' अभितो घृतधारया सिञ्चति। तस्य प्रयोजन माह —"यद्वा इति। 'यत्' खलु पुरोडाशादिकं 'हविः' अभितः सर्व

* का० श्रौ० सू० १७. ३. २० क।
† तै० सं० २. २. ६. ७।
‡ पुरस्तात् १२४ पृ० ४पं० ( ७. २. १. ३ ) द्रष्टव्यम्।

आज्येन 'अक्तं' सिक्तं 'यत्' च 'अभिघारितम्' उपरि घृतधारया संस्कृतम्, 'तत्' 'जुष्टं' देवैः सेवितं योग्यम्, अत एव 'तत्' 'मेध्यम्' यज्ञार्हम्। आज्यकरणकत्व मनूद्य स्तौति—"आज्येनेति। हविषां पाकसमये सुस्मृतत्त्वे सति आज्येन खल्वभिघारणं क्रियते, अतोऽत्राप्याज्येन प्रोक्षणं युक्त मिति। अमन्त्रकत्वता मनूद्य स्तौति —"तूष्णी मिति। आज्यप्रोक्षणे करणविशेषं विधाय स्तौति—"दर्भैरिति। दर्भैः करणभूतैराज्याभ्यक्तैस्तत् प्रोक्षणं कर्त्तव्य मित्यर्थः। "ते हि शुद्धा इति। "ता हैता अनापूयिता आपो यद्दर्भा इति * श्रुतेस्तेषां शुद्धत्वम्। तत्राप्यग्रभागैः कर्त्तव्य मिति विधायोपपादयति— "अग्रैरिति। "अग्रं हीति। दर्भेषु ह्यग्रभागो देवानां सम्बन्धी; अत एवान्यत्राम्नातम्— "यत् परुषि दिनं तद्देवानां, यदन्तरा तन्मनुष्याणां, यत् समूलं तत् पितॄणा मिति † ॥ ३ ॥

प्रथमचितिप्रोक्षणसमये द्वितीयतृतीयादिचित्यर्थानां मिष्टकानां प्रोक्षणं विधित्सन् ‡ ब्रह्मवादिनां प्रश्न मवतारयति—"तदाहु रिति। प्रथमा मेवेत्येवकारेण प्रोक्षणस्यान्ययोगव्यावृत्तिः सूच्यते। एवं प्रथमचितेरेव प्रोक्षणात् सप्तचित्यात्मक एषोऽग्निरस्य यजमानस्य कथं प्रोक्षितो भवति? न ह्येकदेशप्रोक्षणे कृत्स्नोऽग्निः प्रोक्षणसंस्कारसंस्कृतो भवतीत्यर्थः; तथा प्रागुक्तानडुच्चर्मणि द्वितीयादिचितीनां प्रणयनं कथम्? अस्व-

* १ का० १ प्र० ३ ब्रा० ५ क० (१भा० ६० पृ०) द्रष्टव्यम्।

† तै० ब्रा० १. ६. ८. ६, ७।

‡ 'विधित्सुः'—इति च-पाठः।

सहितं प्रणयनञ्च कथं सिध्यति ? इति त्रयः प्रश्नाः। अत्रोत्तर माह— "यद्वैवात्रेति। 'अत्र' अस्मिन् समये 'सर्वासां चितीनां सम्बन्धिनोः 'इष्टकाः' आज्येन दर्भाग्रैः 'प्रोक्षति' इति यदस्ति 'एवम्' एव अनेन प्रकारेणैव खलु 'अस्य' यजमानस्य 'एषः सर्वः सप्तचितिकः 'अग्निः' 'प्रोक्षितो भवति'। एव मेव चर्माकरणकप्रणयन मन्त्रसहितप्रणयनं चास्मादेव प्रोक्षणात् सिध्यतीत्यर्थः। अथ चर्मण्यवस्थितानां प्रथमचित्यर्थाना मिष्टकानामुद्ग्रहणं विधत्ते— "उद्यच्छन्तीति। चर्मणः सकाशादिष्टका उद्गृह्णन्ति यजमानपरिचारकाः ॥ ४ ॥

अथाहवनीयदेशं प्रति निनयनं विधित्सुस्तदर्थं होतारमुद्दिश्याध्वर्योः सम्प्रेषवचनं विधत्ते— "अथाहेति। "अग्निभ्यः प्रक्रियमाणेभ्योऽनुब्रूहि"–इति सम्प्रेष मध्वर्युर्ब्रूयात्। बहुवचनान्तेनाग्निशब्देनाग्न्यवयवाश्चितयो विवक्षिताः *। आहवनीयदेशं प्रति प्राचीनं क्रियमाणेभ्य इष्टकारूपेभ्योऽग्न्यवयवेभ्यः "हे होतरनुब्रूहि"–इति प्रैषार्थः †। तच्चानुवचनं होतुराश्वलायनेन दर्शितम्— "प्रेषितः पुरीष्यसञ्चितयेऽन्वाहेति प्रक्रम्य पुरीष्यासो अग्नय इति ‡ त्रिरुपांशु सप्रणवा मिति। एतच्चाग्रे एकीयमतत्वेनोपन्यस्य पश्चान्तर मप्याम्नास्यते— "आग्नेयीरन्वाहेति § सम्प्रेषानन्तरम् प्रथमचित्यर्थाना मिष्टकानां पूर्वस्यां दिशि हा

* का० श्रौ० सू० १७. ३. २१।

† 'सम्प्रैषार्थः'—इति च-पाठः।

‡ वा० सं १२. ५०।

§ पुरस्तादिहैव २०३ पृ० ४ पं० द्रष्टव्यम्।

विधित्सुस्तदाख्यायिकया स्तौति— "एतद्वै देवानिति। 'एतद्' एतस्मिन् समये 'रक्षांसि' रक्षोरूपाः 'नाष्ट्राः' नाशकारिण्यः प्रजाः 'देवान्' 'अजिघांसन्' हन्तु मैच्छन्। कथम्भूतान् ? 'प्रेष्यतः' प्राचीन माहवनीयं देशं गन्तु मुद्युक्तान्। 'एतम्' अग्निचयनात्मकं 'यज्ञं' 'तंस्यमानान्' विस्तारयिष्यमाणान् *। जिघांसूनामभिप्राय माह – "न यक्ष्यध्व इत्यादि। हे देवाः! यूयं न 'यक्ष्यध्वे' यागं न करिष्यथ, तथा 'यज्ञं' 'न तंस्यध्वे' न विस्तारयिष्यथ † 'इति' अनेनाभिप्रायेण एवं दृष्टाभिप्रायेभ्यः 'तेभ्यः' रक्षोभ्यः 'एतान्' चितिरूपान् 'अग्नीन्' 'एताः' तदवयवभूताः 'इष्टकाः', द्वितीयाबहुवचन मेतत्, 'क्षुरपवीन्' क्षुरवत्तीक्ष्णधारोपेतान् वज्रान् 'कृत्वा' 'प्राहरन्' पूर्वादिदिगवस्थितानि तानि रक्षांसि लक्षीकृत्य प्रहृतवन्तः। 'तैः' इष्टकारूपैर्वज्रैः 'एनान्' असुरान् 'अस्तृण्वत' अहिंसन्। 'तान्' 'स्तृत्वा', 'अभये' भयरहिते 'अनाष्ट्रे' नाशरहिते ‡ 'एतं यज्ञम्' 'अतन्वत' विस्तारितवन्तः ॥ ५ ॥

एव माख्यायिकया इष्टकाहरणस्य रक्षोनिरसनहेतुता मुक्त्वा प्रकृते योजयति— "तद्वा एतदिति। 'तत्' खलु 'एतद्' देवैः कृत मिष्टकानां प्रहरण मत्र 'क्रियते' यजमानैरनुष्ठीयते। किं पुनस्तदेतदित्याह— "यद्देवा इति। दैवैरेव रक्षसां निरस्तत्वादिदानीन्तनयजमानकर्तृक मिष्टकानां प्रहरणं केवलं तदनुकरणार्थ मित्याह— "इदं न्वित्यादिना। 'इदं नु' इदानीं

* 'विस्तरिष्यमाणान्'—इति च-पाठः।

† 'विस्तारयथ'—इति च-पाठः।

‡ 'नाशकरहिते'—इति क-पाठः।

खलु यज्ञविरोधीनि 'तानि रक्षांसि' 'देवैरेव' 'अपहतानि'* बाधितानि। अतो 'यद्' 'देवाः 'पूर्वम् अकुर्वन् 'तत्' इदानी मह्य मपि 'करवाणीति' तदनुकरण मेवेदानीन्तनेष्टकाप्रहरण प्रयोजन मित्यर्थः ॥

निरस्तसजातीनां रक्षसां पाप्मनाञ्च विद्यमानत्वात्तन्निरस हेतुत्व मपि सम्भवतीति पक्षान्तर माह— "अथो यदेवेति पक्षान्तरद्योतकोऽथोशब्दः। 'यदेव रक्षो यः पाप्मा' इति जातावेकवचनम्; "तेभ्य इति प्रतिनिर्देशबहुत्वं श्रुतत्वात् "तेभ्य एतानित्यादि, पूर्ववत् योज्यम्।

अस्माच्चार्थवादादिष्टकाः पुरस्ताद्धरेदिति विधिरुन्नेतव्यः † ॥ ६

स प्रैषं व्याचष्टे— "तद्यदग्निभ्य इति। ननु एक चित्योऽग्निः, कथ मस्य बहुत्व मित्याशङ्क्याह— "बहवो हीति सप्तचित्यभिप्रायेण बहुवचनम्। तासा मग्न्येकदेशत्वादग्निशब्द भिधेयता ॥

"अथ यत् प्रक्रियमाणेभ्यः"–इति। पद मनूद्य निर्वक्ति "प्र हीति। 'हि' यस्मादध्वर्युरिमा इष्टकाः 'प्रहरति' पुरस्ताद् हवनीयदेशं प्रापयति, अतः प्राचीनं क्रियन्त इति प्रक्रिय माणास्तेऽग्नय उच्यन्त इत्यर्थः ॥ ७ ॥

तत्र होत्रानुवक्तव्या मृच मेकीयमतेनोपन्यस्य व्याचष्टे— " हैक इति ‡। 'तत्' तत्र खलु 'एके' केचन ऋक्शाखाध्यायि

* 'उपहतानि'–इति च बहुमूलपुस्तकपाठः।

† का० श्रौ० सू० १७. ३. २३।

‡ का० श्रौ० सू० १७. ३. २४।

"पुरीष्यासो अग्नय इत्येता मृच मन्वाहुः * , तत्र पुरीषशब्दस्य पशुपर्यायत्वात् पुरीष्यास इत्यस्य पशव्यास इति व्याख्यानम् ; पशुभ्यो हिता इत्यर्थः । "प्रावणेभिरिति । प्र शब्दोपेतं पदं सूचकं रूप मित्यर्थः ॥

एतदेकीयं मतं प्रतिषिध्य स्वमत माह— "न तथा कुर्यादिति । 'आग्नेयीः' अग्निदेवताकाः , 'कामवतीः' कामशब्दोपेताः , 'गायत्रीः' गायत्रीच्छन्दस्का एव ऋचः 'अनुब्रूयात् । काः पुनस्ता इति ता आह— "आ ते वत्स इत्यादिना † ॥ ८ ॥

आग्नेयीत्यादिधर्मानवयुत्यानूद्य स्तौति— "आग्नेयीरन्वाहेति । देवतारूपेणाग्निना तत्सम्बन्धिनां सर्वेषां रूपाणा मुपाप्तिर्भवतीत्यर्थः । तथा तासा मृचां कामशब्दोपेतत्वात् सर्वकामोपाप्तिरपि भवति । "रेतोभूतं सिञ्चतीति । अस्या मवस्थायां रेतःसंस्तुतानां सिकतानां निवपनात् रेतोरूपापन्नः खल्वयं चित्योऽग्निस्तादृशं 'सिञ्चति' अङ्गप्रत्यङ्गयुक्तं संस्करोतीत्यर्थः । ऋचां त्रित्व मनूद्य स्तौति— "तिस्र इति । निगदसिद्ध मेतत् । "ताः सप्तेत्यादि । 'ताः' तिस्र ऋचः 'सप्त' सङ्ख्याकाः 'सम्पद्यन्ते' । सम्पत्तिप्रकार माह— "सहेति । 'त्रिः' त्रिवार मुत्ताभ्या माद्योत्तमाभ्यां 'सह' 'सप्त' सङ्ख्या सम्पद्यत इत्यर्थः । "सप्तर्त्तवः संवत्सर इति । वसन्ताद्याः षट् , संसर्प्पांहस्पतिलक्षणः सप्तम ऋतुः ‡ ॥

* ऋ० सं० ३. २२. ४; वा० सं० १२, ५० ।

† वा० सं० १२. ११५, ११६, ११७ ।

‡ "संसर्पोऽस्यंहस्पत्याय त्वा"—इति तै० सं० १. ४. १४. १ ।

अनुवचने उपांशुस्वरं विधाय स्तौति— "उपांश्वन्वाहेति। यथा पार्श्वस्था जना न शृण्वन्ति, तथानुब्रूयादित्यर्थः। 'अत्र' अस्मिन् समये रेतोरूपः खलु 'यज्ञः', रेतःसेचनस्योपांशुत्वं परैरज्ञायमानतयाकर्त्तव्यत्वं लोके प्रसिद्धम्; तस्मादनुवचन मुपांशु कर्त्तव्यमित्यर्थः। अनुवचनसमये होतुरनुगमनं विधत्ते— "अनुब्रुवन्नेतीति। अनुवचनं कुर्वन् होता स्वय मपीष्टकाः 'अन्वेति' अनुगच्छति। सर्वेषु छन्दःसु गायत्र्या अन्तर्भावात्तदन्तर्भूतैः 'छन्दोभिरेव' 'एतत्' एतेनानुगमनेन 'यज्ञं' 'पश्चात्' पृष्ठतः 'अभिरक्षन्' अभितः 'पश्चात्' सर्वतो रक्षःप्रभृतिभ्यो गोपायन् 'एति' ॥ ८॥

इष्टकाहरणसमये श्वेतस्याश्वस्य पुरतो नयनं विधत्ते— "अथाश्व मिति *। अश्वस्यादित्यरूपवज्रात्मकत्त्वं कथयन् तस्य पुरस्तान्नयनं यज्ञविघातकरक्षोनिर्हरणहेतुत्वेन स्तौति— "एतद्वा इत्यादिना। "यद्वै न इति। 'नः' अस्मानित्यर्थः। "असौ वा आदित्य एषोऽश्व इति। विड्रूपस्य प्रजापतेश्चन्द्रसूर्यौ हि चक्षुषी, अश्वश्च तदीयाच्चक्षुष उत्पन्नः। तथा च श्रूयते— "प्रजापतेरक्ष्यश्वयत् तत्परापतत् ततोऽश्वः समभवदिति †। अत एव तैत्तिरीयेऽपि श्रूयते— "अमु मादित्य मश्वं श्वेतं भूतं

---

"संसर्पोऽस्यंहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुः"—इति तद्ब्राह्मणम्। तै० सं ६. ५. ३. १०। ऋ० सं० १. २५. ८। य० वा० सं० २२. ३०, ३१। "असङ्क्रान्ति-द्विसङ्क्रान्तौ संसर्पांहस्पती समौ"—इति च नारदसंहितायाम् (ज्यो०)।

* का० श्रौ० सू० १७. ३. २० ख।

† तै० सं० ५. ३. १२. १।

दक्षिणा मनयन्निति। "स्वस्ति समाश्नवतेति। 'स्वस्ति' अविनाशरूपं क्षेमं सम्यगाप्नुवन्नित्यर्थः *। अन्यद् व्याख्यात-प्रायम्। अग्निक्षेत्रसमीपगमनं विधत्ते— "आगच्छन्त्यग्नि मिति। अश्वप्रमुखास्ते ऋत्विग्यजमाना इष्टकाभिः सहाग्निसमीप मागच्छेयुः, आगत्य च अग्निपुच्छस्य दक्षिणभागे चर्मणा-वृतां 'चितिम्' 'उपनिदधति' चित्यर्थं मानीता इष्टकाः स्थाप-यन्तीत्यर्थः †॥ १०॥

"त मुत्तरार्द्धेनेति। तस्याग्निपुच्छस्योत्तरभागेन परिश्रिदाख्याः शर्कराः 'अन्तरेण' परिश्रिता मग्नेश्च मध्यप्रदेशे 'प्राञ्चं' प्राङ्मुखं 'नयन्ति'। 'तत्' तेन 'प्राच्ये' षष्ठ्यर्थे चतुर्थी। प्राचीदिक्सम्बन्धि 'पाप्मानम्' आदित्यात्मकाश्वलक्षणेन वज्रेण 'अपघ्नन्ति' हिनस्ति। पुनः 'तम्' अश्वं पूर्वस्यां दिशि अग्नेः परिश्रितां च मध्ये 'दक्षिणा' दक्षिणतो निहितमुख मित्यर्थः। "दक्षिणादाच्" ‡। गत मन्यत्। "तं प्रत्यञ्च मित्यादावेवं योज्यम्। एवं चतसृषु दिक्ष्वाक्रामणेन 'सर्वाभ्य एव दिग्भ्यः' 'रक्षांसि' विनाश्यानन्तरम् 'एनम्' अश्वम् 'उदञ्चम्प्राञ्च' प्रागुदङ्मुख मित्यर्थः। 'प्रसृजति' विमुञ्चति। 'तस्य' प्रागुदक्त्वस्य स्तावको वाक्यशेषः प्रागाम्नात इत्यति-दिशति— "तस्योक्त इति। एवं हि प्रागाम्नातम्— "एषा ह्युभयेषां देवमनुष्याणां दिग् यदुदीची-प्राचीत्यादि § ॥ ११॥

तस्याश्वस्य प्रत्यङ्मुखनयनसमये चितेरवघ्रापणं विधत्ते— "तं

* 'सम्यगाप्नुवन्तीत्यर्थः'— इति च-पाठः।

† का० श्रौ० सू० १७. ३. २२।

‡ पा० सू० ५. ३. ३६। § ६का० ४प्र० ४ब्रा० ३क०।

प्रत्यञ्च मिति*। पुच्छस्य दक्षिणतो निहिताम् 'एतां चितिं' 'प्रत्यङ्' प्रत्यङ्मुखं 'यन्तं' गच्छन्तं 'तम्' अश्वम् 'अवघ्रापयति' यथा सोऽश्व इष्टकां स्थिति मवजिघ्रति, तथा तं प्रेरयेदित्यर्थः। "घ्रा गन्धोपादाने"† –इत्यस्माण्णिचि "अर्त्तिह्रीत्यादिना‡ पुक्। तदेतदिष्टका मादित्येऽवघ्रापणं प्रजासु प्राणप्रतिष्ठापनहेतुत्त्वेन स्तौति "असौ वा आदित्य इत्यादिना। अश्वस्यादित्यात्मकत्व मुक्तम्§। 'इमाः' परिदृश्यमाना देवतिर्यङ्मनुष्यादिरूपाः 'सर्वाः प्रजा' इष्टक्प्रजारूपाः 'इष्टकाः' बहुत्वसाम्यात्। "असावेवेत्यादि 'तत्' तेनाश्वकर्तृकेष्टकावघ्रापणेन 'असौ' द्युलोकस्थ आदित्य 'एव' 'इमाः प्रजाः' प्राणात्मकैः स्वरश्मिभिः 'अवजिघ्रति' अवघ्राणं करोति। तस्मादेव कारणात् 'एतद्' इदानीं 'ह' जनः 'अस्मिन्' लब्धात्मको भवामि 'इति' 'मन्यते' स्वात्मान मवगच्छति। "प्रत्यङ् ह्येवैष इति। प्रत्यङ्मुख एव 'एष' सूर्यो 'यन्' गच्छन् 'इमाः सर्वाः प्रजाः' स्वरश्मिभिः 'अभिजिघ्रति'॥ 'हि' यस्मादेवं प्रत्यङ्मुखेन गच्छता अश्वेन चितेरवघ्रापणं युक्त मित्यर्थः॥ १२॥

अथैतदवघ्रापणं लोकत्रयसमावयने हेतुत्वेन स्तौति–"... वेत्यादिना। याः 'एताः' उपधास्यमानास्तिस्रः स्वयमा...

---

* का० श्रौ० सू० १७. ३. २६।
† धा० भ्वा० प० ६२६।
‡ पा० सू० ७. ३. ३६।
§ पुरस्तादिहैव २१६ पृ० १३ पं० द्रष्टव्यम्।
‖ 'अभिजिघ्रति'—इति सर्वमूलपुस्तकसम्मतः पाठः।

ख्या: 'शर्करा:' क्षुद्रपाषाणा: पृथिव्यादिलोकत्रयात्मिकास्ता: । तत्' तथा सति अश्वेन 'अवघ्रापयति' इति 'यद्' अस्ति ; 'तत्' तेन 'असावादित्य एव' 'इमान्' पृथिव्यादीन् 'लोकान्' स्वरम्न्यात्मके * 'सूत्रे' मणिवत् 'समावयते' सम्यक् प्रोतान् करोति । "वेञ् तन्तुसन्ताने"—इति † धातु: । यदेतत् सूत्रं, 'तस्य' प्रतिपादको वाक्यशेष उपरिष्टादाम्नास्यत इत्यर्थ: ॥ १३ ॥

अथैतदेवाश्वकर्तृक मवघ्रापण मनूद्य अश्वलक्षणेनैव प्रजापतिना रूपेण निलीयमानस्याग्नेश्चैतस्य पुत्रलाभो नान्येनेत्याख्यायिकया स्तौति— "यद्वैवेत्यादिना ‡। "स्वाय पित्र इति । ज्ञात्याख्यायां वर्त्तमानत्वादस्य स्व-शब्दस्य सर्वनामसञ्ज्ञा पर्युदस्ता "स्व मज्ञातिधनाख्याया मिति §; अत: सर्वनामकार्यं न क्रियते । "त मश्व: शुक्ल इत्यादि । इत्थं देवैरभ्यर्थित: प्रजापति: 'शुक्ल:' शुक्लवर्ण: 'अश्वो भूत्वा' स्वपुत्रं अप्सु निलीनं तम् अग्निम् 'अन्वैच्छत्' अन्विष्टवान् । अन्विष्टं 'तम्' अग्निम् 'अद्भ्य:' सकाशात् 'उपोदासृप्तम्' उपनिष्क्रान्तम् पद्मिनीपत्रे स्थितं 'विवेद' लेभे । 'तम्' 'अभि'-गम्य 'अवेचाञ्चक्रे' ईक्षितवान् । 'स:' खल्वग्नि: 'एनम्' अश्वरूपिणं प्रजापतिम् 'उदुवोष' उत्पत्य ददाह । "उष दाहे ॥"—इत्यस्माल्लिट् । एवं यस्मादुवोष, 'तस्मात्'

* इह 'स्वरनृम्यात्मके'—इति च-पाठ:, 'स्वरज्जिम्यात्मके'—इति क-पाठ: । अन्यत्र ग्रन्थाभाव: ।

† धा० भ्वा० उ० १००७ ।

‡ का० श्रौ० सू० १७. ३. २६ ।

§ पा० सू० १. १ ३५ ।

‖ धा० भ्वा० प० ६८८ ।

कारणात् शुक्लवर्णः 'अश्वः' 'उदुष्ट मुख इव' उत्क्षिप्तमुख इव लोके दृश्यते। 'अथो' खलु तस्मादेवाग्निदाहात् सोऽश्वो 'दुरक्ष- भावुकः' दुष्टे अक्षिणी यस्यासौ दुरक्षः। "बहुव्रीहौ सक्थ्य- क्ष्णो- रिति * षच्-समासान्तः। दुष्टाक्षिभ्यां युक्तो भवितुं शील- वान् भवतीत्यर्थः। 'तम्' अश्वरूपिण मेव प्रजापतिं 'ऋत्वे- आर्त्तिं † गमयित्त्वेव, 'हिंसित्त्वेव' हिंसनं कृत्वेव। 'इव'-श- वाक्यालङ्कारे, अर्त्तिहिंसयोरपारमार्थ्यद्योतको वा; न ह्य- सम्बन्धिहिंसादिना परमार्थतः प्रजापतेर्हिंसा भवतीत्यभिप्राय- एव मश्वं दाहेन हिंसित्वा पश्चान्मदीयः प्रजापतिरेवाय म- रूपेण स्थित इति 'मेने' ज्ञातवान्। अथ च भीतः सन् 'त- अश्वरूपिणं प्रजापतिम् 'उवाच' हे प्रजापते! 'तुभ्यं वरम्' अभि- लषित मर्थं 'ददामि' प्रयच्छामीति॥ १४॥

"स होवाचेति। 'सः' खलु 'उवाच' प्रजापतिः। 'अने- अश्वेन मदीयरूपेण 'यः' यजमानः 'त्वा' त्वाम् 'अन्विच्छात्'। इ- आडागमः‡। 'सः' यजमानस्त्वां 'विन्दादेव' लभेतेव। एतं वर- वृणे इत्यर्थः। "स यो हैन मित्यादिना आख्यायिकासिद्धस्यार्थ- प्रकृते योजनम्। 'एनम्' अग्निम् 'एतेन' अश्वेन 'रूपेण' 'विन्दा- लभ्वेत्यर्थः। स्पष्ट मन्यत्॥ १५॥

तस्याश्वस्य वर्णनियमं विधाय स्तौति—"स शुक्लः स्यादिति §

---

* पा० सू० ५. ४. ११३।

† 'अर्त्तिं'—इति जातिरिक्तेषु पुस्तकेषु पाठः।

‡ पा० सू० ३. ४. ९४।

§ का० श्रौ० सू० १७. ३. २० ग।

'तत्' खलु शौक्लम् 'एतस्य' सूर्यस्य 'रूपम्', 'य एषः' परिदृश्यमानः सन् अन्तरिक्षे रश्मिभिः 'तपति', अतस्तत्सारूप्याय शुक्लवर्ण एवाश्वो नेतव्य इत्यर्थः। तदसम्भवे वर्णान्तरविशिष्टोऽपि स्यादित्याह— "यदि शुक्ल मिति। शुक्लाभावे लोहितश्यामादिवर्णविशिष्टो भवेत्, स च तादृशोऽश्वस्त्वेव कर्त्तव्यः।

अश्वासम्भवे पक्षान्तर मप्याह— "यद्यश्व मिति *। ननु अनडुहः सूर्यात्मकवज्ररूपत्वाभावात् पाप्महननरूपाश्वकार्यकरत्वं कथं स्यादित्याशङ्क्याह— "आग्नेयो वा इति। अग्निसमीपे निर्वापार्थं स्थितस्यानसो वहनादनड्वानग्निदेवताकः; 'अग्निः' अपि 'सर्वेषां पाप्मनां' रक्षसाञ्च 'अपहन्ता' बाधकः, अतस्तथाविधाग्निदेवताकत्वादनड्वानप्यश्ववत् रक्षांसि पाप्मनश्च विनाशयितुं शक्नोतीत्यर्थः॥ १६॥

अग्निचेत्रस्याधिरोहणे प्रकारविशेषं विधित्सुः प्रस्तौति— "अथात इति †। यतोऽध्वर्युणा आहुतिप्रदानसमयेऽग्निचेत्रस्याधिरोहण मपेक्षितम्, अतः कारणात् 'अथ' अनन्तरम् 'अधिरोहणस्यैव'। अधिरुपर्यर्थः ‡। अग्निचेत्रस्योपरि पादनिधानलक्षणं क्रमण मधिरोहणम्, तस्यैव विचारः क्रियत इति शेषः। तत्रैकीयं मत मुपन्यस्य निरस्यति— "तं हैक इति। "पुरस्तात् प्रत्यञ्च मिति। पूर्वभागे प्रतिमुख मञ्चन्त मात्माभिमुख्येन स्थित मग्निं मुखप्रदेशे 'अधिरोहन्ति'-इत्येकः पक्षः।

* का० श्रौ० सू० १७. ३. २० ग।
† का० श्रौ० सू० १७. ३. २३।
‡ निरु० १. १. ५।

"पश्चाद्वेति, पचात्तरम्। 'पश्चाद्' भागे पुच्छभागे 'प्राञ्चं' प्रकर्षेणाञ्चन्तम् अनभिमुख मग्नि मारोहन्तीत्यर्थः *। "न तथा कुर्यादिति। एतस्य पक्षद्वयस्य निषेधः। पक्षद्वयेऽपि दोष माह— "पशुरेष इति। अग्निरिति यदस्ति पशुरूपः †, 'य' खलु 'पशुं' 'पुरस्तात्' पूर्वभागे 'प्रत्यञ्चं' प्रतिमुख मञ्चन्तम् 'अधिरोहति' 'तं' पशु 'विषाणाभ्यां' शृङ्गाभ्यां 'हन्ति' ॥

'अथ' एतद्दोषपरिहाराय 'पश्चाद्' भागे 'प्राञ्चं' प्रकर्षेणाञ्चन्तम् 'तम्' अनभिमुखं सन्तं पशु मारोहति, 'तम्' आरोहन्तं पुरुषं स पशुः 'पद्भ्यां' पाश्चात्यपादाभ्या माहन्ति। यद्येवं पूर्वपश्चिमभागयोरुभयत्राप्यारोहणे दोषः, कथं तर्हि तदारोहणं कर्त्तव्यमित्यत्राह— "आत्मनैवेति। शिरःप्रदेशं पादप्रदेशञ्च विहाय 'आत्मना' आत्मभागेन मध्यप्रदेशेन 'एव' 'एनम्' अध्वर्युः 'आरोहेत्'। लौकिकस्यापि पशोर्मध्यदेहेनैवारोहणं यतो दृश्यत इत्याह— "यं वा इति। 'यं' खलु 'पशुम्' अश्वादिकम् 'आत्मना' शिरःपुच्छदेशौ विहाय मध्यदेशेन 'आरोहन्ति', 'स' पशुः तान् 'पारयति' पारं गन्तव्यावधिम् प्रापयति; 'न' च 'हिनस्ति' आरूढं पुरुषं न व्यथयति। एव मग्नेरप्यधिरोहण मात्मभागे कर्त्तव्य मिति विहितम्। तत्राप्युत्तरतः कर्त्तव्य मिति विधत्ते— "उत्तरत इति। पुच्छस्योत्तरभागे उत्तरपक्षस्य च सन्धौ तदधिरोहणं कर्त्तव्यम्। लोकप्रसिद्धिरप्येवमेवेत्याह— "यं हि कञ्चेति। 'यं' 'कम्' अपि अश्वादिलक्षणं

* का० श्रौ० सू० १७.'३. २४।

† 'सम्यग्गुरूपः'—इति च-पाठः।

'पशु मारोहन्ति' लौकिकाः, 'उत्तरतः' वामभागत 'एवैन मारोहन्ति ॥

आरोहणानन्तरं प्राकृतवैकृतपदार्थाना मनुष्ठाने क्रमविशेष मनुक्रामति— "आरुह्याग्नि मिति। आरोहणानन्तरम् 'औत्तर-वेदिकम्' उत्तरवेदिसंस्काररूपं यत् कर्मजात मस्ति, तत् कृत्वे-त्यर्थः *। तच्च कात्यायनेन विशद मुक्तम्— "पशुवदुत्तरवेदि-प्रोक्षणाद्या सम्भारनिवपनात् कृत्वेति †। तदनन्तरम् 'आत्मन्' अध्वर्युः स्वात्मनि स्वकीयम् 'अग्निं' 'गृह्णीते', यथा बहि-र्वित्याग्निप्रदेशे न निष्क्रामति, तथा "मयि गृह्णामि"-इति ‡ मन्त्रजपेन § स्वात्मनि धारयेदित्यर्थः। तदुक्तं कात्यायनेन— "उत्तरवेदि मन्तरेण ‖ ०—० मयि गृह्णामीति जपतीति ¶। अग्निग्रहणानन्तरं यत् सत्यसामेति प्रसिद्धं सामवेदे ** तद्यज-मानो गायेत् †† ॥

पुष्करपर्णस्योपधानं विधत्ते— "पुष्करपर्ण मुपदधातीति ‡‡। "तस्यात इति। 'तस्य' पुष्करपर्णोपधानस्य 'अतः' अस्माद् ब्राह्मणादुत्तरस्मिन् ब्राह्मणे (३प्र० १ब्रा० ७क०) "योनिर्वै पुष्कर-पर्ण मित्यादिना वाक्यशेषेण स्तुतिः करिष्यत इत्यर्थः ॥ १७॥

---

* 'उत्तरवेदिसंस्काररूपं कर्म कृत्वेत्यर्थः'—इति ज-पाठः।

† का० श्रौ० सू० १७. ३. २६, २७।

‡ वा० सं १३. १।

§ 'मन्त्रपदेन'—इति ज-पाठः।

‖ 'मपरेण'—इति का० श्रौ० सू० वार्लिन्-मुद्रित-पाठः।

¶ का० श्रौ० सू० १७. ३. २७।

** सा० वि० ब्रा० १. १. २।

†† का० श्रौ० सू० १७ ३. २८।

‡‡ का० श्रौ० सू० १७. ४. १।

सायङ्काले कर्त्तव्यं विधत्ते— "अथैत मिति। 'अथे' पुष्करपर्णोपधानानन्तरम् 'एत मश्वं' 'साये भूते' अह्नोऽवसा जाते 'परिणयन्ति' अग्निचेत्रं परित आवर्त्तयन्ति *। "षो अन्तकर्मणि †"—इत्यस्मात् जातः सायशब्दः। अथैतदश्वस्य परिणयनं यज्ञविघातकरचोनिमित्ताद् भयाद्रचणहेतुत्वेन स्तौति— "एतद्वै देवा इति। "एतं वज्र मिति। अश्वात्मकं वज्र मित्यर्थः। 'अभिगोप्तारं' अभितः सर्वासु दिच्नु रचितारम् "अमु मेवादित्य मिति। अमुष्मिन्नाकाशे दृश्यमानम् 'आदित्य' आदित्यात्मक मश्वम्। अश्वस्य चादित्यात्मकता प्रागेवोक्ता ‡। इदानी मप्याह— "असौ वा आदित्य इति। "तथैवास्मा इति। यथा सूर्यो राचसाद्यज्ञस्याभिगोप्ता, तेनैव प्रकारेण 'अयम्' अध्वर्युः 'अस्मै' चेष्यमाणायाग्नये 'एतम्' अश्वात्मकं वज्रम् सिद्ध मन्यत्॥ १८॥

सायङ्कालेऽप्यस्तमयात् प्रागेवाश्वपरिणयनस्य कर्त्तव्यत माह— "तं वा इति। 'आदित्यस्य' 'अस्तमय मुप' अस मयस्य समीपे आदित्ये विद्यमाने सत्येवेति यावत्। "ए वा अस्येत्यादि। 'एषः' खलु आदित्यः 'अस्य' चीयमान स्याग्नेः 'दिवा' अह्नि 'प्रत्यचं गोप्ता भवति'। रात्रिं सच समवयन्ति इति 'रात्रिसाचयानि' रात्रौ सञ्चरणशीलानि खलु 'रचांसि' तादृश्या 'रात्र्या एव' सकाशात् 'अस्मै' चित्या

* का० श्रौ० सू० १७. ३. २५।

† धा० दि० प० ४१।

‡ पुरस्तादिहैव २०३ पृ० १७ पं० द्रष्टव्यम्।

पृये 'एतम्' अश्वात्मकं 'वज्रं' परोच्च मादित्यात्मकम् 'अभिगोप्तारम्' अभितो रचितारं करोति। 'परिणयति'-इति परिशब्देन सूचित मर्थं स्तोतु माविष्करोति— "सर्वत इति। 'सर्वतः' सर्वासु दिक्षु। परिणयनक्रियायाः त्रिरावृत्तिं विधाय स्तौति— "त्रिष्कृत्व इति। "त्रिवृत्त मेवास्मा इति। 'त्रिवृत्तं' त्रिगुणितम्। "अथैन मुदञ्च मित्यादि। 'अथ' त्रिष्कृत्वः परिणयनानन्तरम् 'एनम्' अश्वं प्रागुदञ्चं विसृजेत्। तस्य च स्तावको वाक्यशेषः प्राक्समाम्नात इत्यर्थः। तस्याश्वस्य पुनः प्रयोगं विधत्ते—"अथ स पुन रिति। 'सः' अश्वः पुनर् 'विपल्ययते' विपरिवर्त्तते, उपधानकाले * कर्मणोऽङ्गभावं प्रतिपद्यत इत्यर्थः। "अय पय गतौ †"-इत्यस्मात् लट्, "उपसर्गस्यायतौ"-इति लत्वम् ‡। 'तस्य' अश्वपर्यावर्त्तनस्योपरिष्टात् प्रयोजन मभिधास्यत इत्यर्थः॥ १९॥ ४ [३. २.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम्॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ ३॥

---

* 'उपचारकाले'—इति च-पाठः।

† धा० भ्वा० आ० ४७४।

‡ पा० सू० ८. २. १९।

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शर्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पाञ्चसाल्लिङ्गणार्यः *।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

॥ इति सप्तमकाण्डे द्वितीयप्रपाठकश्च समाप्तः †।

---

* अत्रत्याष्टौप्यन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः।

† एतस्मात्प्रपाठकसमाप्तिवचनादनन्तरम्— "कण्डिकाः १०५"—इति क, ख, "कण्डिकासङ्ख्या १०५"—इति ग, घ। तत्र, १ब्रा० ९क०, २ब्रा० ३०क०, ३ब्रा० ४७क०, ४ब्रा० १९क०; सङ्कलनयात्र द्वितीयप्रपाठकीयचतुर्षु ब्राह्मणेषु १०५ कण्डिकाः श्रुता इति सिद्धम्॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम् ,

अपि वा

चतुर्थाध्याये प्रथमं ब्राह्मणम् ।

॥ हरिः ॐ ॥

आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वा ऽएत मधिजनयति यादृशाद्वै जायते तादृङ्ङेव भवति स यदात्मन्नगृहीत्वाग्निं चिनुयान् मनुष्या-देव मनुष्यं जनयेन्मर्त्यान्मर्त्य मनपहतपाप्मनोऽनप-हतपाप्मन मथ यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनयत्यमृतादमृत मपहतपाप्मनो-ऽपहतपाप्मानम् ॥ १ ॥

स गृह्णाति । मयि गृह्णाम्यग्रे ऽअग्नि मिति । तदात्मन्नेवाग्रेऽग्निं गृह्णीते * रायस्पोषाय सुप्रजा-

* 'गृह्णाति'—इति ग, घ ।

स्वाय सुवीर्यायेति तदु सर्व्वा आशिष आत्म
गृह्णीते मा मु देवताः सचन्ता मिति तदु सर्व्वा
देवानात्मन् गृह्णीते तद्यत् किञ्चात्मनोऽधि ज
यिष्यन् भवति तत् सर्व्वं मात्मन् गृह्णीते स
तिष्ठान्नात्मन्नग्निं गृहीत्वानूपविश्य चिनोति प
रेष यदग्निस्तस्मात् पशुस्तिष्ठन् गर्भं धित्वान्
विश्य व्विजायते * ॥ २ ॥

अथ सत्यꣳ साम गायति। एतद्वै दे
अब्रुवन्त्सत्य मस्य मुखं करवाम ते सत्यं भविष्या
सत्यं नोऽनुवर्त्स्यति सत्यो नः स कामो भविष्य
यत् कामा एतत् करिष्यामह ऽइति ॥ ३ ॥

त ऽएतत् सत्यꣳ साम पुरस्तादगायन्। तद
सत्यं मुख मकुर्व्वंस्ते सत्य मभवन्त्सत्य मेनान
वर्त्तत सत्य एषां स कामोऽभवद्यत्कामा एत
कुर्व्वत ॥ ४ ॥

तथैवैतद्यजमानः। यत् सत्यꣳ साम पुरस्ता

---

* 'व्विजायते'—इति क, ख।

गायति तदस्य सत्यं मुखं करोति स सत्यं भवति सत्य मेन मनुवर्त्तते सत्योऽस्य स कामो भवति यत्-काम एतत् कुरुते * ॥ ५ ॥

तद्यत् तत् सत्यम् † । आप एव तदापो हि वै सत्यं तस्माद्येनापो यन्ति तत् सत्यस्य रूप मित्याहुरप एव तस्य ‡ सर्व्वस्याग्र मकुर्व्वंस्तस्मा-द्यदैवापो यन्त्यथेदꣳ सर्व्वं जायते यदिदं किञ्च § ॥ ६ ॥

अथ पुष्करपर्णं मुपदधाति । योनिर्वै पुष्कर-पर्णं योनि मेवैतदुपदधाति ॥ ७ ॥

यद्वेव पुष्करपर्णं मुपदधाति । आपो वै पुष्करं तासा मियं पर्णं यथा ह वा ऽइदं पुष्कर-पर्णं मप्स्वध्याहित मेवमिय मप्स्वध्याहिता सेयं योनि-रग्नेरियꣳ ह्यग्निरस्यै हि सर्व्वोऽग्निश्चीयत ऽइमा

* 'कुरुते'—इति ग, घ ।

† 'सत्यम्'—इति क ।

‡ 'तदस्य'—इति क, ख ।

§ 'किञ्च'—इति ग, घ ।

मेवैतदुपदधाति ता मनन्तर्हिताᳩ᳭ सत्यादुप-
दधातीमां तत् सत्ये प्रतिष्ठापयति तस्मादियᳩ᳭
सत्ये प्रतिष्ठिता तस्माद्दिय मेव सत्य मियᳩ᳭ ह्येवैषां
लोकाना मद्धातमाम् ॥ ८ ॥

अपाम्पृष्ठ मसि योनिरग्ने रिति। अपाᳩ᳭
हीयं पृष्ठं योनिर्ह्रीय मग्नेः समुद्र मभितः पिन्व-
मान मिति समुद्रो हीमा मभितः पिन्वते व्वर्द्ध-
मानो महा २॥ᳩ᳭ ऽआ च पुष्कर ऽइति व्वर्द्धमानो
महीयस्व पुष्कर ऽइत्येतद्दिवो मात्रया व्वरिम्णा
प्रथस्वेत्यनुविमार्ष्ट्यसौ वा ऽआदित्य एषोऽग्निर्नो
हैत मन्यो दिवो व्वरिमा यत्तु मर्हति द्यौर्भूत्वैनं
यच्छेत्येवैतदाह स्वराजोपदधाति स्वाराज्यᳩ᳭ ह्यपाᳩ᳭
सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः
॥ ९ ॥

अथ रुक्म मुपदधाति। असौ वा ऽआदित्य
एष रुक्म एष हीमाः सर्वाः प्रजा अतिरोचते
रोचो ह वै तᳩ᳭ रुक्म इत्याचक्षते परोऽक्षं परो-
ऽक्षकामा हि देवा अमु मेवैतदादित्य मुपदधाति

स हिरण्मयो भवति परिमण्डल एकविꣳशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाध मुपदधाति रश्मयो वा ऽएतस्य निर्बाधा अवस्ताद् वा ऽएतस्य रश्मयः ॥ १० ॥

तं पुष्करपर्णऽ उपदधाति । योनिर्वै पुष्करपर्णं योनावेवैन मेतत् प्रतिष्ठापयति ॥ ११ ॥

यद्वेव पुष्करपर्ण ऽउपदधाति । प्रतिष्ठा वै पुष्करपर्ण मियं वै पुष्करपर्ण मिय मु वै प्रतिष्ठा यो वा ऽअस्या मप्रतिष्ठितोऽपि दूरे सन्नप्रतिष्ठित एव स रश्मिभिर्वा ऽएषोऽस्यां प्रतिष्ठितोऽस्या मेवैन मेतत् प्रतिष्ठायां प्रतिष्ठापयति ॥ १२ ॥

यद्वेव पुष्कअपर्ण ऽउपदधाति *। इन्द्रो वृत्रꣳ हत्वा नास्तृषीति मन्यमानोऽपः प्राविशत्ता अब्रवीद्बिभेमि वै पुरं मे कुरुतेति स योऽपाꣳ रस आसीत्त मूर्द्ध्वꣳ समुदौहंस्ता मस्मै पुर मकुर्व्वंस्तद्यदस्मै पुर मकुर्व्वंस्तस्मात् पूष्करं पूष्करꣳ † ह वै तत् पुष्कर

* 'उपदधाति'—इति क, ख ।

† 'पुष्करं पुष्करꣳ'—इति घ-पुस्तकपाठः, दृष्टश्च डा० वेवरमहोदयेनापि ।

मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्-
द्यत् पुष्करपर्णं ऽउपदधाति य मेवास्यैत मापो रस
समुदौहन्या मस्मै पुर मकुर्व्वंस्तस्मिन्नेवैन मेतत् प्रति-
ष्ठापयति ॥ १३ ॥

ब्रह्म जज्ञानं प्रथमं पुरस्तादिति । असौ वा
ऽआदित्यो ब्रह्माहरहः पुरस्ताज्जायते वि सीमतः
सुरुचो व्वेन आवरिति मध्यं वै सीमेमे लोकाः
सुरुचो ऽसावादित्यो व्वेनो यद्वै प्रजिजनिषमाणो
ऽवेनत्तस्माद्वेनस्तानेष सीमतो मध्यतो व्विवृण्वन्-
देति स बुध्न्या उपमा अस्य व्विष्ठा इति दिशो
वा ऽअस्य बुध्न्या उपमा व्विष्ठास्ता ह्येष उपवि-
तिष्ठते सतश्च योनि मसतश्च व्विवरितीमे वै
लोकाः सतश्च योनिरसतश्च यच्च ह्यस्ति यच्च न
तदेभ्य एव लोकेभ्यो जायते तिष्टुभोपदधाति
त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्यो-
क्तो बन्धुः ॥ १४ ॥

अथ पुरुष मुपदधाति । स प्रजापतिः सो-
ऽग्निः स यजमानः स हिरण्मयो भवति ज्योति-

वै हिरण्यं ज्योतिरग्निरमृतꣳ हिरण्य ममृत मग्निः पुरुषो भवति पुरुषो हि प्रजापतिः ॥ १५ ॥

यद्वेव पुरुष मुपदधाति। प्रजापतेर्व्विस्रस्ताद्रम्या तनूर्मध्यत उदक्रामत्तस्या मेन मुत्क्रान्तायां देवा अजहुस्तं यत्र देवाः समस्कुर्व्वंस्तदस्मिन्नेताꣳ रम्यां तनूं मध्यतोऽदधुस्तस्या मस्य देवा अरमन्त तद्यदस्यैतस्याꣳ रम्यायां तन्वां देवा अरमन्त तस्माद्धिरम्यꣳ हिरम्यꣳ ह वै तद्धिरण्य मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मिन्नय मेताꣳ रम्यां तनूं मध्यतो दधाति तस्या मस्य देवा रमन्ते प्राणो वा ऽअस्य सा रम्या तनूः प्राण मेवास्मिन्नेतं मध्यतो दधाति ॥ १६ ॥

तꣳ रुक्म ऽउपदधाति। असौ वा ऽआदित्य एष रुक्मोऽथ य एष एतस्मिन् मण्डले पुरुषः स एष त मेवैतदुपदधाति ॥ १७ ॥

उत्तान मुपदधाति। एतद्वै देवा अब्रुवन् यदि वा ऽइमावर्व्वाञ्चा ऽउपधास्यामः सर्व्व मेवेदं प्रधक्ष्यतो यद्यु पराञ्चौ पराञ्चाविव तप्स्यतो यद्यु

सम्यञ्चावन्तरैवैतावेतज्ज्योतिर्भविष्यत्यथो ऽअन्योऽन्य
हिᳪसिष्यत ऽइति तेऽर्वाञ्च मन्य मुपादध
पराञ्च मन्यᳪ स एष रश्मिभिरर्वाङ् तपति रुक्म
प्राणैरेष ऊर्द्ध्वः पुरुषः प्राञ्च मुपदधाति प्राङ्
ह्येषोऽग्निश्चीयते ॥ १८ ॥

हिरण्यगर्भः समवर्त्तताग्र ऽइति । हिरण्य-
गर्भो ह्येष समवर्त्तताग्रे भूतस्य जातः पतिरे
आसीदित्येष ह्यस्य सर्व्वस्य भूतस्य जातः पति-
रेक आसीत्स दाधार पृथिवीं द्या मुतेमा मित्ये
वै दिवं च पृथिवीं च दाधार कस्मै देवा
हविषा व्विधेमेति प्रजापतिर्वै कस्तस्मै हविषा
व्विधेमेत्येतत् ॥ १९ ॥

द्रप्सश्चस्कन्द पृथिवी मनु द्या मिति । असौ
वा ऽआदित्यो द्रप्सः स दिवं च पृथिवीं च
स्कन्दतीत्यमू मितीमा मिमं च योनि मनु यश्च पूर्व्व
इतीमं च लोक ममुं चेत्येतद्यो यश्चेद मेतर्हि
चीयते यश्चादः पूर्व्व मचीयतेति समानं योनि
मनु सञ्चरन्त मिति समानᳪ ह्येष एतं योनि मनु

ऽऽस्चरति द्रप्सं जुहोम्यनु सप्त होत्रा इत्यसौ वा ऽआदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति ॥ २० ॥

द्वाभ्या मुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुपदधाति । त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २१ ॥

अथ साम गायति । एतद्वै देवा ऽएतं पुरुष मुपधाय * त मेतादृश मेवापश्यन्यथैतच्छुष्कं फलकम् † ॥ २२ ॥

तेऽब्रुवन् । उप तज्जानीत यथास्मिन् पुरुषे वीर्यं दधामेति तेऽब्रुवंश्चेतयध्व मिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथास्मिन् पुरुषे वीर्यं दधामेति ॥ २३ ॥

ते चेतयमानाः । एतत्सामापश्यंस्तदगायं-

* 'मुपदधाय'—इति क ।

† 'फलुकम्'—इति ग, 'फलुकम्'—इति घ ।

स्तदस्मिन् वीर्यं मदधुस्तथैवास्मिन्नय मेतद्दधाति पुरुं गायति पुरुषे तद्वीर्यं दधाति चित्रे गायति सर्व्वाणि हि चित्राण्यग्निस्त मुपधाय न पुरस्तात् परी यान्नेन्माय मग्निर्हिनसदिति * ॥ २४ ॥

अथ सर्पनामैरुपतिष्ठत †। ऽइमे वै लोका सर्पास्ते हानेन सर्व्वेण सर्पन्ति यदिदं किञ्च सर्व्वेण मु हैष देवाना मात्मा यदग्निस्ते देवा एत मात्मान मुपधायाबिभयुर्यद्वै न इमे लोका अनेनात्मना न सर्प्युरिति ॥ २५ ॥

त ऽएतानि सर्पनामान्यपश्यन्। तैरुपातिष्ठन् तैरस्मा ऽइमाँल्लोका ‡ नस्थापयंस्तैरनमयन्यदनमयं स्तस्मात् सर्पनामानि तथैवैतद्यजमानो यत् सर्पनामैरुपतिष्ठत ऽइमानेवास्मा ऽएतल्लोकान्स्थापयतीमाँल्लोकान्नमयति तथो हास्यैत ऽएतेनात्मना न सर्पन्ति ॥ २६ ॥

* '०र्हिनसदिति'—इति ग, घ।

† '०रुपतिष्ठते'—इति क, ख।

‡ 'ऽइमांलोका'—इति ग, घ।

यद्देव सर्पनामैरुपतिष्ठत। ऽइमे वै लोकाः सर्पा यद्धि किञ्च सर्पत्येष्वेव तल्लोकेषु सर्पति तद्यत् सर्पनामैरुपतिष्ठते यैवैषु लोकेषु नाष्ट्रा यो व्यद्वरो या शिमिदा तद्देवैतत् सर्व्वꣳ शमयति ॥ २७ ॥

नमोऽस्तु सर्पेभ्यो * ये के च पृथिवी मनु। ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नम इति य ऽएवैषु त्रिषु लोकेषु सर्पास्तेभ्य एतन्नमस्करोति ॥ २८ ॥

या इषवो यातुधानाना मिति। यातुधान-प्रेषिता हैके दशन्ति ये वा व्वनस्पतीꣳ२॥ꣳरनु † ये व्वावटेषु शेरते तेभ्यः सर्पेभ्यो नम इति ये चैव व्वनस्पतिषु सर्पा ये चावटेषु शेरते तेभ्य एतन्नमस्करोति ॥ २९ ॥

ये व्वामो रोचने दिवो। ये वा सूर्यस्य

* 'सर्पेभ्यः। ये'—इति क, ख।

† 'वनस्पतीं१॥रनु'—इति ख, 'वनस्पतींरनु'—इति ग, घ; वनस्पतीꣳ रनु'—इति च दृष्टो डा०-वेबरेण।

रश्मिषु येषा मप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नम इति यत्र-यत्रैते तद्देवैभ्य एतन्नमस्करोति नमो नम इति यज्ञो वै नमो यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् ॥ ३० ॥

त्रिभिरुपतिष्ठते। त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा ऽएतदिमांल्लोकान्स्थापयत्यथो तावतैवैतदिदᳬ सर्व्वं शमयति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वा ऽइमे लोका अथो तिष्ठन्वै व्वीर्यवत्तरः * ॥ ३१ ॥

अथैन मुपविश्याभिजुहोति †। आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः सर्व्वतः परिसर्पᳬ सर्व्वाभ्य एवैन मेतद्दिग्भ्यो ऽन्नेन प्रीणाति ॥ ३२ ॥

यद्वेवैन मभिजुहोति। एतद्वै देवा एत मा-

* 'व्वीर्यवत्तरः'—इति क।

† '०जुहोति'—इति क।

स्मान मुपधायाबिभयुर्यद्वै न इम मिह रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतान् राक्षोघ्नान् प्रतिसरा-नपश्यन् कृणुष्व पाजः प्रसितिं न पृथ्वी मिति राक्षोघ्ना वै प्रतिसरास्त ऽएतैः प्रतिसरैः सर्व्वाभ्यो दिग्भ्यो रक्षाꣳसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएत मात्मानꣳ समस्कुर्व्वत तथैवैतद्यजमान एतैः प्रति-सरैः सर्व्वाभ्यो दिग्भ्यो रक्षाꣳसि नाष्ट्रा अपहत्या-भयेऽनाष्ट्र ऽएत मात्मानꣳ संस्कुरुते ॥ ३३ ॥

आज्येन जुहोति । व्वज्रो वा ऽआज्यं व्वज्रे-णैवैतद्रक्षाꣳसि नाष्ट्रा अपहन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संव्वत्सरः संवत्सरो-ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्रक्षाꣳसि नाष्ट्रा अपहन्त्याग्नेयीभिरग्निर्वै ज्योती रक्षोहाग्नि-नैवैतद्रक्षाꣳसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्व्वज्रो वै त्रिष्टुब् वज्रेणैवैतद्रक्षाꣳसि नाष्ट्रा अपहन्ति सर्व्वतः परिसर्पꣳ सर्व्वाभ्य एवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्रा अपहन्ति ॥ ३४ ॥

पश्चादग्नेः प्राङासीनः । अथोत्तरतो * दक्षि-
णाय पुरस्तात् प्रत्यङ्ङथ जघनेन परीत्य दक्षि-
णत उदङ्ङासीनस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य
पश्चात् प्राङासीनस्तथो हास्यैतत् प्रागेव कर्म्म कृतं
भवति † ॥ ३५ ॥

अथ स्रुचा ऽउपदधाति । बाहू वै स्रुचौ बाहू
ऽएवास्मिन्नेतत् प्रतिदधाति ते यत् स्रुचौ भवतः
स्रुचौ हि बाहू ऽइद मेव कपुच्छल ‡ मयं दण्डो ह
भवतो द्वौ हीमौ बाहू पार्श्वत उपदधाति पार्श्वतो
हीमौ बाहू ॥ ३६ ॥

कार्ष्मर्यमयीं दक्षिणत उपदधाति । एतद्वै
देवा अबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षांसि
नाष्ट्रा न हन्युरिति त ऽएतं रक्षोहणं वनस्पति-
मपश्यन् कार्ष्मर्यं त ऽएतेन वनस्पतिना दक्षिणतो

---

* 'प्राङासीनोऽथोत्तरतो'—इति ग ।

† 'भवति'--इति क ।

‡ 'कपुत्सल'—इति क, ख । 'कपुत्सल'—इति, 'कपृत्सल'-
इति च पाठौ सा०-सम्मतौ दृश्ये डा०-वेबरेण ।

रक्षाꣳसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र ऽएतं यज्ञ मतन्वत तथैवैतद्यजमान एतेन व्वनस्पतिना दक्षिणतो रक्षाꣳसि नाष्ट्रा अपहत्याभयेऽनाष्ट्र ऽएतं यज्ञं तनुत ऽआज्येन पूर्णा भवति व्वज्रो वा ऽआज्यं व्वज्रेणैवैतद्दक्षिणतो रक्षाꣳसि नाष्ट्रा अपहन्ति ॥ ३७ ॥

अथौदुम्बरी मुत्तरत उपदधाति । ऊर्ग्वै रस उदुम्बर ऊर्ज्ज मेवास्मिन्नेतद्रसं दधाति दध्ना पूर्णा भवति रसो वै दधि रस मेवास्मिन्नेतद्दधाति ॥ ३८ ॥

यद्वेव स्रुचा ऽउपदधाति । प्रजापतेर्व्विस्रस्तस्याग्निस्तेज आदाय दक्षिणाकर्षत् सोऽव्वोदर मद्यत् कृष्टोदरमत्तस्मात् कार्ष्मर्य्योऽथास्येन्द्र ओज आदायोदङ्ङुदक्रामत् स उदुम्बरोऽभवत् ॥ ३९ ॥

तावब्रवीत् । उप मेतं प्रति म ऽएतद्धत्तं येन मे युव मुदक्रमिष्ट मिति ताभ्यां वै नौ सर्व्व मन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्रपद्येथा मिति तथेति ताभ्यां वै सर्व्वं मन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्रापद्येतां तस्माद् बाहुभ्या मेवान्नं क्रियते

२१

बाहुभ्या मद्यते बाहुभ्याᳫं हि स सर्व्वं मन्न्र
प्रायच्छत् ॥ ४० ॥

स कार्ष्मर्यमयीं दक्षिणत उपदधाति । अग्नेष्
तेजसा सादयामीति * यदेवास्य तदग्निस्तेज आदा
दक्षिणाकर्षत्तदस्मिन्नेतत् प्रतिदधात्यग्निर्मूर्द्धा दि
ककुदित्येष उ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्या
नग्निर्यावत्यस्य मात्रा तावतैवैना मेतदुपदधा
घृतेन पूर्णा भवत्याग्नेयं वै घृतᳫं स्वेनैवैन + मेत
भागेन स्वेन रसेन प्रीणाति ॥ ४१ ॥

अथौदुम्बरी मुत्तरत उपदधाति । इन्द्र
स्यौजसा सादयामीति यदेवास्य तदिन्द्र ओ
आदायोदङ्ङुदक्रामत्तदस्मिन्नेतत् प्रतिदधाति भुवो
यज्ञस्य रजसश्च नेतेत्येष उ स इन्द्रः सा यदाग्ने
य्यग्निकर्म्म ह्यथ यत्त्रिष्टुप् त्रैष्टुभो हीन्द्र ऐन्द्राग्नो
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैना मेतदु

---

* 'तेजसादयामीति'—इति ख ।

+ 'स्वेनैन'—इति ख ।

दधातीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैना मेतदुप-दधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैन मेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४२ ॥

तावस्यैताविन्द्राग्नी ऽएव बाहू *। तावेनं तेजसा च व्वीर्येण च सह प्रपद्येते स सम्प्रत्युरः पुरुष † माकाश्य यत्राभ्याप्नोति तदालिख्यैने ऽउपदधात्येष हैतयोर्लोकः ‡ ॥ ४३ ॥

ते हैके तिरश्च्या ऽउपदधति। तिर्य्यञ्चौ वा ऽइमौ बाहू § ऽइति न तथा कुर्यात् प्राच्यावेवो-पदध्यात् प्राङ् ह्येषोऽग्निश्चीयतेऽथो ऽएवं वै बाहू व्वीर्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू ॥ ॥ ४४ ॥

---

*, ‖ 'बाहू'—इति क, 'बाहूं'—इति ग, घ।

† 'पुर एष'—इति ख।

‡ 'ह्वैतयोर्लोकः'—इति ग, घ।

§ 'बाहु'—इति ख।

तदाहुः * । नैतस्य पुरुषस्य बाहू कुर्यादेतौ वा ऽअस्य बाहू ये ऽएते स्रुचौ नेदतिरेचयानीति स वै कुर्यादेवैतौ वा ऽअस्य बाहू ऽअन्वेते स्रुचावथो ऽएतौ पक्षावथो यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन् भवति यान्स्तोमान् यानि पृष्ठानि यानि छन्दाᳬस्येतयोरेव सा संस्कृतिरेतयोर्वृद्धिस्तस्मात् कुर्यादेवैतस्य पुरुषस्य बाहू † ॥ ४५ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [४. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अग्निग्रहण-सत्यसामगान-पुष्करपर्णोपधानानि पूर्वस्मिन् ब्राह्मणे सङ्ग्रहेण विहितानि, इदानीं तानि क्रमेण प्रपञ्चयति— "आत्मन्नग्निं गृह्णीते चेष्यन्नित्यादिना ‡ । 'चेष्यन्' चयनं करिष्यन् अध्वर्युः 'आत्मन्' आत्मनि 'अग्निं' 'गृह्णीते' मन्त्रेण धारयेत्

* 'तदाहुः'—इति ख, 'तदाहुः'—इति ग, घ ।
† 'बाहू'—इति ख ।
‡ का० श्रौ० सू० १७. ३. २७ क ।

"आत्मनो वा इत्यादि। अध्वर्युः 'आत्मनोऽधि' अधिः पञ्चम्यर्थानुवादी; "अधिपरी अनर्थकौ"—इति * पाणिनिस्मरणात्। आत्मनः सकाशात् खल्वध्वर्युः 'एतं' चित्याग्निं 'जनयति'। तथा सति लोकस्थितिरीदृशी, 'यादृशात्' यादृक्स्वरूपात् खलु मनुष्यादिशरीरात् गर्भो 'जायते', 'सः' 'तादृक्' तत्सदृश एव निष्पद्यते; सति ह्यग्निग्रहणे अध्वर्युरग्न्यात्मको भवति, तादृशादध्वर्योर्जायमानश्चित्याग्निरपि साक्षादग्निरूपो भवति। तस्मादात्मन्यग्निग्रहणं कर्त्तव्य मित्यर्थः॥

अगृहीत्वा चयने दोष मुपन्यस्यति—"स यदात्मन्निति। 'सः' अध्वर्युः 'यत्' यदि आत्मन्यग्निग्रहण मकृत्वा 'अग्निं चिनुयात्', तदा देवरूपानापन्नान्मनुष्यशरीरमात्रात् मनुष्यात्मक मेव 'जनयेत्'; कारणानुरूपत्वात् कार्यस्येति भावः। कारणं हि शरीरं मनुष्यजातीयम्, अत एव 'मर्त्यं' मरणशीलम् अनपहतपाप्मकं मरणादिहेतुभूतपापसहितम्, तथाविधाज्जायमानोऽग्निरपि तादृग्रूपो भवतीति तात्पर्यार्थः॥

सति त्वग्निग्रहणेऽभिहितदोषवैपरीत्य माह— "अथ यदेति। "तदग्नेरेवेत्यादि। अग्निरूपादात्मनः सकाशाज्जनयन् 'अग्निम्' एव 'जनयति'। अमृतरूपस्याग्नेर्धारणादध्वर्युरप्यमृतात्मकः। शिष्टं स्पष्टम्॥ १॥

इत्य मग्निग्रहणस्यावश्यकर्त्तव्यता मुपपाद्य समन्त्रकं तद्विधत्ते— "स गृह्णातीति। "मयि गृह्णामीति † ग्रहण-

* पा० सू० १. ४. ६३।

† वा० सं० १३. १।

मन्त्रः। तत्र मयोत्यस्मच्छब्दश्रवणादात्मन्यग्नेर्ग्रहणं निगदसि- मित्याह— "तदात्मन्नेवेति। 'अग्रे' चयनात् प्राक्काले। द्वितीय भाग मनूद्य, तस्य तात्पर्य्य माह— "रायस्पोषायेति। रा- स्पोषो धनसमृद्धिः, सुप्रजास्त्वं शोभनपुत्रपौत्रादियुक्तत्वम्, शोभ- वीर्ययोगः सुवीर्यम्, 'तत्' तेन मन्त्रभागेनोक्तलक्षणाः 'सर्वा' 'आशिषः' फलानि आत्मनि स्वीकरोति। तृतीयभाग मनू- व्याचष्टे— "मा मु देवता इति। यच्चमाक्कदेवताः 'मा मु' मेव 'सचन्तां' मदीययज्ञं सेवन्ता मिति। एतेन मन्त्रभागेन दे- ताना मप्यात्मनि ग्रहणं कृतं भवति। "तद्यत्किञ्चेत्यादि 'तत्' प्रागुक्तं 'यत्' किं मपि मन्त्रप्रतिपाद्यं रायस्पोषादि मात्मनो जनयितव्य मस्ति, तत् सर्वं मनेन मन्त्रेणात्मनि गृही- मेव भवतीति॥

अग्निग्रहणञ्च तिष्ठता कर्त्तव्य मिति स्थितिलक्षणं गु- विधत्ते— "स वै तिष्ठन्निति *। चयनसमये तु उपवेशनम्† तस्य विधत्ते— "अनूपविश्य चिनोतीति। यत्र यत्रेष्टका मु- दधाति, तं तं देशं गत्वा तत्समीपे ‡ उपविश्य, चिनुयादित्यर्थः एतदुभयं स्तौति— "पशुरेष इति। पशुरूपो हि 'एषः' अग्नि 'तस्मात्' एव हि कारणात् गवादिलक्षणः 'पशुः' तिष्ठन्नेव गर्भं धत्ते, 'अनूपविश्य' 'विजायते' प्रसूते। अतोऽग्निग्रहणं गर्भधारण

* का० श्रौ सू० १७. ३. २७ ख।
† 'चयनसमयेऽनूपवेशनम्'—इति ज-पाठः।
‡ 'समीपे'—इति न-पाठः।

भूतत्वात् तिष्ठतैव कार्यम्, चयनन्तु प्रसवरूपत्वादुपविष्टेनेति तात्पर्यम् ॥ २ ॥

अथ प्राग्विहितं सत्यसाम्नो गान मनूद्य स्तौति— "अथ सत्य मिति *। 'एतत्' एतस्मिन्नन्तरे खलु 'देवा अब्रुवन्', 'अस्य' अग्नेः 'सत्यं' सत्यफलसाधनं साम 'मुखं करवाम', तथाकरणाच्च वयं 'सत्यं भविष्यामः' सत्यभूताः सर्वदा बाधरहिताः स्याम। 'नः' अस्मान् 'सत्यं' सत्याभिमानिदेवता 'अनुवर्त्स्यति' अनुवर्त्तनं करिष्यति। तथा च 'नः' अस्माकं 'सः' तादृशः 'कामः' यज्ञफलरूपः 'सत्यः' यथार्थो भविष्यति, 'यत्' फलं कामयमाना 'एतद्' अग्निचयनात्मकं कर्म करिष्यामहे। 'इति'-शब्दो देवानां कामपरिसमाप्तौ ॥ ३ ॥

"त एतदिति। एवं विचार्यते— 'ते' देवाः 'एतत् सत्यं साम' 'पुरस्तात् अगायन्' 'तत्' तेन सत्यसाम्नो गानेन 'अस्य' अग्नेः 'मुखं' 'सत्य मकुर्वन्' ततः 'ते' देवाः 'सत्य मभवन्' नित्यत्वं प्राप्ता इत्यर्थः। व्याख्यातप्राय मन्यत् ॥ ४ ॥

इत्थं परकृति मुपन्यस्य प्रकृते योजयति— "तथैवेति। यथा देवाः, 'तथैव' 'एतद्' एतर्हि 'यजमानः' 'सत्यं साम' 'पुरस्तात्' पूर्वस्यां दिशि 'गायति' 'इति' 'यत्' अस्ति, 'तत्' तेन 'अस्य' चित्याग्नेः मुखं 'सत्यं' सर्वदा विद्यमानं 'करोति'। 'सः' यजमानः स्वय मपि तथाकरणात् 'सत्यं' सत्यात्मको 'भवति'। गत मन्यत् ॥ ५ ॥

---

* का० श्रौ० सू० १७. ३. २८।

सत्यपदस्याभिप्रेत मर्थ माविष्कुर्वन् प्रशंसति— "तद्यदिति 'तत्' तत्र तदुक्तविधं 'यत् सत्यम्', 'आप एव तत्' अप्स मेव सत्यपदेनोक्त मित्यर्थः। अपां सत्यरूपता मुपपादयति— "आपो हीति। 'हि' यस्मात् प्रथमसृष्टत्वादापः सत्यात्मिकाः 'तस्मात्' 'येन' भूप्रदेशेन ताः 'आपः' 'यन्ति' गच्छन्ति, 'तत्' श 'सत्यस्य' उदकात्मकस्य ब्रह्मणो 'रूप मिति' 'आहुः' कथयन्ति ब्रह्मवादिनः। अपां प्रथमसर्गश्च स्मर्यते— "अप एव ससर्जादौ तासु वीर्य मवाकिरत्"-इति †। "अप एव तस्येत्यादि। आ सत्यरूपत्वात् 'तत्' तेन सत्यसाम्नोऽग्रतोगानेन 'अस्य' सर्वस्य जगतः अप एव 'अग्रं' मुखम् 'अकुर्वन्' देवा इत्यर्थः। अपा मग्रकरण फल माह—"तस्मादिति। 'तस्मात्' उक्तहेतोः 'यदैव' खलु 'आ वृष्युत्पन्नाः 'यन्ति' प्रवहन्ति, 'अथ' अनन्तर मेव 'इदं' दृश्यमा मोषधिवनस्पत्यादिरूपं 'सर्वं' जगदुत्पद्यते। सर्वशब्दस्य सङ्कु वृत्तितां निराचष्टे— "यदिद मिति ॥ ६ ॥

पुष्करपर्णोपधानं विधाय स्तौति— "अथ पुष्करप मिति ‡। 'अथ'-शब्दः सत्यसामगानानन्तर्यार्थः। "त मग्नि उपोदास्तं पुष्करपर्णे विवेदेति § अग्न्युपलम्भाधिकरणत्व श्रुतत्वात् पुष्करपर्णस्याग्नियोनित्वम् ‖ ॥ ७ ॥

---

* 'आप्तत्व मेव'—इति च, क।

† म० सं० १अ० ८श्लो०। तत्र 'वीज मवासृजत्'—इति पाठः।

‡ का० श्रौ० सू० १७. ४. १।

§ पुरस्तात् गतम् (७. ३. २. १४—२०५ पृ० १० पं०)।

‖ 'पुष्करपर्णस्य योनित्वम्'—इति च, क।

प्रकारान्तरेण पुष्करपर्णस्याग्नियोनित्व मनुवादपूर्वकं प्रतिपादयति— "यद्देवेति। "आपो वै पुष्कर मित्यादि। "पुष्करं सर्वतो मुख मित्यादि निगदप्रसिद्धिद्योतको * 'वै'-शब्दः। 'तासाम्' अपां प्रथमसृष्टानाम् 'इयं' पृथिवी 'पर्णं' पर्णस्थानीया। एतदेव विशदयति— "यथा ह वा इति। 'इदं' 'पुष्करपर्णं' पद्मपत्रं 'यथा' खलु 'अप्सु' 'अध्याहितम्' उपर्याश्रितं सत् दृश्यते, 'एवम्' 'इयं' पृथिवी 'अप्सु' उदकेषु 'अध्याहिता' उपर्याश्रिता वर्त्तते। अत एवोपरिष्टात् "तद्यपां शर आसीत्तत्समहन्यत सा पृथिव्यभवदित्याम्नास्यते †। अतः पुष्करपर्णसाम्यात् पृथिव्याः पुष्करपर्णत्वम्। "सेयं योनिरित्यादि। यदिदं पृथिव्यात्मकं पुष्करपर्णं 'सेय मग्नेर्योनिः' उत्पत्तिकारणम्; अत एव हि 'इयं' पृथिवी कार्यकारणयोरभेदाच्चित्याग्निरूपेण वर्त्तते। एतत् तादात्म्य मुपपादयति— "अस्यै हि सर्वोऽग्निश्चीयत इति। "षष्ठ्यर्थे चतुर्थी" ‡। अस्याः पृथिव्याः सम्बन्धिनीभिः § मृन्मयीभिरिष्टकाभिः कृत्स्नोऽग्निर्यतश्चीयते ‖, अतः पृथिव्या अग्नेश्च तादात्म्य मुक्त मित्यर्थः। उदीरितरीत्या यतः पुष्करपर्णं पृथिवी, अतस्तदुपधानेन 'इमा मेव' पृथिवी मुपहितवान् भवतीत्यर्थः॥

अथैतस्योपधानस्य सत्यसामानन्तर्य मनूद्य स्तौति— "ता

---

* 'निघण्टुप्रसिद्धिद्योतको'—इति च, छ।

† का० १०, प्र० ४, ब्रा० ८, क० २ द्रष्टव्यम्।

‡ पा० २. ३. ६२ सू० १ वा०।

§ 'सकाशात्'—इति ज-पाठः।

‖ 'कृत्स्नोऽग्निर्प्यायितश्चीयते।'—इति ज-पाठः।

मनन्तर्हिता मिति। 'सत्यात्' सत्यसामगानात् 'अनन्तर्हिताम्' अव्यवहितां 'तां' पुष्करपर्णेष्टका मुपदध्यात्, 'तत्' तेनानन्तर्हितत्वेन 'इमां' पृथिवीं 'सत्ये प्रतिष्ठापयति'। 'तस्मात्' एव खलु 'इयं' पृथिवी 'सत्ये' ब्रह्मणि अप्त्वोपाधिके 'प्रतिष्ठिता' दृश्यते। "तस्माद्धिय मिति। 'उ'-शब्दोऽवधारणे। यस्मात् सत्ये प्रतिष्ठिता 'तस्मात्' एव कारणात् अधिकरणाधिकर्त्तव्ययोरभेदोपचारेण 'इय मेव' पृथिवी 'सत्यम्'। सत्यरूपता मुपपादयति— "इयं ह्येति 'एषां' पृथिव्यन्तरिक्षद्युलोकानां मध्येऽपि 'इय मेव' खलु पृथिवी 'अद्धातमाम्' प्रत्यक्षतमाम्, अपारोक्ष्येणावभासमाना * दृश्यते; तस्मादस्याः सत्यरूपत्वं बोद्धव्यम्। "किमेत्तिङव्ययघादिति† आम्प्रत्ययः ॥ ८ ॥

अथ तस्मिन् पुष्करपर्णोपधाने मन्त्रं ‡ विधाय पदशो व्याचष्टे— "अपाम्पृष्ठ मसीति §। "अपाᳪ ह्येय मिति। 'इयं' पृथिवी उपर्यवस्थानात् 'अपां' पृष्ठवत् 'पृष्ठम्' अतो हे पुष्करपर्ण! त्वम् 'अपाम्' उदकानां 'पृष्ठ मसि' पृष्ठभागो भवसि। "योनि ह्यैय मिति। चित्यस्याग्नेः 'योनिः' पृथिवी; इष्टकोपादानत्वात्। हे पुष्करपर्ण! त्वम् 'अग्नेः' तादृशी 'योनि

---

* आपरोक्ष्येण वर्त्तमाना'—इति ज-पाठः।

† पा० सू० ५. ४. ११।

‡ का० श्रौ० सू० १६. २. २३।

§ "अपाम्पृष्ठ मसि योनिरग्नेः समुद्र मभितः पिन्वमानम्। वर्द्धमानो महाᳪ आ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व"—इति वा० सं० ११. २९।

प्नोतीति प्रथमपादार्थः । "समुद्रो ह्रीमा मिति । 'इमां' पृथिवीम् 'अभितः' सर्वतः, पृथिव्याः सर्वासु दिक्षु 'समुद्रः' 'पिन्वते' सिञ्चति । "पिवि सेचने"-इति * धातुः । महच्छब्दस्य व्याख्यानं 'महीयस्व'-इति । "महीङ् वृद्धौ"-इति † धातुः, कण्ड्वादिः । "अनुविमार्ष्टीति । चतुर्थपादावसाने पुष्करपर्ण मुपदधानः तस्यानुलोम्येन विमार्जनं कुर्यात् । "असौ वा आदित्य इत्यादि, चतुर्थपादव्याख्यानम् । "नो हैत मन्य इति । 'दिवोऽन्य' द्युलोकव्यतिरिक्तोऽन्यः 'वरिमा' भाववाचिना तद्वान् लक्ष्यते, उरुतरः पदार्थः । 'एनम्' अग्निं 'नो' खलु 'यन्तु मर्हति' । तथाच "दिवो मात्रया वरिम्णा'-इति "इत्थम्भावे तृतीया"-इति‡ व्याख्यातं भवति; अतोऽय मर्थः सम्पद्यत इत्याह—"द्यौर्भूत्वेति । हे पुष्करपर्ण! त्वं 'द्यौः' द्युलोको 'भूत्वा' 'एनम्' अग्निं 'यच्छ' यमय 'इति' तात्पर्यार्थः ॥

छन्दोद्वारेणैतत् प्रशंसति— "स्वराजोपदधातीति । उत्तरार्द्धर्चे वैराजपादाभ्यां द्वे अक्षरे अधिके, तदाधिक्यं स्वराडाख्यस्य छन्दसो लक्षणम्; "द्वाभ्यां विराट्स्वराजौ"-इति-§-स्मरणात् । स्वायत्तं राजते ईष्टे इति स्वराट्, स्वतन्त्रेश्वरः, तस्य कर्म 'स्वाराज्यम्'; 'अपां' सम्बन्धि यत् स्वाराज्यं तदेव पुष्करपर्णम्; अतस्तस्य स्वराजोपधानं युक्त मिति भावः । "सादयित्वेत्यादिकं प्रागुक्तार्थम् ॥ ८ ॥

---

* धा० भ्वा० प० ५८८ ।

† "महीङ् पूजायाम्"—इति क० आ० ३६ धा० ।

‡ पा० सू० २. ३. २१ ।

§ पि० छ० सू० ३अ० ४ख० द्रष्टव्यम् ।

आकाशात्मना स्तुतस्य पुष्करपर्णस्य मध्ये सूर्यमण्डला- त्मना ध्यातव्यस्य रुक्मस्योपधानं विधत्ते— "अथ रुक्म मिति *। 'अथ'-शब्दः पुष्करपर्णोपधानानन्तर्यार्थः । रुक्मस्यादित्या- त्मत्व मुपपादयति— "एष ह्येष इति । 'एषः' एव परिदृश्य- मानः, 'हि' 'असौ' 'आदित्यः' 'इमाः सर्वा प्रजाः' 'अतिरोचते' अतो रोचत इति व्युत्पत्त्या रुच-धातोः पचाद्यचि रोच इति त- न्नामधेयं सम्पद्यते, तदेव पारोक्ष्येण रुक्म इति ब्रुवते ; परो- प्रियत्वाद्देवाना मित्यर्थः । रुक्मस्य प्रकृतिद्रव्य माकृतिवि- षञ्च दर्शयति— "स हिरण्मय इति । 'सः' रुक्मः सुवर्णम- कार्यः । दाण्डिनायनादिसूत्रे † निपातनान्मयटि हिरण्यश- स्यान्त्ययकारलोपः । 'परिमण्डलः' वर्तुलाकृतिः । 'एकविंश- निर्बाधः' एकविंशतिसङ्ख्याकैः पुलकैर्युक्तः कार्यः । "तस्यो- इति । 'तस्य' एकविंशतिसङ्ख्यायोगस्य "द्वादशमासाः पञ्च- इत्यादिना स्तुतिः प्रागाम्नातेत्यर्थः ‡ । उपधानसमये निर्बाधा- मधोभागेऽवस्थानं यथा भवति तथा कर्त्तव्य मिति विधत्ते "अधस्तान्निर्बाध मिति §। तस्य कारण माह— "रश्मयो एतस्येति । सूर्यमण्डलस्याधस्ताद् भागे हि रश्मयो वि- सरन्ति, अतो रश्म्यात्मकानां निर्बाधाना मधस्ताद् भागे क- युक्त मिति ॥ १० ॥

---

* का० श्रौ० सू० १७. ४. २ ।

† पा० सू० ६. ४. १०४ ।

‡ ६का० २. १. ३ (६भा० ८६९१०) द्रष्टव्यम् ।

§ का० श्रौ० सू० १७. ४. २ ख ।

तस्य पुष्करपर्णमध्ये उपधानं विधत्ते—"तं पुष्करपर्णे इति *। पुष्करपर्णस्य योनिरूपत्वं प्रागुक्तम् † ॥ ११ ॥

प्रकारान्तरेण पुष्करपर्णे रुक्मोपधानं स्तौति— "यद्वेवेति। 'प्रतिष्ठा' आस्पदम्। तद्रूपतां पुष्करपर्णस्योपपादयति— "इयं वै पुष्करपर्णं मिति। "यो वा अस्या मित्यादि। 'यः' खलु 'अस्यां' पृथिव्याम् 'अप्रतिष्ठितः' प्रतिष्ठितो न भवति, 'सः' दूरदेशे 'सन्' वर्त्तमानः 'अपि' 'अप्रतिष्ठितः' प्रतिष्ठारहितो निरालम्बनः 'एव' भवति। यद्येव माकाशे वर्त्तमानस्य सूर्यस्य पृथिव्या मनवस्थानादेतेन पुष्करपर्णे उपधानेन 'एनं' रुक्मरूप मादित्यम् 'एतम्' 'अस्यां' पृथिवीरूपाया मेव 'प्रतिष्ठायां' 'प्रतिष्ठापयति' ॥ १२ ॥

एतदेव रुक्मोपधानस्य पुष्करपर्णाधिकरणत्व माख्यायिकया पुष्करनामनिर्वचनेन प्रतिष्ठारूपतां ब्रुवन् स्तौति— "यद्वेव पुष्करपर्णं इत्यादिना। 'नास्तृषि' न खल्वह मद्यापि वृत्र महिंसिष मिति विपर्यस्तमतिः सन्नित्यर्थः। सः 'इन्द्रः' अनन्तरम् 'अपः प्राविशत्'। 'ताः अब्रवीत्' अहं वृत्राद् 'बिभेमि' बिभ्यतो मम 'पुरम्' भयरहित मावासस्थानं हे 'आपः! यूयं 'कुरुत'। आपश्चैतद्वचः श्रुत्वा 'यः' स्वकीयो 'रसः' प्रातिस्विकः 'आसीत्', 'त मूर्द्धं समुदौहन्' उदक्षिपन्। त मेव रसं पुष्करपर्णात्मना परिणतं निवासस्थान मकुर्वन्। यस्मादेवं पूः अक्रियत, 'तस्मात्' तस्य 'पूष्करम्'–इति नाम सम्पन्नम्। पूः क्रियते

---

* का० श्रौ० सू० १७. ४. ३।

† इहैव सप्तमकाण्डीभाष्यं द्रष्टव्यम् (२४८ पृ०)।

अनेनेतिव्युत्पत्तेः पूष्कर मिति प्रयोक्तव्ये पुष्कर मिति प्रयोगस्तु पारोक्ष्यकरणायेति सङ्ग्रहेणार्थः। एवं पुष्करनामनिर्वचनं कृत्वा प्रकृते योजयति— "तद्यत् पुष्करपर्णं इति। 'अस्मै' अस्मै इन्द्राय 'य मेव' 'एतं' रसम् 'आपः' पुरा 'समुदौहन्' समुच्छ्रितवत्यः, तदनन्तरम् 'अस्मै' एवेन्द्राय यां 'पुरं' पुष्करपर्णाकि काम् 'अकुर्वन्', 'तस्मिन्नेव' उभयरूपे स्वाश्रये रुक्मरूपेणावस्थि मिन्द्रशब्दाभिधेयम् 'एनं' सूर्यम् 'एतत्' एतेन 'प्रतिष्ठापयति' इत्यर्थः ॥ १३ ॥

तस्मिन् रुक्मोपधाने मन्त्रं दर्शयति— "ब्रह्मजज्ञान मिति *। ननु षड्भावविकाररहित मौपनिषदं ब्रह्म †, त कथं तस्य जनिक्रियायोगो मन्त्रपदेन प्रतिपाद्यत इत्याश व्याचष्टे— "असौ वा आदित्य इति। अत्र प्रादुर्भा एव जनेरर्थो न तूत्पत्तिः। अय मर्थः। तदुक्तविधं 'ब्रह्म' सगुणं सत् 'असौ' द्युलोकस्थः 'आदित्यः' भूत्वा प्रत्य 'पुरस्तात्' पूर्वस्यां दिशि 'जायते' उदेति। जज्ञान मिति जनेर्लिटः कानजादेशे रूपम्। द्वितीयपादे क्रमेण पदार्थानाह— "मध्यं वा इति। सीमत इति पदे यत् सीमेति प्राति पदिकम्, तन्मध्य माचष्टे। सुष्ठु रोचन्ते सवितृप्रकाशेन दीप्यन्त इति 'सुरुचः' पृथिव्यादिलोकाः। "असावादित्यो वेन इति। यद्वेनोऽसावुच्यते, तन्नामनिर्वचनं करोति—

* का० श्रौ० सू० १७. ४. २।

† "षड् भावविकारा भवन्तीति वार्ष्यायणिः। जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति"—इति निरु० १. १. २।

"यद्वा इति। यस्मात् कारणात् 'प्रजिजनिषमाणः' प्रजनितुं प्रादुर्भवितु मुदेतु मिच्छन्, 'अवेनत्' कान्तियुक्तोऽभवत्, 'तस्मात्' वेनति दीप्यत इति 'वेनः' इति सूर्यस्य नाम सम्पन्नम्। अत एव यास्कोऽप्याह स्म— "वेनो वेनतेः कान्तिकर्मणः"—इति *।

इत्थं पदार्थानुक्त्वा वाक्यार्थ माह— "तानेष इति। 'तान्' सुरुच्-शब्दाभिधेयान् पृथिव्यादिलोकान् 'एषः' सूर्यः 'सीमतः' मध्यतो 'व्यावः' व्यावृणोत्, उदयेन प्रकाशितवान्। वृणोतेर्लुङि "मन्त्रे घसेत्यादिना च्लेर्लुक् †, "छन्दस्यपि दृश्यते"-इत्याडागमः ‡। एतस्य पदस्योक्तार्थपरतां व्याचष्टे— "विवृत्यनुदेतीति। तृतीयपाद मनूद्य व्याचष्टे— "स बुध्न्या इति। बुध्नो मूलम्, तत्र भवाः 'बुध्न्याः' पादाः। ते च 'अस्य' सूर्यस्य दिगात्मकाः; रश्मिप्रसरणहेतुत्वात्। 'ताः' बुध्न्यशब्दाभिधेया दिशः 'उप' समीपे स्वगतिभेदेन निर्मिमीत इति 'उपमाः' सूर्यः। तथा 'ताः' दिशोऽनुलक्ष्य 'वितिष्ठते' विविधं पूर्वपश्चिमादिदिग्भेदहेतुत्वेनावतिष्ठत इति। 'विष्ठाः' तिष्ठतेः, "आतो मनिन्निति § विच्। एवम्भूतः सूर्यः 'सतः' लोकत्रयात्मकस्य भावरूपस्य, 'असतः' अभावात्मकस्य 'च' 'योनिम्' उत्पत्तिस्थानं 'विवः' विवृ-

---

* निरु० १०. ४. १।

† पा० सू० २. ४. ८०।

‡ पा० सू० ६. ४. ७३।

§ पा० सू० ३. २. ७४।

णोति। सदसच्छब्दयोर्भावाभावपरतां व्याचष्टे— "यच्च [illegible]
यच्च नेति *।

छन्दोद्वारेण प्रशंसति— "त्रिष्टुभेति। "त्रैष्टुभो [illegible]
इति। "गायत्री वै पृथिवी, त्रैष्टुभ मन्तरिक्ष मित्या[illegible]
श्रुतिः। द्वितीयस्थानत्वाच्चान्तरिक्षस्य त्रिष्टुप्सम्बन्धः। [illegible]
सञ्चरन्। त्रिष्टुप्छन्दस इन्द्रेण सहोत्पत्तेश्च † इन्द्रात्मक [illegible]
सूर्योऽपि 'त्रैष्टुभः'। "सादयित्वेत्यादि व्याख्यातम्॥ १४॥

रुक्ममध्ये हिरण्मयपुरुषस्योपधानं विधत्ते— "अथ पु[illegible]
मिति ‡। "स प्रजापतिरित्यादि। 'सः' उपधेयः पु[illegible]
'प्रजापतिः' स्थूलप्रपञ्चाभिमानिविराडात्मकः, स एवा[illegible]
सूक्ष्मप्रपञ्चाभिमानिहिरण्यगर्भात्मकः, यजमानस्य तद्रूपप्रा[illegible]
यजमानात्मकोऽपि § स इत्यर्थः। तस्य हिरण्यविकृति[illegible]
विधाय स्तौति— "स हिरण्मय इति। "ज्योतिर्वा इति[illegible]
भास्वररूपोपेतत्वात् ज्योतिरात्मकं हिरण्यम्। तथा अत्य[illegible]
न्ताग्निसंयोगेऽपि समुच्छित्तिविरहात् 'अमृतं' अमरणस्वभा[illegible]
'हिरण्यम्'। चीयमानोऽग्निरपि एतदुभयात्मक इति ( तस्य
हिरण्मयत्वं युक्त मित्यर्थः। पुरुषरूपता मनूद्य प्रतिपादयति—
"पुरुषो भवतीति। 'हि' यस्माच्चित्याग्निरूपेण संस्कर्त्तव्यः प्रजा[illegible]

---

* वा० सं० १३. ३।

† तै० सं० १. १. ४ द्रष्टव्यम्।

‡ का० श्रौ० सू० १७. ४. ३।

§ 'यजमानोऽपि'—इति ज-पाठः।

ति: पुरुषविध:, तत्प्रतिरूपत्वाद्धिरण्मयस्योपधेयस्य पुरुषाकृति-तीत्यर्थ: ॥ १५ ॥

एतदेव पुरुषोपधानं मनूद्य मन:प्राणाद्यात्मकसूक्ष्मशरीर-स्थापनरूपेण स्तौति— "यद्वेवेति। "प्रजापतेर्विस्रस्तादित्यादि। प्रजापतिर्हि पुरा विस्रस्तशरीरोऽभूत्, तथाविधात् तस्मात् 'रम्या' रमणीया ज्ञानक्रियाशक्तिरूपा सूक्ष्मा 'तनू:' 'मध्यत:' शरीरमध्यात् 'उदक्रामत्' उर्द्धं निरगमत्। 'तस्याम्' ऊर्ध्वं निष्क्रान्तायां सत्याम् 'एनं' प्रजापतिं चक्षुराद्यभिमानिन: 'देवा:' आदित्यादय: 'अजहु:' अत्यजन्। "ओ हाक् त्यागे"-इति * धातु:। 'तं' तथाविधं प्रजापतिं 'देवा:' तत्पुत्रा: 'यत्र' यस्मिन् प्रदेशे 'समस्कुर्वन्' चित्याग्निरूपेण संस्कृतवन्त:। "अडभ्यासव्यवा-येऽपीति † कात् पूर्व: सुट्। 'तत्' तत्र 'अस्मिन्' प्रजापतौ 'एतां' निष्क्रान्तां रम्यां तनूं 'मध्यत:' 'अदधु:' स्थापयाञ्चक्रु:। 'अस्य' प्रजापते:' 'तस्यां' तन्वां पुरा निष्क्रान्ता इन्द्रियदेवता: 'अरमन्त' पुन: प्रविश्यातिष्ठन्नित्यर्थ: ॥

उक्तार्थोपजीवनेन हिरण्यनामनिर्वचनं करोति— हितायां स्थापितायां ज्ञानक्रियाशक्त्युपेतत्वेन रमणीयायां यस्माद् 'देवा अर-मन्त', 'तस्मात्' हितेऽस्मिन् रमत इति व्युत्पत्त्या हिरण्य मिति नाम सम्पन्नम्, तदेव पारोक्ष्येण हिरण्य मित्युच्यते। पृषोदरा-दित्वात्तद्रूपसिद्धि:। अत एव "हिरण्यं कस्मादिति प्रक्रम्योक्तं यास्केन— "हितरमणं भवतीति वा"-इति ‡ ॥

---

* धा० जु० प० ८।

† पा० ६. ३. १४० सू० वा० १। ‡ निरु० ३. ३. १।

एवं पुराकल्प मभिधाय प्रकृते योजयति— "तथैवास्मि
त्यादिना । 'अयं' यजमानः । शिष्टं स्पष्टम् । का पुनरसौ
तनू रिति ता माह— "प्राणो वा अस्येति । प्राणापानादि
वृत्त्यात्मकः क्रियाशक्त्यात्मकः 'प्राणः', 'अस्य' प्रजापतेरेव '
तनूः' अतस्तत्स्थापन मेव कृतं भवतीत्यर्थः ॥ १६ ॥

तस्य पुरुषोपधानस्याधारविशेषं विधाय स्तौति—
रुक्म इति । यो रुक्मः पुष्करपर्णे उपहितः *, तस्य मध्ये
हिरण्मयं पुरुष मुपदध्यात् । आदित्यमण्डलात्मको हि
रुक्मः' आदित्यमण्डलमध्ये यो हिरण्मयः पुरुष आ
अत एव श्रूयते— "य एष अन्तरादित्ये हिरण्मयः पु
दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व
सुवर्णः"-इति †। एष एवोपधीयमानो हिरण्मयः पुरु
रुक्मरूपे आदित्यमण्डले 'त मेव' पुरुष मुपहितवान्
तीत्यर्थः ॥ १७ ॥

तत्रोपधाने पुरुषस्योपरिमुखत्वं विधत्ते— "उत्तान
दधातीति । एतदेवोपरिष्टात् मुखत्व माख्यायिकया प्र
पादयति— "एतद्वै देवा इत्यादिना । 'यदि' खलु '
रुक्मपुरुषौ 'अर्वाञ्चौ' अधोमुखौ 'उपधास्यामः', उभयोस्तेज
संसृष्टत्वेन प्रबलतरौ अधोमुखं 'सर्व मेवेदं' जगत् 'प्रधक्ष्य
प्रदग्धं करिष्यतः ॥

* "रुक्मस्य यः कण्ठे प्राग् धृतः"—इति कर्काचार्यः । का० श्रौ० सू० १६. ५. १ द्रष्टव्यम् । इहापि षष्ठकाण्डे ५. १. २ ( ६भा० ३७१पृ० )

† छान्दोग्य-ब्रा० ३. ६. ६ ।

एतद्दोषपरिहारार्थं 'यदि' खल्वेतौ 'पराञ्चौ' पराङ्मुखौ उपधास्यामः, तथा सति 'पराञ्चावेव' पराङ्मुखावेव सन्तौ 'तप्स्यतः' सूर्यमण्डलात् ये उपरितना लोकाः, तत्रैव सूर्यप्रकाशः स्यात्, न त्वधस्तनेषु लोकेष्वित्यर्थः। 'प्रधक्ष्यतः'–इति प्रपूर्वाद् दहतेर्लृटः सञ्चादेशः *। 'तप्स्यत'–इति "तप सन्तापे"–इत्यस्मात् †। यदि तर्हि 'सम्यञ्चौ' परस्पराभिमुखौ तौ रुक्मपुरुषौ उपदध्यात्, तदा एतौ 'अन्तरैव' एतयोर्मध्ये एव तदीयं 'ज्योतिर्भविष्यति', तथा च व्यवधानादुपरितनानधस्तनांश्च लोकान् न प्रकाशयेताम् ‡। 'अथो' अपि च 'अन्योन्यं हिंसिष्यतः' रुक्मस्य ज्योतिषा पुरुषज्योतिः प्रतिहन्येत। तेन च रुक्मज्योतिरिति परस्परं हिंसेदित्यर्थः। कथं तर्हि तावुपधेयाविति, तत्राह— "तेऽर्वाञ्च मिति। 'ते' देवाः 'अन्य मेकं' सूर्यमण्डलात्मकं रुक्मम् 'अर्वाञ्चम्' अधस्तान्निर्बाधम् 'उपादधुः'। 'अन्यं' पुरुषं 'पराञ्चम्' पराङ्मुखं उत्तानम् 'उपादधुरित्यनुषङ्गः। यस्मादेवं तस्मात् 'एषः' मण्डलात्मकः सूर्यो 'रश्मिभिः' किरणैः 'अर्वाङ्' अधोमुखः 'तपति'। स 'एवः' रुक्मात्मकः। 'एषः' प्राणात्मको मण्डलान्तर्वर्त्ती 'पुरुषः' प्राणिनां 'प्राणैः' सह 'ऊर्द्धः' वर्त्तते। अत एवान्यत्राम्नातम्— "योऽसौ तपन्नुदेति, स सर्वेषां भूतानां प्राणानादायोदेतीति॥

तस्य प्राङ्मुखत्वं विधाय स्तौति— "प्राञ्च मिति। त

* "दह भस्मीकरणे"—इति भ्वा० प० ६६१ धा०।

† भ्वा० प० ६८५ धा०।

‡ 'प्रकाशयेत्'—इति ज।

मुत्तानं पुरुषं 'प्राञ्चं' प्राङ्मुख मुपदध्यात्। 'हि' यस्मात् 'एष' प्राङ्मुखः प्राक्शिरस्कः 'चीयते' तस्माद्धिरण्मयपुरुषस्यापि तथा युक्तम्। पुष्करपर्णोपधानं प्रस्तुत्य, एतत् सर्वं कात्यायनोऽप्याह यत्— "तस्मिन् रुक्म मधःपिण्डं ब्रह्म जज्ञान मित्युत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन् हिरण्यगर्भ इति"–इति *। हिरण्यगर्भ द्रप्सश्चस्कन्देति द्वाभ्या मृग्भ्यां हिरण्मयपुरुष मुपदध्यादिति सूत्रार्थः ॥ १८ ॥

प्रथमां पादशोऽनूद्य व्याचष्टे— "हिरण्यगर्भ इत्यादिना † हिरण्यगर्भो ह्येष इति। 'एषः' हिरण्यपुरुषः सूर्यमण्डलान्तर्वर्त्ती 'हिरण्यगर्भः'। अपञ्चीकृतभूततत्कार्याभिमानी परमेश्वरो हि हिरण्यगर्भः। स च हिरण्मयाण्डमध्ये गर्भवदवस्थानाद्धिरण्यगर्भ इत्युच्यते ॥

अथ मर्थः— 'अग्रे' सृष्ट्यादौ हिरण्यगर्भाख्यः प्रजापतिः, प्र 'प्रावर्त्तत' प्रथमशरीरी जात इत्यर्थः। अत एवान्यत्र श्रूयते (?) "स वै शरीरी प्रथमः, स वै पुरुष उच्यते इति ‡। "एष ह्य... त्यादि। 'एषः' खलु हिरण्यगर्भः 'अस्य सर्वस्य' भूतभौतिकात्मकस्य कृत्स्नस्य जगतः 'जातः' जातावस्थ एव सन् 'एकः' असाधारण 'पतिः' नियन्ता 'आसीत्'। "एष वै दिवञ्चेत्यादि। 'एष' खल्वादित्यात्मको हिरण्यगर्भो 'दिवं' द्युलोकं 'पृथिवीं' भूमिं 'च' प्रकाशनवर्षणादिव्यापारेण 'दाधार' धृतवान्। "क...

* का० श्रौ० सू० १७. ४. २, ३।

† वा० सं० १३. ४।

‡ मार्क० पु० ६५. ६४।

देवायेति। किंशब्दादिह निरुक्तानिरुक्तकृत्स्नजगदात्मकत्वाद् दृष्टरूप इति निर्वक्तु मशक्यः। प्रजापतिरेवोच्यत इत्याह— "प्रजापतिर्वैक इति ॥ १९ ॥

द्वितीया मृच मनूद्य व्याचष्टे— "द्रप्सश्चस्कन्देति *। "असौ वा इत्यादि। द्रवानुदविन्दून् किरणैः प्साति भक्षयतीति 'द्रप्सोऽसावादित्यः'। 'स दिवञ्च पृथिवीं च' 'स्कन्दति' गच्छति शोषयति वा। "स्कन्दिर् गतिशोषणयोः"–इति † धातुः। स्कन्दनप्रकारविशेष मभिनयेन दर्शयति— "इत्यमू मितीमा मिति। 'इति' अनेन उर्द्ध्वगमनप्रकारेण 'अमु' दिवं व्याप्नोति। 'इति' अनेन प्रकारेण अधोमुखैः किरणैः प्रकाशनेन 'इमां' पृथिवीं व्याप्नोतीत्यर्थः। द्वितीयपाद मनूद्य व्याचष्टे— "इमं च योनि मिति। 'इमञ्च' आहवनीयाख्यं योनिम्, 'यश्च पूर्वः' चितो गार्हपत्याख्यः, तदुभयं द्यावापृथिव्यात्मक मसावादित्यो व्याप्नोति 'इति' 'एतत्' अर्थपरतां व्याचष्टे। "लोकद्वयरूपता मुक्त्वा चितिद्वयरूपता माह— "अथो इति। अपि च 'एतर्हि' एतस्मिन् समये 'यदिदं चीयते' आहवनीयाख्यं ‡ स्थानम्, 'यश्चादः' विप्रकृष्टं § गार्हपत्याख्यं स्थानं 'पूर्वं मचीयत', एतदुभयं हिरण्मयपुरुषरूपः सूर्यो व्याप्नोतीत्यर्थः। तृतीयपाद मनूद्य व्याचष्टे— "समानं योनि मिति। "समानꣳ

* वा० सं० १३. ५।

† भ्वा० प० ९७९ धा०।

‡ 'आहवनीयस्य'—इति ज-पाठः।

§ नास्त्येतत् पदं ज-पुस्तके।

ह्येष इति। 'एषः' सूर्यः 'समानम्' एकविधम् 'एत' 'योनिं' स्थानम् 'अनु'-लक्ष्य 'सञ्चरति', प्राच्यां दिशि उदयन् एकेनैव मार्गेण प्रतिदिवसं सञ्चरतीत्यर्थः। चतुर्थपाद मनू व्याचष्टे— "द्रप्सं जुहोमीति। तं सञ्चरन्तं 'द्रप्सं' प्राच्यां दिश्युद्यन्तम्, तद्व्यतिरिक्तासु सप्तसु दिक्षु 'जुहोमि' प्रतिष्ठापयामि। लक्षणे अनोः कर्मप्रवचनीयत्वम् *, "कर्मप्रवचनीययुक्ते" -इति † 'होत्रा'-शब्दात् द्वितीया ॥ २० ॥

मन्त्रद्वित्व मनूद्य स्तौति— "द्वाभ्यां मिति ‡। व्याख्यातचरमेतत् ॥

मन्त्रगतच्छन्दोद्वारेण स्तौति— "त्रिष्टुभ्या मिति। आदित्यस्य त्रैष्टुभत्वं प्राक् प्रतिपादितम्। सादयित्वेत्यादिकं प्राग्व्याख्यातार्थम् ॥ २१ ॥

पुरुषोपधानाङ्गत्वेन सामगानं विधत्ते— "अथ सामगायतीति §। 'अथ'-शब्दो हिरण्मयपुरुषोपधानानन्तर्ये। तस्य सामगानस्य पुरुषगतवीर्योपादानहेतुत्व माख्यायिकया प्रतिपादयति— "एतद्वा इत्यादिना। एतस्मिन् खलु समये 'देवाः' 'पुरुषं' हिरण्मयम् 'उपधाय' 'तम्' पुरुषम् 'एतादृशम्' एवंरूपम् 'एव' 'अपश्यत्'। कीदृश मिति तदाह— "यथैतदिति। 'यथा' खलु 'एतत्' 'शुष्कं' नीरसं 'फलकम्' काष्ठमयम्, तद्वन्निर्वीर्यं मेवापश्यन्नित्यर्थः ॥ २२ ॥

---

* पा० सू० १. ४. ६०।

† पा० सू० २. ३. ८। ‡ वा० सं० १३. ४, ५।

§ का० श्रौ० सू० १७. ४. ४।

"तेऽब्रुवन्निति। 'ते' देवाः अन्योऽन्यम् 'अब्रुवन्'— यथास्मिन्' पुरुषे 'वीर्यं' प्राणादिलक्षणं 'दधाम' स्थापयाम, तत्प्रकारं हे देवाः! यूयम् 'उपजानीत'। एव मालोच्य 'ते' देवाः पुनः 'अब्रुवन्' उपज्ञाहेतुत्वेन 'चेतयध्व मिति'। एतद् वाक्यं श्रुतिः स्वयं व्याचष्टे— "चिति मिच्छतेति। चितिः प्रज्ञानविशेषः। किमर्थं चेतयध्व मिति प्रार्थ्यते? इत्याशङ्क्य तस्य प्रयोजन मुक्तम्— "तदिच्छतेति। यथा खलु अस्मिन् शुष्कफलकवन्नीरसे पुरुषे वीर्यं स्थापयाम, त मुपाय मिच्छतेत्यर्थः ॥ २३ ॥

"ते चेतयमाना इति। एवं परस्पर मालोच्य 'चेतयमानाः' मीमांसमानाः 'ते' देवाः वीर्याधानार्थम् 'एतत् सामापश्यन्', दृष्ट्वा च 'तत्' साम 'अगायन्', तेन च 'अस्मिन्' हिरण्मयपुरुषे 'वीर्यम्' अस्थापयन् ॥

इत्थं सामगानस्य वीर्याधानहेतुता माख्यायिकया प्रतिपाद्य, तद्दृष्टान्तेनेदानी मपि पुरुषे सामगानस्य तद्धेतुता माह— "तथैवास्मिन्निति। यथा देवास्तथैव 'अयं' यजमानः। सिद्ध मन्यत् ॥

"पुरुषे गायतीति। 'पुरुषे' अन्वारब्धे सति तत् सामगातव्यम्। 'तत्' तथा सति तस्मिन् हिरण्मयपुरुषे सामलक्षणं 'वीर्यं' स्थापितवान् भवति। "चित्रे गायतीति। चित्रलिङ्के मन्त्रे "चित्रं देवाना मित्यादिके *। तदुक्तं कर्कभाष्ये— "पुरुषे

* वा० सं० ७. ४२; १३. ४६।

चित्ये साम गायतीति कात्यायनेन पुरुष इति सप्तमीनिर्देशा दालभ्ये पुरुषे चित्ये चित्रलिङ्गके * मन्त्रे साम गायति"—इति † "सर्वाणि होत्यादि। लोके यावन्ति हि 'चित्राणि' विचित्र रूपाणि सन्ति, तत् सर्वसमुदायरूपः चित्यः 'अग्निः'; अत श्चित्रे गानं युक्त मिति। "त मुपधायेत्यादि। 'तं' हिरण्मय पुरुषम् 'उपधाय' 'न पुरस्तात् परीयात्' पूर्वस्यां दिशि नाति क्रमेत् ‡। परिगमने हि 'अयम्' अग्निः 'मा' मां 'नेत्' नै 'हिनसत्' हिंस्यात्, बाधेत। हिनस्तेर्लेटि अडागमः § ॥ २४ ॥

अथ यजमानकर्तृकं पुरुषस्योपस्थानं विधत्ते— "प सर्पनामैरिति। "नमोऽस्तु सर्पेभ्य इत्याद्याः सर्पनामाख्या मन्त्राः ‖। सूत्रितं हि— "उपतिष्ठते यजमानो नमोऽस्तु तोति ¶। अथैतत् सर्पनामभिरुपस्थानं लोकत्रयस्थापनहेतुत्वेना ख्यायिकया प्रतिपादयति— "इमे वै लोका इत्यादिना 'यदिदं' लोकत्रयवर्त्ति कि मपि प्राणिजात मस्ति, 'अनेन सर्वेण' सह पृथिव्यादयः 'ते लोकाः सर्पन्ति'। तस्मात् सर्पण निमितात् सर्पशब्दाभिधेया लोका इत्यर्थः। तथा चित्याग्नि

* 'चित्रलिङ्गके "कयानश्चित्रः"—इत्यस्याम्'—इति च तत्र वृत्तिः। स च मन्त्रः वा० सं० २७. ३९।

† का० श्रौ० सू० १७. ४. ४ भाष्यम्।

‡ का० श्रौ० सू० १७. ४. ५।

§ पा० सू० ३. ४. ७, ३. १. ३४, ३. ४. १७, ३. ४. ९४।

‖ वा० सं० १३. ६—८।

¶ का० श्रौ० सू० १७. ४. ६।

इति 'यत्' अस्ति, 'एषः' एव खलु सर्वेषां 'देवानाम्' 'आत्मा'; ततः 'ते देवाः' 'एत मात्मानं' हिरण्मयपुरुष मुपधाय 'अबि-भयुः' भयं प्राप्ताः। "यद्वेन इत्यादिना भयस्वरूपप्रतिपादनम्। यदि खलु 'नः' अस्माकम् 'अनेनात्मना' सह 'इमे लोका न सर्पेयुः' (॥२५॥), तर्ह्यस्मदीयस्यात्मनो लोकसम्बन्धविरहादाश्रयो न स्यादित्येवं भीताः 'ते' देवाः 'एतानि' नमोऽस्त्वित्यादीनि 'सर्पनामानि' अपश्यन्'। दृष्ट्वा च 'तैः' उपस्थानं कृतवन्तः। तेन चोपस्थानेन 'अस्मै' हिरण्मयपुरुषरूपायाग्नये 'इमान्' पृथिवीत्यादि-'लोकान्' 'प्रस्थापयन्', 'तैः' लोकैरेनम् 'अनमयन्' वशीकृतवन्तः। "यदनमयन्निति, सर्पनामाख्यानिर्वचनम्। सर्वेषां नमनहेतुत्वाच्च सर्पनामानीत्यर्थः। "तथैवैतदित्यादिना आख्यायिकया सिद्धार्थस्य दार्ष्टान्तिके योजनम्, तच्च व्याख्यातप्रायम्। "तथो हास्येति। सर्प्पनामभिरुपस्थाने सति 'अस्य' यजमानस्य 'एते' लोकाः 'एतेन' चित्याग्निरूपेण आत्मना 'न सर्पन्ति', किन्त्ववतिष्ठन्त इत्यर्थः ॥ २५, २६ ॥

सर्पनामभिरुपस्थान मनूद्य प्रकारान्तरेण स्तौति— "यद्वेवेति। यदिदं किञ्च स्थावरजङ्गमात्मकं प्राणिजात मस्ति, 'तत्' सर्वम् 'एष्वेव लोकेषु' 'सर्पति' चलति। सर्पणाधिकरणत्वात् सर्पा लोकाः। 'तत्' तथा सति सर्पनामाख्यैर्मन्त्रैः 'उपतिष्ठते' इति यदस्ति, 'तत्' तेन 'एष्वेव लोकेषु' वर्त्तमानं नाष्ट्रादिकं शमयति। 'नाष्ट्रा' नाशकारिणी आसुरी प्रजा, 'व्यद्वरः' व्यधनशीलो दन्दशूकादिः, 'शिमिदा' विषहेतुर्लूतावृश्चिकादिः ॥ २७ ॥

तत्र प्रथमं सर्पनाममन्त्र मनूद्य तात्पर्यं व्याचष्टे—

"नमोऽस्त्वित्यादिना *। "य एवेष्विति। 'एषु एव वि लोकेषु' 'ये' सर्पणशीला दन्दशूकाद्याः प्राणिनः, 'तेभ्य एव नमस्करोति' इति मन्त्रस्य तात्पर्यार्थः। "पृथिवी मनिति लक्षणे अनोः कर्मप्रवचनीयत्वम्। मन्त्रार्थो निगदसिद्धः॥ २८

द्वितीयं मन्त्र मनूद्य व्याचष्टे— "या इषव इति। "यातुधा प्रेषिता इति। यातुधानैः राक्षसैः प्रेषिताः खलु 'एके' स 'दशन्ति' खादन्ति। "दंश दंशने" †, "दंशसञ्जस्वञ्जां शपीति नलोपः। अतस्ते 'यातुधानानाम्' 'इषवः' बाणाः, ईदृग्विध 'ये' सर्पाः, 'ये वा वनस्पतींरनु' अनुलक्ष्य वनस्पतिषु वर्त्तन्ते 'अवटेषु' बिलेषु शेरते ये सर्पाः, 'तेभ्यः सर्पेभ्यो नमः'-इत्यनं मन्त्रेण नमस्कारः क्रियत इत्यर्थः॥ २९॥

तृतीयं सर्पनाम मन्त्र मनूद्य मन्त्रत्रयतात्पर्यं व्याचष्टे— वामीति। सर्वत्र 'वा'-शब्दश्चार्थे। 'दिवः' द्युलोकस्य सम्बन्धि 'रोचने' रोचमाने स्थाने, 'ये' चामी सर्पाः 'सूर्यस्य रश्मिषु' वर्त्तन्ते, 'येषां' सर्पाणाम् 'अप्सु' उदकमध्ये 'सदः' सदनं स्था 'कृतम्' अस्ति, 'तेभ्यः सर्पेभ्यो नम इति'।

"यत्र-यत्रेत्यादि, मन्त्रत्रयतात्पर्यकथनम् §। 'यत्र यत्र' देशे 'ए सर्पन्ति वर्त्तन्ते, 'सत्' तत्रैव 'एभ्यः' सर्पेभ्यो नम इति। त्रिष्व मन्त्रेषु पठितानां नमः-शब्दानां सङ्ख्यार्था पुनरुक्तिः— 'न

* वा० सं० १३. ६।

† 'न-लोपे सन्निधाहचर्याद् श्नादेरेव ग्रहणम्'—इत्याहेह दीक्षित।

‡ पा० सू० ६. ४. २५।

§ वा० सं० १३. ६—८।

म इति'-इति। पुनःपुनर्नमःशब्दप्रयोगेण 'एतन्नमस्करोति'। नमस्कारं स्तौति— "यज्ञो वै नम इति। देवतोद्देशेन द्रव्यत्यागो 'यज्ञः'। स यथा देवानां प्रीतिकरः, तद्वन्नमस्कारोऽपीति तस्य यज्ञात्मकता। तथा च यज्ञात्मकेनैव नमस्कारेण 'एनान्' सर्पान् 'नमस्यति' पूजयति। नमसः पूजाया मर्थे "नमो वरिव इति * क्यच्। प्रासङ्गिकं किञ्चिदाह— "तस्मादिति। यस्मादेवं नमस्कारप्रतिपादको नमःशब्दोऽपि यज्ञात्मकः प्रयुज्यते, तस्मादेव कारणात् 'अयज्ञियं' यज्ञानर्हं हे देवदत्त! नमस्तुभ्य मित्येवं 'न ब्रूयात्'। तस्य वचनस्य यज्ञियत्व माविष्करोति— "यथा हैन मिति। 'यथा' खलु 'एनम्' अतिथिं 'ब्रूयात्' "यज्ञस्ते" कल्पितः 'इति', 'तादृक् तत्' सदृश मेव तत् नमस्त इति वचनम्॥ ३०॥

मन्त्रस्य त्रिसङ्ख्या मुपजीव्य † स्तौति— "त्रिभिरुपतिष्ठत इति ‡। 'त्रय इमे लोकाः' पृथिव्यादयः, अतस्तत्सङ्ख्यया मन्त्रत्रित्व मित्यर्थः। "अथो त्रिवृदग्निरित्यादिना मन्त्रत्रित्वस्य प्रयोजनान्तरप्रतिपादनम्। "त्रिवृदग्निरित्यादि, प्राग् व्याख्यातम्। "तावतैवास्मा इति। 'अस्मै' हिरण्मयपुरुषाय 'तावता' तस्याग्नेः परिमाणेनैव 'इमान् लोकान्' 'एतत्' एतेनोपस्थानेन 'स्थापयति'। 'अथो' अपि च 'तावता' तत्परिमाणेनैव 'इदं' 'सर्वं' जगत् तेनोपस्थानेन 'शमयति'॥

---

* पा० सू० ३. १. १६।

† वा० सं० १३. ६—८।

‡ का० श्रौ० सू० १७. ४. ६।

तच्चोपस्थानं तिष्ठता कर्त्तव्य मिति स्थितिगुणं विधाय स्तौति— "तिष्ठन्नुपतिष्ठत इति। ऊर्द्धाकारेणावस्थानात् 'तिष्ठन्तीव' 'इमे लोकाः', 'अथो' अपि च उपविष्टात् पुरुषात् 'तिष्ठन्' खलु पुरुषो 'वीर्यवत्तरः' अतिशयितवीर्यवान्। तस्मादुपस्थाने तिष्ठत्कर्तृकता युक्तेत्यर्थः ॥ २१ ॥

अभिहोमं विधत्ते— "अथैन मिति। उपस्थानानन्तर्यम् 'अथ'-शब्दार्थः। 'एनं' हिरण्मयपुरुषम् 'अभिजुहोति' अभितः सर्वासु दिक्षु उपरि होमेन संस्कुर्यात्। तत्र विधत्ते— "आज्येनेति। आहुतिपञ्चकार्थं पञ्चगृहीत माज्यं स्रुचि गृहीत्वा, तेनाभिजुहुयादित्यर्थः *। "तस्योक्त इति 'तस्य' पञ्चसङ्ख्यायुक्तत्वस्य स्तावको वाक्यशेषः प्रागाम्नात इत्यर्थः ॥

"सर्वतः परिसर्प मिति। 'सर्वतः' सर्वासु दिक्षु 'परिसर्पं' परिसृप्य तां तां दिशं परिक्रम्य। "आभीक्ष्ण्ये णमुल् च" †। परिसर्पणस्य प्रयोजन माह— "सर्वाभ्य इति। 'सर्वाभ्यो दिग्भ्यः' प्रकाशात् 'एनं' पुरुषम्। गत मन्यत् ॥ २२ ॥

मन्त्रविध्यर्थ मनुवदति— "यद्वेवैन मिति। "हिरण्यपाज इत्याद्यान् ‡ राचोघ्नान् पञ्च मन्त्रान् विधातु माख्यायिका माह— "एतद्वै देवा इति। "यद्वै न इम मिति। 'न

---

* का० श्रौ० सू० १७. ४. ७।

† पा० सू० ३. ४. २२।

‡ वा० सं० १३. ९—१३।

अस्माकम् 'इमम्' आत्मानम् 'इह' अस्मिन्नवसरे 'नाष्ट्राः रक्षांसि' 'यत्' येनोपायेन न हन्युः', स उपायः क इति विचारितवन्त इत्यर्थः। "राक्षोघ्नान् प्रतिसरानिति। राक्षसान् प्रति अस्त्र-रूपेण सरन्ति गच्छन्ति इति 'प्रतिसराः' कृणुष्व पाज इत्याद्या मन्त्राः *। अत एव रक्षोहननसम्बन्धात् 'राक्षोघ्नाः'; 'वै'-शब्दः प्रसिद्धौ। सा च "अस्तासि विध्य रक्षसस्तपिष्ठैरित्यादिमन्त्रवर्णा-दवसेया †। "तथैवैतदित्यादिना। उक्तार्थदृष्टान्तमुखेनाभिहोम-मन्त्रविधिः। मन्त्रद्वारा रक्षोहननहेतुतां प्रतिपाद्य द्रव्यमुखे-नापि तत् प्रतिपादयति— "वज्रो वा इति। "घृतं खलु वै देवा वज्रं कृत्वा सोम मघ्नन्निति ‡ तैत्तिरीयके प्रसिद्धं घृतस्य वज्ररूपत्व मत्र 'वै'-शब्दो द्योतयति। यद्वा आज्य-स्याग्निज्वालाहेतुत्वात् वज्रत्वम्। "पञ्चर्त्तवः संवत्सर इति। हेमन्तशिशिरयोः समासाभिप्रायेण §। "तावतैवैतद्रक्षांसीति। यत्परिमाणविशिष्टश्चित्योऽग्निः, तावत्परिमाणेन 'एतद्' एतेन कर्मणा 'नाष्ट्रा रक्षांसि' नाशयति। मन्त्रदेवताद्वारेण प्रशंसति— "आग्नेयीभिरिति। अग्निर्देवता यासां ता आग्नेय्यः, "अग्ने-र्ढक्" ‖, "टिड्ढाणञ्"- इति ¶ ङीप्॥

---

* वा० सं० १३. ६—१३।

† ऋ० सं० ४. ४. १।

‡ तै० सं० ६. २. २. ७।

§ ऐ० ब्रा० १. १. १ द्रष्टव्यम्।

‖ पा० सू० ४. २. ३३।

¶ पा० सू० ४. १. १५।

छन्दोद्वारेण स्तौति— "त्रिष्टुब्भिरिति। "वज्रो वै त्रिष्टु-बिति। इन्द्रेण सहोत्पन्नत्वाद् वीर्योपेतात्, प्रजापत्यवयवा-दुत्पत्तेश्च त्रिष्टुभो वज्रत्वम् ॥

परिसर्पणप्रकारं विधित्सुर्विहितं परिसर्पण मनूद्य स्तौति— "सर्वत: सरिसर्प मिति। उक्तार्थं मेतत् * ॥ ३४ ॥

"पश्चादग्नेरित्यादिना परिसर्पण प्रकारो निरूप्यते। 'अग्ने' प्रथमं 'पश्चात्' प्रतीच्यां दिशि प्राङ्मुख उपविष्टः सन्, प्रथमेन मन्त्रेण पुरुष मभिजुहोति। अथोत्तरभागे दक्षिणामुख उप-विष्टः सन्, द्वितीयेन मन्त्रेणाभिजुहोति। 'अथ पुरस्तात्' प्राच्यां दिशि प्रत्यङ्मुख उपविष्टः सन्, तृतीयेन मन्त्रेण। 'अथ' यथेतं प्रतिनिवृत्य 'जघनेन परीत्य', पुरुषस्य पश्चाद् भागेन परिक्रम्य, 'दक्षिणत:' दक्षिणस्यां दिशि उदङ्मुख उपविष्टः, चतुर्थेन मन्त्रेणाभिजुहोति। "तद्दक्षिणावृदिति † एवं क्रियमाणे सति होमस्य प्रादक्षिण्येन वृत्तिरुपपन्ना भवति। 'तत्' खलु प्रादक्षिण्यं 'दैवत्रा' देवसम्बन्धिनि कर्मणि योग्यम्, 'अथ' अनन्तरम् 'अनुपरीत्य' दक्षिणदिक्प्रदे-शात् प्रतीचीं दिशं गत्वा, तत्र 'प्राङासीन:' पञ्चमेन मन्त्रे-णाभिजुहुयात् ‡। तथैव सति हि 'अस्य' यजमानस्य 'एतत्' अग्निहोमाख्यं 'कर्म' प्रागपवर्गं 'कृतं' 'भवति' इत्यर्थ: ॥ ३५ ॥

---

* इहैव पुरस्तात् (२६८पृ० १३ पं०) द्रष्टव्यम्।

† का० श्रौ० सू० १७. ४. ८।

‡ का० श्रौ० सू० १७. ४. ६, १०।

स्रुचोरुपधानं विधत्ते— "अथ स्रुचाविति *। तत् प्रशंसति — "बाहू वा इति। "जुहूर्दक्षिणो हस्तः, उपभृत् सव्यः" -इत्यादिश्रुत्यन्तरप्रसिद्धेः † स्रुचोर्बाहुरूपता। तथा सति 'एतत्' स्रुगुपधानेन 'अस्मिन्' हिरण्मयपुरुषे 'बाहू एव' 'प्रतिदधाति' सन्दधाति। स्रुचोर्बाहुरूपताप्रसिद्धि मभिनयेन दर्शयति— "इद मेवेति। 'इद मेव' हस्ताग्रं प्रसृतिरूपेण ‡ दृश्यमानं 'कपुत्सलम्' § स्रुगग्रस्थानीयम्। 'अयम्' एव बाहुः 'दण्डः' स्रुक्दण्डः; अतः स्रुग्रूपता अनयोः प्रत्यक्षसिद्धेत्यर्थः। द्विव मनूद्य स्तौति— "द्वे भवत इति। दक्षिणोत्तरपार्श्वयो-स्तदुपधानं विधत्ते— "पार्श्वत इति। तत्र हेतु माह— "पार्श्वतो ह्येति ॥ २६ ॥

तत्र दक्षिणपार्श्वे उपधेयायाः स्रुचो वृक्षविशेषं विधत्ते— "कार्ष्मर्यमयी मिति ‖। कार्ष्मर्यवृक्षेण निर्मिता स्रुक् कार्ष्मर्य-मयी। स्रुचस्तत्प्रकृतिता माख्यायिकया प्रतिपादयति— "एतद्वा इत्यादिना। "वनस्पति मपश्यन्निति। कार्ष्मर्याख्यं वनस्पति मिति सम्बन्धः। सिद्ध मन्यत्। स्रुच आज्येन पूरणं विधाय स्तौति— "आज्येन पूर्णा भवतीति ॥ २७ ॥

उत्तरपार्श्वे उदुम्बरवृक्षकृतायाः स्रुच उपधानं विधत्ते—

* का० श्रौ सू० १७. ४. ११।

† तै० ब्रा० ३. ३. १।

‡ 'मुष्टिरूपेण'—इति ज-पाठः।

§ 'कपत्सलं'—इति ङ-पाठः।

‖ का० श्रौ० सू० १७. ४. १२।

"अथौदुम्बरी मुत्तरत इति *। "ऊर्ध्वा इत्यादि, प्रागुक्तार्थम्। उपधानसमये दध्ना तस्याः पूरणं विधाय स्तौति— "दध्ना पूर्णा भवतीति। "रसो वै दधीति। पयस ओषधिसाररसात्मकत्वात् दध्नोऽपि रसात्मकत्वम् ॥ ३८ ॥

स्रुचोरुपधान मनूद्य तयोर्बाहुरूपतां वक्तुं तावत् तदुपादानयोर्वृक्षयोरुत्पत्ति माह— "यद्वैवेत्यादिना। विश्लिष्टावयवस्य 'प्रजापतेस्तेजः' 'आदाय' गृहीत्वा 'अग्निः' दक्षिणतः 'अकर्षत्' अनैषीत्। 'सः' अग्निः अत्र अस्मिन् कार्ष्मर्यवृक्षे 'उदरमत्' उत्कर्षेणारमत्, सुख मवाप्सीदित्यर्थः। "यत् कृष्टेत्यादिना कार्ष्मर्यनामनिरुक्तिः। कृषेर्धातोः रमेश्च कार्ष्मर्यशब्दनिष्पत्तिर्वर्णविकारेण द्रष्टव्या। 'अथ' अग्निगमनानन्तरम्, 'अस्य' विस्रस्तावयवस्य प्रजापतेः सम्बन्धि 'ओजः' आन्तरं वीर्यं 'इन्द्रः' 'आदाय' स्वीकृत्य 'उदङ्' उत्तरामुखः सन् उत्तरभागे 'उदक्रामत्'। उत्क्रम्य 'सः' 'उदुम्बरः' वृक्षो जातः ॥ ३९ ॥

"ताव्रवीदिति। ततः 'तौ' अग्नीन्द्रौ प्रजापतिः 'अब्रवीत्'। 'मा उपेतं' मा मुपगच्छतम्, 'एतत्' मदीय मङ्गं 'प्रतिधत्तं' पुनःसन्धानेन संस्कुरुतम्। 'येन' कारणेन 'मे' मदीयशरीरात् 'युव मुदक्रमिष्टम्'। 'इति'–शब्दः प्रजापतिवाक्यपरिसमाप्तौ। "ताभ्या मित्यादि तयोरग्नीन्द्रयोर्वाक्यम्। "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः" –इति † चतुर्थ्यन्तस्यात्र 'नौ'–भावः। हे प्रजापते! 'ताभ्यां' खलु

---

* का० श्रौ० सू० १७. ४. १३।

† पा० सू० ८. १. २०।

[त]वाभ्यां 'सर्वं मन्नं प्रयच्छ', तद्यावां त्वा मुपगच्छावेति। पुनः [प्र]जापतिरब्रवीत्— हे अग्नीन्द्रौ! युवां 'बाहू भूत्वा' मां 'प्रप-[द्ये]थां' प्रविशतम् 'इति'। 'तौ' अपि 'तथा' अस्तु 'इति' ब्रूताम्। [ए]वं तौ वशीकृत्य प्रतिज्ञातप्रकारेण 'सर्वं मन्नं 'ताभ्यां' प्रजापतिः 'प्रायच्छत्'। 'तौ' अप्यग्नीन्द्रौ 'बाहू' हस्तौ 'भूत्वा', 'एनं' प्रजापतिं 'प्रापद्येतां' प्राप्तवन्तौ। 'हि' यस्मात् प्रजापतिरुत्क्रमेण 'सर्वं मन्नम् प्रायच्छत्', तस्मादेव कारणादन्ननिष्पादन मन्नादनञ्च बाहुकरणकं लोके दृश्यत इत्यर्थः॥ ४०॥

इत्थं कार्ष्मर्यौदुम्बरयोरुत्पत्तिम्, अग्नेरिन्द्रस्य च बाहु-रूपताञ्च प्रतिपाद्य, तदुपजीवनेन आग्नेयमन्त्रेण कार्ष्मर्य-मय्या उपधानं विधत्ते— "स कार्ष्मर्यमयी मिति। यत् तेज आदाय अग्निर्निरगात्, ते अग्नेः सम्बन्धिना प्रजापति-शरीरतेजसा त्वां सादयामीति मन्त्रार्थः *। "तदस्मिन्नेतदिति। 'तत्' तेन मन्त्रेण 'एतत्' तेजः 'अस्मिन्' चित्याग्निरूपे प्रजा-पतौ 'प्रतिदधाति' सन्दधाति। अथ तस्मिन्नेव कार्ष्मर्यमय्यु-पधाने मन्त्रान्तर मपि दर्शयति— "अग्निर्मूर्द्धेति †। 'एष उ सोऽग्निरिति। 'सः' प्रतिपाद्यो यः 'अग्निः', 'एषः' चित्योऽग्नि-रेवेत्यर्थः॥

अस्य मन्त्रस्य छन्दोऽनूद्य स्तौति— "गायत्रेति। उप-दध्यादिति शेषः। "गायत्रोऽग्निरित्यादि गतम्। घृतेन पूरण मनूद्य स्तौति—"घृतेन पूर्णेति। घृतस्याग्नेयत्वं प्रागुक्तम्॥ ४१॥

* वा० सं० १३. १३. २।।

† वा० सं० १३. १४।

एवं दक्षिणभागे काश्मर्यमय्युपधान मुक्त्वा तथैवोत्त
भागे औदुम्बर्युपधान मिन्द्रदेवत्येन यजुषा कर्त्तव्य मित्याह
"अथौदुम्बरी मिति *। निगदसिद्धोऽर्थः। 'अस्मिन्' औ
म्बर्युपधाने मन्त्रान्तरं विधत्ते— "भुवो यज्ञस्येति †। "
उ स इन्द्र इति। 'एषः' खलु चित्योऽग्निः 'सः' प्रसि
मन्त्रप्रतिपाद्यः 'इन्द्रः'। "सा यदित्यादि। 'सा' भुवो य
स्येति ऋक्, यस्मात् 'आग्नेयी' अग्निदेवताका, तस्मादि
अग्निकर्म' ‡ सम्पन्नम्। कथं तर्हि तस्या ऐन्द्रे औदुम्बर्यु
पधाने विनियोग इत्यत आह— "अथ यत् त्रिष्टुबिति। यत्
सा ऋक् त्रिष्टुप्छन्दस्का, तस्मादैन्द्रे कर्मणि विनि
मर्हति। यस्मादिन्द्रस्त्रिष्टुप्छन्दसा सहोत्पन्नः ‡, अभि
द्वया छन्दोद्वारेण च मन्त्रस्योपाधिसिद्ध मिन्द्राग्निदे
कत्वं प्रशंसति— "ऐन्द्राग्नोऽग्निरिति। एतदेव विवृणोति
"इन्द्राग्नी वै सर्वे देवा इति। इन्द्रस्याधिपतित्वात्
देवतात्मत्वम्, अग्नेरपि सर्वान् देवान् प्रति हविषो वह
सर्वदेवात्मकता। यद्वा, इन्द्रस्य प्राथम्यादग्नेश्चरमभावित
तदन्तवर्त्तिनः सर्वे देवा इति इन्द्राग्न्योः सर्वदेवतात्मकत्व
"अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा
देवताः"-इत्यनेन § समानन्यायात्। चित्याग्निश्च सर्वदेव
सर्वदेवताप्रीतिकरः। "यावानग्निरित्यादि, गतम्॥

* का० श्रौ० सू० १७. ४. १३।
† वा० सं० १३. १५।
‡ तै० सं० ७. १. १. ४। § ऐ० ब्रा० १. १. १

दध्ना पूरण मनूद्य स्तौति— "दध्ना पूर्णेति * । "ऐन्द्रं वा इत्यादि । 'ऐन्द्रम्' इन्द्रदेवत्यं खलु 'दधि'; दर्शयागे इन्द्रं प्रति दध्नो हविष्ट्वेन दीयमानत्वात् । अत एव दर्शयागविधिः श्रूयते— "ऐन्द्रं दध्यमावास्याया मिति † । "स्वेन रसेनेति । इन्द्रस्य स्वकीयो रसः सान्नाय्यम् । वृत्रवधानन्तरं शरीराद्विर्गतस्य, पृथिव्या मोषधिवीरुदात्मना परिणतस्य, पशुभिर्भक्षणीमालभ्याहृतस्य, इन्द्रसम्बन्धिनो वीर्यस्यैव पयोरूपेण परिणामात्तद्विकृतिभूतं दध्यपि परम्परया इन्द्रस्य स्वकीयो रसः । एतत् श्रुत्यन्तरे— "इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्य मित्यादिना प्रपञ्चितम् ‡ । 'प्रीणाति' तर्पयति । 'प्रीञ् तर्पणे"-इति § धातुः ॥ ४२ ॥

"तावस्यैताविित्यादि । 'तौ' तथाविधौ 'एतौ' 'इन्द्राग्नी' एव 'अस्य' प्रजापतेः 'बाहू' अभूताम् । भूत्वा च 'तौ' तेजसा अग्निसम्बन्धिना प्रकाशेन, इन्द्रसम्बन्धिना 'वीर्येण' 'च' 'सह' 'प्रपद्येते' प्राप्नुतः । स्रुचोरुपधाने च स्थानविशेष माह— "स सम्मतीति ‖ । 'सः' अध्वर्युः उपहितस्य हिरण्मयपुरुषस्य 'उरः सम्मति' उरःप्रदेशेन समानं स्रुचौ उपदध्यात् । तत् कथ मिति चेत् उच्यते— तं 'पुरुषम्' 'आकाश्य' अभिप्राप्य 'यच्च'

* का० श्रौ० सू० १७. ४. १३ ख ।

†, ‡ तै० सं० २. ५. ३. ३, ५ ।

§ क्रा० उ० २ धा० ।

‖ का० श्रौ० सू० १७. ४. १० क ।

यस्मिन् स्थाने उपहितं स्रुग्द्वयम्, तदुरःप्रदेशम् 'अभ्याप्नोति' 'तत्' तत्र 'आलिख्य' चिह्नं कृत्वा, 'एने' स्रुचौ उपदध्यात्* 'एषः' य उरोदेशः स खलु 'एतयोः' बाहुसंस्तुतयोः 'लोकः' स्थानमित्यर्थः ॥ ४३ ॥

तयोस्तिर्यगग्रतयोपधानं पूर्वपक्षयति— "ते हैक इति 'तिरश्ची' तिर्यगग्रे, 'तिर्यञ्चौ वा' इति †; तत्रोपपत्ति कथनम्। तदेतत् प्रतिषिध्य प्रागग्रत्वं सिद्धान्तयति— "न तथा कुर्यादित्यादिना। तत्रोपपत्तिं कथयति— "प्राङ् ह्येष इति प्राक्शिरस्कः खलु 'एषोऽग्निश्चीयते' तदवयवयोर्बाहुसंस्तुतयोः स्रुचोरपि प्रागग्रतैव युक्तेति भावः। 'अथो' अपि च 'एवं' प्राञ्चौ प्रसारितावेव खलु 'बाहू' 'वीर्यवत्तरौ' अतिशयेन वीर्यवन्तौ‡ स्थापनसादनाधिवदनानां पृथक्त्वं विधाय स्तौति— "ते नानो दधातीति। स्पष्टोऽर्थः ॥ ४४ ॥

एतस्योपहितस्य हिरण्मयपुरुषस्य स्रुग्व्यतिरिक्तबाहुकर पूर्वपक्षयति— "तदाहुर्नैतस्येति। 'एतस्य' उपहितस्य हि रण्मयपुरुषस्य। "एतौ वा अस्येति। 'ये एते स्रुचौ' उपहि ते च खलु 'अस्य बाहू' स्रुग्व्यतिरिक्तबाह्वोरपि करणे अ काङ्क्षता स्यात्; 'नेत् अतिरेचयानि' नैवातिरिक्तं करवाणी पूर्वपक्षिणोऽभिप्रायः। "स वै कुर्यादेवेत्यादिः, सिद्धान्तः। खलु अध्वर्युः स्रुग्व्यतिरिक्तावपि पुरुषस्य बाहू 'कुर्यादेव'। त

---

* का० श्रौ० सू० १७. ४. १० ख।

† का० श्रौ० सू० १७. ४. १४।

‡ 'अतिशयितवीर्यवन्तौ'—इति च-पाठः।

हेतु माह— "एतौ वा अस्येति। 'अस्य' पुरुषस्य सम्बन्धिनौ 'बाहू' अनुलक्ष्य 'एतौ' * स्रुचौ उपधातव्ये ; अतो न तत्प्रतिनिधिरिति तयोरनिवृत्तिः ॥

बाह्वोः सद्भावं प्रकारान्तरेणोपपादयति— "अथो एताविति। 'अथो' अपि च 'एतौ' बाहू 'पक्षौ' पक्ष्यात्मनश्चित्याग्नेः पक्षस्थानीयौ। संस्कारस्य संस्कार्यं मन्तरेणानुपपत्तेः संस्कार्यौ बाहू अवश्यं कर्त्तव्यावित्याह— "अथो यान्येतस्मिन्नित्यादिना। 'रूपाणि' अग्निरूपाणि पशुशीर्षादीनि, 'स्तोमाः' त्रिवृत्पञ्चदशादयः †, बृहद्रथन्तरादीनि पृष्ठानि ‡, 'छन्दांसि' गायत्रादीनि। एते च स्तोमादयः स्वस्वलिङ्गैर्मन्त्रैरिष्टकारूपेणोपधेयाः। यान्येतानि पशुशीर्षादीनि, तानि सर्वाण्यध्वर्युः 'उपधास्यन् भवति'। 'एतयोरेव' पक्षसंस्तुतयोः बाह्वोः 'सा' 'संस्कृतिः' गुणोत्कर्षहेतुः संस्कारः, 'एतयोः' 'वृद्धिः' अभिवृद्धिहेतुः। "तस्मादित्यादि, स्पष्टम् ॥ ४५ ॥ १ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे चतुर्थेऽध्याये प्रथमं ब्राह्मणम् ॥

---

* 'अनुलक्ष्येते'—इति ज-पाठः।
† ते च सा० ता० ब्रा० तृतीयप्रपाठकारम्भतो द्रष्टव्याः।
‡ तानि सामानि ऊह्यगानारम्भतो द्रष्टव्यानि।

(अथ द्वितीयं ब्राह्मणम्.)

स्वयमातृण्णा मुपदधाति। इयं वै स्वयमातृण्णेमा मेवैतदुपदधाति ता मनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वा ऽअन्न मस्याᳪ हि सर्व्व मन्नं पच्यते ऽनन्तर्हित मेवास्मादेतदन्नं दधात्युत्तरा मुत्तर मेवास्मादेतदन्नं दधाति ॥ १ ॥

यद्वेव स्वयमातृण्णा मुपदधाति। प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत् स्वय मात्मन ऽआतृन्ते प्राण मेवैतदुपदधाति ता मनन्तर्हितां पुरुषादुपदधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किञ्च प्राणीयं तत् सर्वं बिभर्त्यनन्तर्हित मेवास्मादेतत् प्राणं दधात्युत्तरा मुत्तर मेवास्मादेतत् प्राणं दधाति ॥ २ ॥

यद्वेव स्वयमातृण्णा मुपदधाति। प्रजापतिं व्विस्रस्तं देवता ऽआदाय व्युदक्रामंस्तासु व्युत्क्रामन्तीषु प्रतिष्ठा मभिपद्योपाविशत् ॥ ३ ॥

स यः स प्रजापतिर्व्यस्रꣳसत । अय मेव स यो-ऽय मग्निश्चीयतेऽथ या सा प्रतिष्ठैषा सा प्रथमा स्वय-मातृण्णा तद्यदेता मत्रोपदधाति यदेवास्यैषात्मन*-स्तदस्मिन्नेतत् प्रतिदधाति तस्मादेता मत्रोपदधाति ॥ ४ ॥

तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवै-तत् स्वयमात्मनः प्रत्यधत्त ध्रुवासीति स्थिरासीत्ये-तदथो प्रतिष्ठितासीति धरुणेति प्रतिष्ठा वै धरुण मास्तृता व्विश्वकर्म्मणेति प्रजापतिर्व्वै व्विश्वकर्म्मा तेनास्तृतासीत्येतन्मा त्वा समुद्र उद्वधीन् मा सुपर्ण इति रुक्मो वै समुद्रः पुरुषः सुपर्णस्तौ त्वा मोद्वधिष्टा मित्येतदव्यथमाना पृथिवीं दृꣳहेति यथैव यजुस्तथा बन्धुः ॥ ५ ॥

प्रजापतिष्ट्वा सादयत्विति । प्रजापतिर्ह्येतां प्रथमां चितिं मपश्यदपां पृष्ठे समुद्रस्येमन्नित्यपाꣳ ह्येयं पृष्ठꣳ समुद्रस्य ह्येय मेम व्यचस्वतीं प्रथस्वती

* '०स्यैष आत्मन' – इति सा०-सम्मतो दृष्टश्च डा०-वेबरमहोदयेन।

मिति व्यचस्वती च ह्ययं प्रथस्वती च प्रथस्व पृथिव्यसीति प्रथस्व पृथिवी चासीत्येतत् * ॥ ६ ॥

भूरसीति । भूर्हीयं भूमिरसीति भूमिर्हीयं मदितिरसीतीयं वा ऽअदितिरियꣳ हीदꣳ सर्व्वं ददते व्विश्वधाया इत्यस्याꣳ हीदꣳ सर्वꣳ हितं व्विश्वस्य भुवनस्य धर्त्रीति सर्व्वस्य भुवनस्य धर्त्री त्येतत् पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीरित्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥ ७ ॥

व्विश्वस्मै प्राणायापानाय । व्यानायोदानायेति प्राणो वै स्वयमातृण्णा सर्व्वस्मा ऽउ वा ऽएतस्मै प्राणः प्रतिष्ठायै चरित्रायेतीमे वै लोकाः स्वयमातृण्णा इम ऽउ लोकाः प्रतिष्ठा चरित्र मग्निष्ट्वाभिपात्वित्यग्निष्ट्वाभिगोपायत्वित्येतन् मह्या स्वस्त्येति महत्या स्वस्त्येत्येतच्छर्दिषा शन्तमेनेति यच्छर्दिः शन्तमं तेनेत्येतत् सादयित्वा सूददोहसाधिवदति

* 'चासीत्येतत्' — इति ग, घ ।

यथोक्तो बभ्रुरथ साम गायति तस्योपरि बभ्रुः ॥ ८ ॥

तदाहुः । कथ मेष पुरुषः स्वयमातृण्णयानभिनिहितो भवतीत्यन्नं वै स्वयमातृण्णा प्राणः स्वयमातृण्णानभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च ॥ ९ ॥

अथ दूर्व्वेष्टका मुपदधाति । पशवो वै दूर्व्वेष्टका पशूनेवैतदुपदधाति तद्यैदोऽग्निरनन्तर्हितैः पशुभिरुपैत्त्र्ऽएते तानेवैतदुपदधाति ता मनन्तर्हिताऽ स्वयमातृण्णाया उपदधातीयं वै स्वयमातृण्णानन्तर्हितांस्तदस्यै पशून्दधात्युत्तरा मुत्तरांतदस्यै पशून् दधाति ॥ १० ॥

यद्वेव दूर्व्वेष्टका मुपदधाति । प्रजापतेर्व्विस्रस्तस्य यानि लोमान्यशीयन्त ता इमा ओषधयोऽभवन्नथास्मात् प्राणो मध्यत उदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत * ॥ ११ ॥

* '०ऽपद्यत'—इति ख, '०ऽपद्यत'—इति ग, घ ।

सोऽब्रवीत् । अयं व्याव माधूर्वीदिति यद-
ब्रवीद्धूर्व्वीन् मेति तस्माद् धूर्व्वा धूर्व्वा ह वै ता
दूर्व्वेत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तं
तत् क्षत्रं प्राणो ह्येष रसो लोमान्यन्या ओषधय
एता मुपदधत् सर्व्वा ओषधीरुपदधाति ॥ १२ ॥

तं यत्र देवाः समस्कुर्व्वन् । तदस्मिन्नेतं प्राण
रसं मध्यतोऽदधुस्तथैवास्मिन्नय मेतद्दधाति ता मनन्त
र्हिताः स्वयमातृण्णाया उपदधातीयं वै स्वयमातृ
ण्णानन्तर्हितास्तदस्या ऽओषधीर्दधात्युत्तरा मुत्तरा
स्तदस्या ऽओषधीर्दधाति सा स्यात् समूला साग्रा
कृत्स्नतायै यथा स्वयमातृण्णाया मुपहिता भूमि
प्राप्नुयादेव मुपदध्यादस्याᳫं ह्येवैता जायन्त ऽइमा
मनु प्ररोहन्ति ॥ १३ ॥

काण्डात् काण्डात् प्ररोहन्ती । परुषः परुष
स्परीति काण्डात् काण्डाद्ध्येषा पर्व्वणः पर्व्वणः
प्ररोहत्येवा नो दूर्व्वे प्रतनु सहस्रेण शतेन चेति
यथैव यजुस्तथा बन्धुः ॥ १४ ॥

या शतेन प्रतनोषि । सहस्रेण विरोहसीति

शतेन ह्येषा प्रतनोति सहस्रेण विरोहति तस्यास्ते देवीष्टके विधेम हविषा वय मिति यथैव यजुस्तथा बन्धुर्द्वाभ्या मुपदधाति तस्योक्तो बन्धुः सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ १५ ॥

अथ द्वियजुष मुपदधाति। इन्द्राग्नी ऽअकामयेताᳫं स्वर्गं लोक मियावेति तावेता मिष्टका मपश्यतां द्वियजुष मिमा मेव ता मुपादधातां ता मुपधायास्यै प्रतिष्ठायै स्वर्गं लोक मैतां तथैवैतद्यजमानो यद् द्वियजुष मुपदधाति येन रूपेण यत् कर्म्म कृत्वेन्द्राग्नी स्वर्गं लोक मैतां तेन रूपेण तत् कर्म्म कृत्वा स्वर्गं लोक मयानीति सा यद् द्वियजुर्नाम द्वे ह्येतां देवते ऽअपश्यतां यद्वेव द्वियजुष मुपदधाति यजमानो वै द्वियजुः ॥ १६ ॥

तदाहुः। यदसावेव यजमानो योऽसौ हिरण्मयः पुरुषोऽथ कतमदस्येदᳫं रूप मिति दैवो वा ऽअस्य स आत्मा मानुषोऽयं तद्यत् स हिरण्मयो भवत्यमृतं वा ऽअस्य तद्रूपं देवरूप ममृतᳫं

हिरण्य मथ यदियं मृदः कृता भवति मानुष ह्यस्येदꣳ रूपꣳ * ॥ १७ ॥

स यदमू मेवोपदध्यात् † । नेमा मपशिꣳष्या त्क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयादथ यदिमा मपशि नष्टि यदेवास्येदं मानुषꣳ रूपं तदस्यैतदपशिन तथो हानेनात्मना सर्व्व मायुरेति ॥ १८ ॥

स यन्नानूपदध्यात् । न हैतं दैव मात्मान मनु प्रजानीयादथ यदनूपदधाति तथो हैतं दैव मा त्मान मनुप्रजानाति ता मनन्तर्हितां दूर्व्वेष्टकाया उप दधाति पशवो वै दूर्व्वेष्टका यजमानं तत् पशु प्रतिष्ठापयति ॥ १९ ॥

तदाहुः । कथ मस्यैतावात्मानौ प्राणेन सन् तावव्यवच्छिन्नौ भवत इति प्राणो वै स्वयमातृ प्राणो दूर्व्वेष्टका यजमानो ह्ययजुः स यदनन्तर्हिताꣳ स्वयमातृण्णायै दूर्व्वेष्टका मुपदधाति प्राणेनैव तत्

* 'रूपꣳ' – इति ग, घ ।

† 'मेवोपदध्यत्' – इति ग, घ ।

प्राणꣳ सन्तनोति सन्दधात्यथ यदनन्तर्हितां दूर्वेष्टकायै द्वियजुष मुपदधाति प्राणो वै दूर्वेष्टका यजमानो द्वियजुरेव मु हास्यैतावात्मानौ प्राणेन सन्ततावव्यवच्छिन्नौ भवतः ॥ २० ॥

यास्ते ऽअग्ने सूर्ये रुचो*। या वो देवाः सूर्ये रुच इति रुचꣳ रुच मित्यमृतत्वं वै रुगमृतत्व मेवास्मिन्नेतद्दधाति द्वाभ्या मुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २१ ॥

अथ रेतस्सिचा ऽउपदधाति। इमौ वै लोकौ रेतस्सिचाविमौ ह्येव लोकौ रेतः सिञ्चत इतो वा ऽअय मूर्द्ध्वꣳ रेतः सिञ्चति धूमꣳ सामुत वृष्टिर्भवति ता मसावमुतो वृष्टिं तदिमा अन्तरेण प्रजायन्ते तस्मादिमौ लोकौ रेतस्सिचौ† ॥ २२ ॥

विराड्ज्योतिरधारयदिति। अयं वै लोको विराट् स इम मग्निं ज्योतिर्धारयति स्वराड्-

* 'रुचः'—इति क, ख।

† 'रेतःसिंचौ'—इति ख।

ज्योतिरधारयदित्यसौ वै लोकः स्वराट् सो *ऽमुमादित्यं ज्योतिर्द्धारयति व्विराड् वहेमौ † लोकौ स्वराट् च नानोपदधाति नाना ह्येमौ लोकौ सकृत्सादयति समानं तत् करोति तस्मादु हानयो र्लोकयोरन्ताः समायन्ति ॥ २३ ॥

यद्वेव रेतस्सिचा ऽउपदधाति । आण्डौ वै रेतस्सिचौ यस्य ह्याण्डौ भवतः स एव रेतः सिञ्चति व्विराड्ज्योतिरधारयत् स्वराड्ज्योतिरधारयदिति व्विराड् वहेमा ‡ वाण्डौ स्वराट् च तावेतज्ज्योतिर्द्धारयतो रेत एव प्रजापति मेव नानोपदधाति नाना हीमावाण्डौ सकृत्सादयति समानं तत् करोति तस्मात् समानसम्बन्धनौ तेऽअनन्तर्हिते द्वियजुष उपदधाति यजमानो वै द्वियजुरनन्तर्हितौ तद्यजमानादाण्डौ दधाति ॥ २४ ॥

---

* 'स्वराड्भ्यो०'—इति ख ।

† 'विराड् व हीमौ'—इति सा०-सम्मत इत्याह डा० वेवरः ।
'विराट् च हेमौ'—इति च पाठो दृष्टस्तेनैव ।

‡ 'विराट् च हीमा'—इति सा०-सम्मत इत्याह डा०-वेवरः ।

अथ विश्वज्योतिष मुपदधाति। अग्निर्वै प्रथमा विश्वज्योतिरग्निर्ह्येवास्मिँल्लोके विश्वं ज्योति-रग्नि मेवैतदुपदधाति ता मनन्तर्हिताᳩ रेत-स्सिग्भ्या मुपदधातीमौ वै लोकौ रेतस्सिचावनन्त-र्हितं तदाभ्यां लोकाभ्या मग्निं दधात्यन्तरेवोपद-धात्यन्तरेव हीमौ लोकावग्निः* ॥ २५ ॥

यद्वेव विश्वज्योतिष मुपदधाति। प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजनन मेवैतदुपदधाति ता मनन्तर्हिताᳩ रेतस्सिग्भ्या मुपदधात्याण्डौ वै रेतस्सिचावनन्तर्हितां तदाण्डा-भ्यां प्रजातिं दधात्यन्तरेवोपदधात्यन्तरेव ह्याण्डौ प्रजाः प्रजायन्ते ॥ २६ ॥

प्रजापतिष्ट्वा सादयत्विति। प्रजापतिर्ह्येतां प्रथमां चिति मपश्यत् पृष्ठे पृथिव्या ज्योतिष्मती मिति पृष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः† ॥ २७ ॥

---

* 'लोकावग्निः' – इति ग, घ।

† 'ज्योतिष्मानग्निः' – इति ग, घ।

विश्वस्मै प्राणायापानाय । व्यानायेति प्राणो वै विश्वज्योतिः सर्व्वस्मा ऽउ वा ऽएतस्मै प्राणो विश्वं ज्योतिर्यच्छति सर्व्वं ज्योतिर्यच्छत्येतदग्निष्टे ऽधिपतिरित्यग्नि मेवास्या अधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २८ ॥

अथऽर्त्तव्ये ऽउपदधाति । ऋतव एते यदृतव्ये ऽऋतूनेवैतदुपधाति मधुश्च माधवश्च वासन्तिकावृतू ऽइति नामनी ऽएनयोरेते नामभ्या मेवैने ऽएतदुपदधाति द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत् सादयत्येकं तदृतुं करोति ॥ २९ ॥

तद्यदेते ऽअत्रोपदधाति । संव्वत्सर एषोऽग्निरिम ऽउ लोकाः संव्वत्सरस्तस्याय मेव लोकः प्रथमा चितिरय मस्य लोको वसन्त ऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत् प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ ३० ॥

यद्वेवैते ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संव्वत्सर उ प्रजापतिस्तस्य प्रतिष्ठेव प्रथमा चितिः प्रतिष्ठो ऽअस्य वसन्त ऋतुस्तद्यदेते ऽअत्रोपदधाति

यद्देवास्यैते ऽआत्मनस्तदस्मिन्नेतत् प्रतिदधाति तस्मा-द्दैते ऽअत्रोपदधाति ते ऽअनन्तर्हिते विश्वज्योतिष उपदधाति प्रजा वै विश्वज्योतिरनन्तर्हितास्तत् प्रजा ऋतुभ्यो दधाति तस्मात् प्रजा ऋतूनेवानु-प्रजायन्त ऽऋतुभिर्ह्येव गर्भे सन्तꣳ सम्पश्यन्त्यृतुभि-र्जातम् * ॥ ३१ ॥

अथाषाढा मुपदधाति। इयं वा ऽअषाढेमा मेवैतदुपदधाति तां पूर्व्वार्द्ध ऽउपदधाति प्रथमा ह्येय मसृज्यत ॥ ३२ ॥

सा यदषाढा नाम। देवाश्चासुराश्चोभये प्राजा-पत्या अस्पर्द्धन्त ते देवा एता मिष्टका मपश्यन्नषाढा मिमा मेव ता मुपादधत ता मुपधायासुरान्सपत्नान् भ्रातृव्यानस्मात्सर्व्वस्मादसहन्त यदसहन्त तस्मादषाढा तथैवैतद्यजमान एता मुपधाय द्विषन्तं भ्रातृव्य मस्मात् सर्व्वस्मात् सहते ॥ ३३ ॥

यद्देवाषाढा मुपदधाति। वाग्वा ऽअषाढा वा-

* '०र्जातम्'—इति ग, घ।

चैव तद्देवा असुरान्त्सपत्नान् भ्रातृव्यानस्मात् सर्व्व-
स्मादसहन्त तथैवैतद्यजमानो व्वाचैव द्विषन्तं भ्रातृ-
व्य मस्मात्सर्व्वस्मात्सहते व्वाच मेव तद्देवा उपादध-
तथैवैतद्यजमानो व्वाच मेवोपधत्ते * ॥ ३४ ॥

सेयं व्वामभृत् । प्राणा वै व्वामं यद्धि किञ्च
प्राणीयं तत् सर्व्वं बिभर्त्ति तेनेयं व्वामभृद्वाग्घ ले
व्वामभृत् प्राणा वै व्वामं व्वाचि वै प्राणेभ्योऽन्न-
धीयते तस्माद्वाग्वामभृत् † ॥ ३५ ॥

त ऽएते सर्व्वे प्राणा यदषाढा । तां पूर्व्वार्द्धे ‡
ऽउपदधाति पुरस्तात्तत् प्राणान्दधाति तस्मादि-
मे पुरस्तात् प्राणास्तान्नान्यया यजुष्मत्येष्टकया पुर-
स्तात् प्रत्युपदध्यादेतस्यां चितौ नेत्प्राणानपिदधा-
नीति § ॥ ३६ ॥

यद्वपस्याः पञ्च पुरस्तादुपदधाति । अन्नं वा

* 'मेवोपधत्ते'—इति ख, 'मेवीपधत्ते'—इति ग, घ।

† '०मभृत्'—इति ग, घ।

‡ 'पूर्व्वार्द्धे'—इति, ख।

§ 'दधानीति'—इति क।

आपोऽनपिहिता वा ऽअन्नेन प्राणास्ता मनन्तर्हिता मृतव्याभ्या मुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयति सेयं व्वागृतुषु प्रतिष्ठिता व्वदति ॥ ३७ ॥

तदाहुः । यत् प्रजा व्विश्वज्योतिर्व्वागषाढाथ कस्मादन्तरेणऽर्त्तव्ये ऽउपदधातीति संव्वत्सरो वा ऽऋतव्ये संव्वत्सरेण तत् प्रजाभ्यो व्वाच मन्तर्दधाति तस्मात् संव्वत्सरवेलायां प्रजा व्वाचं प्रवदन्ति ॥ ॥ ३८ ॥

अषाढासि सहमानेति । असहन्त ह्येतया देवा असुरान्त्सहस्वारातीः सहस्व पृतनायत इति यथैव यजुस्तथा बन्धुः सहस्रवीर्यासि सा मा जिन्वेति सर्व्वं वै सहस्रꣳ सर्व्ववीर्यासि सा मा जिन्वेत्येतत् सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ३९ ॥

तदाहुः । कस्मादभिस्वयमातृण्ण मन्या इष्टका उपधीयन्ते प्राच्य एता इति द्वे वै योनी ऽइति ब्रूयाद्देवयोनिरन्यो मनुष्ययोनिरन्यः प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनुष्यास्तद्-

देता: प्राचीरुपदधाति देवयोनेर्वैतद्यजमानं प्रज-
नयति ॥ ४० ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [४. २.]॥

गते ब्राह्मणे रुक्माद्युपधानं विहितम् *, अथास्मिन् ब्राह्मणे स्वयमातृण्णादूर्वेष्टकाद्युपधानं विधास्यते। कात्यायनः,— "स्वयमातृण्णां पुरुषे शर्करां छिद्रा मिति †। पुरुषप्रयत्न मन्तरेण स्वत एव छिद्रयुक्ता, शर्करा चुद्रपाषाणविशेषः, सा स्वयमातृण्णा तां हिरण्मयपुरुषे उपदध्यात्। तदेतद् विधत्ते— "स्वयमातृण्णा मुपदधातीति। स्वयमातृण्णाख्या मिष्टका मुपदध्यादिति विधिरुन्नेयः; यथा "औदुम्बरो यूपो भवतीति। तत्र हि भवतीत्यस्य वर्त्तमानापदेशत्वात् प्रत्यक्षविधित्वासम्भवेऽपि "ऊर्ग्वै"-इत्याद्यर्थवादश्रुतस्तुत्या विधिरुन्नीयत इति निर्णीतम्।

ननु "ऊर्ग्वा उदुम्बर इत्यादिः यूपोदुम्बरस्य फलविधायकत्वात् कथ मर्थवादत्व मिति चेत्, न; अविहितस्य फलाभिधानायोगाद् विहितस्येति वक्तव्यम्; विधिश्च तस्यार्थवादत्व मन्तरेण न सम्भवतीति। अतोऽत्रापि "इयं वै"— इत्याद्यर्थवादस्य वर्त्तमानापदेशत्त्वादुन्नेतव्यो विधिः। एव मन्यत्रापि वर्त्तमानापदेशेषु अय मेव न्यायो द्रष्टव्यः।

* नास्त्येतद् वाक्यं ज-पुस्तके।

† का० श्रौ० सू० १७. ४. १५।

तस्याः स्वयमातृण्णायाः पृथिवीविकारत्वात् तदुपधानेन पृथिव्युपधान मेव सम्पादितं भवतीत्याह— "इयं वा इति।

यदुक्तं सूत्रे पुरुष इति, तद् विधत्ते— "ता मनन्तर्हिता मिति। 'ताम्' इष्टकां 'पुरुषात्' 'अनन्तर्हिताम्' अव्यवहितां, तत्सम्बद्धा मुपदध्यादित्यर्थः।

पुरुषसम्बद्धत्वेनोपधानं प्रशंसति— "अन्नं वा इति। पृथिव्यां व्रीह्यादीनां सर्वेषा मन्नानां पच्यमानत्वादन्नरूपा पृथिवी, स्वयमातृण्णा च पृथिवीत्युक्तम्; अतश्च पुरुषसम्बन्धेनोपधानेन तस्मिन्नन्न मेव निहितवात् भवति।

अनन्तर्हित मित्युक्तत्वात् क्वचित् तत्पार्श्वे संश्लेषेणाप्यव्यवधान मुपपद्यत इत्यत आह— "उत्तरा मिति। 'उत्तरां' पुरुषस्योपर्यवस्थिताम्। विधेयविशेषण मेतत्। अत एव सूत्रे 'पुरुषे' इति सप्तम्या उपधानाधिकरणत्व मुक्तम्।

"उत्तर मेवास्मादिति। 'अस्मात्' पुरुषात् 'उत्तरम्' उपर्यवस्थितम् 'अन्नं' करोति, पुरुषस्य मुखे दधातीति * भावः ॥ १ ॥

विहितां स्वयमातृण्णा मनूद्य प्राणात्मना स्तौति— "यद्वेवेति। "स्वयमातृण्णा मुपदधातीति यदस्ति, तत्कारण मुच्यत इत्यर्थः। "प्राणो ह्येवैतत् स्वय मात्मन आतृन्त्ते"-इति स्वयमातृण्णायाः प्राणत्वोपपादनम्। प्राणो नाम शरीरान्तर्वर्त्तमानो वायुः। स हि आत्मनोऽर्थे स्वयम् 'आतृन्त्ते' आतर्दनं कुरुते, शरीरान्तर्गतनाडीषु अवकाशं कृत्वा प्रवर्त्तते। अथ वा आत्मनः शरीरस्यान्तः आतृन्त्त इति योजना। आतृन्त्त इति "उ तृदिर्

* 'निदधातीति'—इति च।

हिंसानादरयोः *”–इत्यस्माद्दीधादिकाल्लटि रूपम्; अतः स्वय-मातृर्दनसामान्यात् स्वयमातृण्णायाः प्राणात्मकत्व मित्यर्थः।

विहितव्यवधान मनुवदन् न केवलं स्वयमातृर्दनसामान्यादे प्राणत्वम्, अपि तु पूर्वोक्तपृथिवीत्वसाम्याच्चापि † प्राणत्व मस्या विद्यत इति दर्शयति— “ता मनन्तर्हिता मित्यादिना। यत् किञ्चिन्मनुष्यपशुपक्षिसरीसृपादिकं प्राणिजात मस्ति, तत् सर्वं पृथिवी बिभर्त्ति खलु। अनेन पृथिव्याः प्राणात्मकत्व मुपपादितम्। स्पष्ट मन्यत् ॥ २ ॥

अथ पुनरपि ता मेवेष्टकां विस्रस्तावयवस्य प्रजापतेः प्रतिष्ठारूपेण प्रशंसति— “यद्वेवेति। पूर्वं प्रजापतिः प्रजाः सृष्ट्वा विस्रस्ताङ्गोऽभूत्। तादृशं ‘तं’ प्रजापतिम् अवयवान् ‘आदाय’, देवताः ‘व्युदक्रामन्’, ततः ‘तासु’ ‘व्युत्क्रामतीषु’ ‡, स प्रजापतिः प्रतिष्ठारूप मङ्गं स्वयम् ‘अभिपद्य’ गृहीत्वा ‘उपाविशत्’। तदेतत् प्राक् प्रपञ्चेनोक्तम्— “प्रजापतिः प्रजा असृजत स प्रजाः सृष्ट्वा सर्व माजि मित्वाव्यस्रंसत, तस्माद्विस्रस्तात् प्राणो मध्यत उदक्रामदित्यादिना §। प्रजापतेः प्रजासर्जनेन विस्रथावयवत्वं तैत्तिरीयकेऽप्याम्नातम्— “प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसतेति ‖ ॥ ३ ॥

* रु० उ० ६ धा०।

† ‘पृथिवीत्व माद्यापि’– इति च, ‘पृथिवीत्वप्रमाणाद्यापि’ – इति क।

‡ ‘देवाः’, ‘तेषु’, ‘व्युत्क्रामत्सु’ – इति त्रयः पाठास्तल्लब्धार्था वा सायणीयाः।

§ पुरस्तादिहैव १. १. २ ( ४६ पृ० ) द्रष्टव्यम्।

‖ तै० ब्रा० २. ३. ६. १।

"स य इति । 'सः' प्रजानां स्रष्टा , यः प्रजापतिः विस्रस्तोऽभूत् , 'सोऽय मेव' ; य एष इष्टकासङ्घातरूपः 'अग्निश्चीयते' । 'अथ' 'या च' 'सा' प्रजापतिना प्राप्ता 'प्रतिष्ठा' , 'सा एषा' ; इदानी मुपधीययमाना 'प्रथमा स्वयमातृण्णा' । प्रथममध्यमोत्तमासु तिसृष्वपि चितिषु तिस्रः स्वयमातृण्णा उपधीयन्ते , अतोऽत्र प्रथमेति विशेषणम् । "तद्यदिति । यतः 'एताम्' इष्टकाम् 'अत्र' पुरुषे 'उपदधाति', 'तत्' तेन 'अस्य' पुरुषरूपस्य प्रजापतेः 'आत्मनः' स्वस्य 'यदेतत्' प्रतिष्ठालक्षण मङ्गम् । 'एषेति लिङ्गव्यत्ययः * । 'तत्' 'अस्मिन्' प्रजापतौ 'एतत्' एतेन निहितवान् † भवति । तस्मादस्मिन् पुरुषे उपदध्यात् ॥ ४ ॥

विहिते उपधाने मन्त्रं विधत्ते— "तां वै प्रजापतिनोपदधातीत्यादिना । अत्र "ध्रुवासि धरुणास्तृता"–"प्रजापतिष्ट्वा सादयतु"–"भूरसिभूमिरसि"–इति तिसृभिर्ऋग्भिः ‡ "विश्वस्मै प्राणाय"–इति § यजुषा च ।

यत एषा स्वयमातृण्णेष्टकोपधीयते , अतः प्रजापतिशब्देन तद्विशिष्टं मन्त्रं लक्षयित्वा , तेन लक्षित-लक्षणया ते सर्वे मन्त्रा लक्ष्यन्ते— "प्रजापतिर्ह्येवैतत् स्वय मात्मनः प्रत्यधत्तेत्यनेन लक्षितलक्षणाविवक्षाकारण मुच्यते ‖ । यतः प्रजा-

---

* 'एष इति लिङ्गव्यत्ययः'—इति क, ज ।

† प्रजापतौ च ते निहितवान्'—इति क-पाठः , डा० वेबरेण च दृष्टः । 'प्रजापतौ प्रति निहितवान्'—इति ज ।

‡ वा० सं० १३. १६, १७, १८ । § वा० सं० १३. १९ ।

‖ 'लक्षितलक्षणाकारण मुच्यते'—इति ज ।

पतिः स्वय मात्मनः 'एतत्' प्रतिष्ठालक्षण मङ्गं 'प्रत्यधत्त
अतस्तत्प्रतिष्ठात्मकस्वयमातृसोपधानमन्त्रेऽपि तत्सम्बन्धप्रतीतिर्य
स्यादिति प्रजापतिनोपदध्यादित्युक्तम् ।

प्रथमा मृचं व्याचष्टे— "ध्रुवासीति * । "स्थिरासीत्येतदि
ध्रुवासीत्यस्य व्याख्यानम्, "अथो प्रतिष्ठासीत्येतदपि ध्रुवासीत्यस्य
विवरणम् । 'धरुणेति'-प्रतीक मादाय व्याचष्टे— "प्रतिष्ठा
धरुण मिति । सर्वस्याधारभूतेत्यर्थः । "आस्तृता विश्वकर्मणेत्य
व्याख्यानम्— "प्रजापतिर्वै विश्वकर्मेति । विश्वस्य कृत्स्नप्रपञ्च
कर्म सृष्टिलक्षण मस्यास्तीति विश्वकर्मशब्देन प्रजापतिरभिधीयते
तेन 'आस्तृता' आच्छादिता, उपहितेत्येतदुक्तं भवति ।

"रुक्मो वै समुद्रः पुरुषः सुपर्ण इति। अत्र पुष्करपर्णं र
निधाय, तत्र च हिरण्मयपुरुष मवस्थाप्य, तस्योपरि स्वयमातृ
पधानं कर्त्तव्यम् । अतश्च "मा त्वा समुद्र उद्वधीन्मा सुपर्ण इति
अनेन आधारभूतौ रुक्मपुरुषौ तव हिंसां मा कार्ष्टाम्, कि
आनुकूल्येनाङ्गीकुरुता मित्येतदुच्यते ।

"यथैव यजुस्तथा बन्धुरिति । अनेन यथा मन्त्रस्तथैव व्याख्या
नम्— "अव्यथमानां पृथिवीं दृꣳहेत्येष मन्त्रभागः ‡ स्पष्टा
इत्युच्यते ॥ ५ ॥

---

* "ध्रुवासि धरुणास्तृता विश्वकर्मणा"—इति वा० सं० १३. १६
ऋचः प्रथमो भागः ।

† एव वा० सं० १३. १६ द्वितीयो भागः ।

‡ एष हि वा० सं० १३. १६ तृतीयो भागः ।

अथ द्वितीया मृचं व्याचष्टे— "प्रजापतिष्ट्वेति *। यतः प्रजापतिः' 'एतां प्रथमां चिति मपश्यत्', अतः "प्रजापतिष्ट्वा सादयत्विति मन्त्र आह। अपा माच्छादकत्वात् 'इयं' पृथिवी अपां पृष्ठे। तथा 'समुद्रस्य' अपि 'एमन्'। एमन्निति "इण् गतौ †"– इत्यस्मात् "अन्येभ्योऽपि दृश्यन्ते"–इति ‡ मनिन् प्रत्ययः। "समुद्रस्येति, कृद्योगे कर्मणि षष्ठी §। 'समुद्रस्य एमा' समुद्रं प्राप्तेत्यर्थः। परितः समुद्रेण वलयितत्वात्। "एमन्निति सप्तम्येकवचनस्य "सुपां सुलुगित्यादिना ‖ लुकि सति रूपम्। 'इयं' पृथिवी 'व्यचस्वती' व्यञ्जनवती, अभिव्यक्तियुक्ता, 'प्रथस्वती' विस्तारयुक्ता चेत्येतत् प्रत्यक्षसिद्धम्; स्वयमातृसा च पृथिव्यात्मिका; अतश्च व्यचस्वतीं प्रथस्वती मिति मन्त्र आह, "प्रथस्व पृथिवी चासीत्येतदिति ¶। यतस्त्वं पृथिव्यसि, अतः प्रथस्वेत्येतदुक्तं भवतीत्यर्थः। पृथिवीशब्दस्य प्रथनप्रवृत्तिनिमित्तकत्वं तैत्तिरीयके श्रूयते— तत् पुष्करपर्णेऽप्रथयत्, यदप्रथयत्, तत् पृथिव्यै पृथिवीत्वमिति ** ॥ ६ ॥

---

* "प्रजापतिष्ट्वा सादयत्वपाम्पृष्ठे समुद्रस्येमन्। व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि"--इति वा० सं० १३. १७।

† अदा० प० ३४ धा०।

‡ पा० सू० ३. २. ७५।

§ पा० सू० २. ३. ६५।

‖ पा० सू० ७. १. ३६।

¶ मन्त्रदृगभिप्राय एष ब्राह्मणोक्तः, न तु मन्त्रपाठः।

** तै० ब्रा० १. १. ३. ७. १।

३८

अथ तृतीया मृचं व्याचष्टे— "भूरसीतीति *। "भू
भूमिर्हीय मिति। 'इयं' पृथिवी, यतः सर्वेषां सुखानि भाव
तीति भूः; अस्याः सकाशादिदं सर्व मविज्ञात मभूदिति भूमि
अत एव श्रुतिः,—"अभूद्वा इद मिति तद् भूम्यै भूमित्व मिति
तस्माद्भूरसि भूमिरसीत्यभिधत्ते। "इयं हीदं सर्वं ददते"-इत्यने
दितित्वोपपादनम्। 'इयं' पृथिवी 'इदं सर्वं' भोग्यवस्तुजातं 'ददते'
तस्माद् अदितिः। "दद दाने ‡"-इत्यस्माददितिशब्दो नि
द्रष्टव्यः। 'विश्वं' सर्वम् 'अस्यां' निहित मिति 'विश्वधाया
"विश्वस्य भुवनस्येति। भुवनशब्देनात्र भुवनवर्त्ति पदार्थ
लक्ष्यते, ततश्च सर्वस्य भुवनवर्त्तिपदार्थजातस्य धारयित्री
तदुक्तं भवति। पृथिवीरूपत्वादात्मनः "पृथिवीं यच्छ
दिना आत्मन एव नियमनादिकं क्रियता मित्युच्यत इत्या
"आत्मानं यच्छेत्यादिना ॥ ७ ॥

अथ यजुर्मन्त्रं व्याचष्टे— "विश्वस्मै प्राणायेति §।
एव प्राणवायुर्वृत्तिभेदात् प्राणापानव्यानोदानशब्दैरभिधीय
"प्राणो ह्येवैतत् स्वय मात्मनश्छादयत इति स्वयमाछ
प्राणत्व मुक्तम् ‖। "सर्वस्मा उ वा एतस्मा इति। षष्ठ
चतुर्थी ¶। सर्वस्य खल्वेतस्य प्राणिसङ्घस्य प्राण एवाश्र

* वा० सं० १३. १८।
† तै० ब्रा० १. १. ३. ७. २।
‡ भ्वा० आ० १७ धा०। § वा० सं० १३. १९।
‖ इहैव द्वितीयकण्डिकायां (२७८ पृ० ६ पं०) द्रष्टव्यम्।
¶ पा० २. ३. ६२ सू० १ वा०।

ति, अतः सर्वस्यापि प्राणादिस्थैर्यार्थं तवोपधान मिति यावत्।

"इमे वै लोका इति। तिस्रः स्वयमातृण्णाः, पृथिव्यन्तरिक्षद्युलोकात्मिकाः। 'इमे' खलु 'लोकाः' 'प्रतिष्ठा' सर्वप्राणिना माधारः। "चरित्र मिति प्रत्येकविवक्षयैकवचनम्, नियतलिङ्गत्वान्नपुंसकलिङ्गम्। ततश्च प्रथमायाः स्वयमातृण्णायाः पृथिव्यात्मकत्वात्, सर्वेषा माधारभूताय संसारसाधनभूताय च अस्मै लोकाय तवोपधानम्। "गोपायत्वित्येतदिति। पृथिव्यभिमानिदेवतात्वात् "अग्निस्त्वा अभि गोपायत्वित्येतदुक्तम्। यच्छर्दिः शन्तमम्, तेनेत्येतदिति। 'शन्तमम्' अतिशयेन सुखकरं यच्छर्दिस्तेजोऽस्ति, तेनेति॥

मन्त्रार्थस्तु,— हे स्वयमातृण्णे! स्थिरासि, सर्वेषां प्रतिष्ठासि, प्रजापतिनोपहितासि। तादृशीं त्वां रुक्मो मोद्दधीत्। तथा हिरण्मयपुरुषश्च त्वां मोद्दधीत्। तथा सति अव्यथमाना त्वं पृथिवीं दृढीकुरु (१६)। किञ्च प्रजापतिः अपा माच्छादके समुद्रं प्राप्तवति भूप्रदेशे व्यचस्वतीं विस्तारवतीं त्वां सादयतु। यतस्त्वं पृथिव्यसि, अतः 'प्रथस्व' विस्तारवती भव (१७)। किञ्च, त्वं सर्वेषां सुखानां भावयित्री असि, सर्वेषां चोत्पत्तिस्थान मसि, सर्वस्यापि भोग्यवस्तुनो दात्री असि, कृत्स्नस्यापि भुवनवर्त्तिपदार्थजातस्य धारयित्री असि। तादृशी त्वं पृथिवीरूप मात्मानं 'नियच्छ' दृढीकुरु, मा च हिंसीः (१८)। प्रयोजन मन्तरेण त्वां 'नोपदधे' किन्तु सर्वस्यापि प्राणिनः स्थैर्यार्थं त्वा मुपदधामि, त्वां अग्निं मन्यामहे। टिलोपश्छान्दसः। 'स्वस्त्या' अविनाशेन

सुखातिशयसम्पादकेन तेजसा च गोपायतु । तया 'देवतया' 'अङ्गिरस्वत्' अङ्गिरसा तुल्या, 'ध्रुवा' 'स्थिरा 'सीद' उपविश इत्यन्त्रमन्त्रार्थः ॥

अथ "तया देवतयेत्यनेन मन्त्रेण सादयित्वा "ता अस्येत्यनेनाधिवदेदित्याह— "सादयित्वेति । अत्र सूत्रम्— "सादनसूददोहसौ सर्वत्र तया देवतया ता अस्येतीति *। सादनाधिवदनमन्त्रयोर्व्याख्यानं प्रागुक्त मित्याह— "तस्योक्तो बन्धुरिति । 'तत्र' तस्मिन् काण्डे "प्राणो वै सूददोहा इत्यादिना अधिवदनमन्त्रो व्याख्यातः †। षष्ठकाण्डे "स उपदधाति 'तया' देवतयेति, "वाग्वै सा देवतेत्यादिना व्याख्यातः सादनमन्त्रः ‡ ॥

अथ स्वयमातृणायां सामगानं विधाय, तत्प्रयोजनकथनद्वारा व्याख्यान मुपरिष्टाद् वक्ष्यत इति दर्शयति— "अथेत्यादिना । अस्यां प्रथमायां स्वयमातृणायां भूरिति व्याहृत्यां साम गायेत् । अत एव सूत्रम्— "भूरित्येतस्यां साम गायति"-इति §। तद्व्याख्यानन्तु "अथ स्वयमातृणासु सामानि गायतीत्यादिनोत्तरत्र अष्टमकाण्डावसाने प्रपञ्च्यते ‖ ॥ ८ ॥

---

* "नित्ये सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति"—इति का० श्रौ० सू० १६. ७. १४ ।

† पुरस्तादिहैव ८० पृ० ८ पं० द्रष्टव्यम् ।

‡ तत्र १. २. २८ (६ भा० २२ पृ०) द्रष्टव्यम् ।

§ का० श्रौ० सू० १७. ४. १६ ।

‖ उपरिष्टात् ८. ७. ४. १ द्रष्टव्यम् ।

( प्राणात्मकत्वात् तदुपधानेन पुरुषः कथ मनभिनिहितो भवतीति प्रश्नपूर्वकं स्वयमातृण्णायाः ) * लोके हि पुरुषस्योपरि पाषाणे निहिते अस्य † महानुपरोधो जायते, अतोऽत्र स्वयमातृण्णायाः पाषाणात्मकत्त्वात् ‡, तयोश्चोपरोधहेतुत्वाभावात्, प्रत्युतानुकूलत्वात्, तत्सन्निधानेऽपि पुरुषोऽनभिहित एव भवतीत्याह — "तदाहुरित्यादिना ॥ ९ ॥

स्वयमातृण्णेष्टकोपधानानन्तरं दूर्वेष्टकोपधानं विधत्ते— "अथेति। इष्टकाशब्दो मृन्मयेष्टकासु मुख्यः, दूर्वायान्तूपधानसामान्याद्गौणः। पशुपुष्टिसाधनत्वेन दूर्वाणा मपि पशुत्वात्, तदुपधानेन § पशूना मेवोपधानं कृतं भवतीत्याह—"पशवो वा इति। यदुक्तं "पशूनेवैतदुपदधातीति, तत् किं साधारणपशुविषयम्? नेत्याह— "तद्यैरद इति। 'अदः' पुरस्तात् 'अग्निः' 'अनन्तर्हितैः' अव्यवहितैः। स्वस्य तेष्वनुप्रवेशादनन्तर्हितत्वम्। तादृशैः 'यैः' पञ्चभिः पशुभिः अन्यत्वोपजगाम, 'ते' पशवः 'एते' दूर्वेष्टकात्मका इत्यर्थः। अग्निः पशून् प्रविश्यान्यत्र जगामेत्येतत् "स एतान् पञ्च पशून् प्राविशदित्यादिना षष्ठकाण्डे प्रपञ्चेनोक्तम् ‖। "उपदधातीति

---

* वन्धनीचिह्नान्तःपाठो नास्ति क-पुस्तकादन्यत्र।

† 'निहितस्य'—इति ङ।

‡ 'अन्नप्राणात्मकत्वात्'—इति क। "लोके पुरुषस्योपरि पाषाणे निहिते तस्य महानुपरोधो जायते। स्वयमातृण्णायाः पाषाणात्मकत्वात्"—इति ज।

§ 'तदुपधाने'—इति ङ, ज।

‖ १ प्र० ४ ब्रा० २ क० ( ६ भा० ५३ पृ० ) द्रष्टव्यम्।

सामान्येन विधानात् स्थानविशेषं विधाय प्रशंसति— "ता मनन्तर्हिता मित्यादिना। "ता मनन्तर्हितां पुरुषादुपदधातीति स्वयमातृण्णेष्टकास्थापनविधिव्याख्यानेनैव कृतव्याख्यानमेतत् * ॥ १० ॥

विहित मुपधान मनूद्य ओषधीनां दूर्वायाश्चोत्पत्तिप्रदर्शनपूर्वकं तदुपधानेनैव (क्षत्र मन्याः) † सर्वौषधीः प्राणं रसञ्चोपहितवान् भवतीति स्तौति— "यद्वैवेत्यादिना। "अशीयन्तेति अपतन्नित्यर्थः ॥ ११ ॥

"सोऽब्रवीदिति। 'अयम्' एव प्राणो माम् 'अधूर्वीद्' अहिंसीदिति 'सः' प्रजापतिः 'अब्रवीत्'। 'यदब्रवीन्मा अधूर्वीत्'-इति, 'तस्माद्' एष प्राणो नाम्ना ‡ 'धूर्वा' अभूत्। ननु धूर्वा न दूर्वा भवितु मर्हति, तत् कथं दूर्वेत्युच्यत इत्यत आह—"धूर्वा ह वै तामिति। धूर्वाशब्दः पचाद्यजन्तः §। लोकेऽपि यत् किञ्चिन्नामधेयविशिष्टं पुरुषं गौरवार्थं भ्राता पितेत्येवं परोक्षेण व्यपदिशन्ति, तद्वद् देवा अपीत्यर्थः। "तदेतदिति। यतः 'एषः' दूर्वा प्राणात्मको 'रसः'। प्राणस्य रसात्मकत्वं श्रूयते—"प्राणो ह्यङ्गानां रस इति ‖। 'एषः'-इति पुल्लिङ्गत्वं प्राणरसापेक्षम्। अतः 'तदेतद्' 'दूर्वा' 'क्षत्रं' प्रधानम्। क्षत्रशब्देनात्र प्राधान्यं लक्ष्यते। 'तदेतत्'-

---

* पुरस्तादिहैव २७८ पृ० १० पं० द्रष्टव्यम्।

† नास्त्येतद् पदद्वयं क-पुस्तकादन्यत्र।

‡ नास्त्येतत् पदं क-पुस्तके।

§ पा० सू० ३. १. १३४।

‖ छा० ब्रा० ३. ३. १० द्रष्टव्यम्।

इत्यपि नपुंसकलिङ्गः चत्रशब्दापेक्षम्। तथा सति लोम्नां प्राणानुविधायित्वात् प्राणरसात्मिका मेतां दूर्वेष्टका मुपदध्यात्। लोमात्मिकाः 'सर्वा अप्योषधीरुपदधाति' ॥ १२ ॥

किञ्च 'यत्र' यदा 'देवाः' 'तं' प्रजापतिं चयनसंस्कारेण संस्कृतवन्तः, तदा 'अस्मिन्' प्रजापतौ 'मध्यतः' मध्ये। सप्तम्यर्थे तसिः*। 'प्राणं रसम् अदधुः'† स्थापितवन्तः। तथैव 'अयम्' अध्वर्युः 'एतत्' एतेन दूर्वेष्टकोपधानेन 'प्राणं' रसं निहितवान् भवतीत्यर्थः। "ता मनन्तर्हिता मित्यादि। तस्यार्थस्तु व्यक्त एव।

उपधातव्यायाः दूर्वेष्टकाया लक्षण माह— "सा स्यादिति। 'कृत्स्नतायै' सम्पूर्णत्वाय; अच्छिन्नमूलाग्रं हि सम्पूर्ण मन्यूनं भवति। अतो मूलाग्रवती कार्या। उपधाने विशेष माह— "यथेति। अत्र कात्यायनः— "मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद् भूमिप्राप्ता मिति‡। दूर्वेष्टकायाः पुरस्ताद् भूमिसंस्पर्शेनोपधाने इमां दूर्वा मनुलक्ष्यैता ओषधयो भूमौ प्ररोहेयुरित्याह— "अस्यां ह्येवैता इति ॥ १३ ॥

"काण्डादिति, "या शतेनेति च द्वाभ्या मपीय मिष्टका उपधीयते। तत्र प्रथममन्त्रे पूर्वार्द्धस्यार्थः प्रत्यक्षसिद्ध इति दर्शयति— "काण्डात्-काण्डादिति §। द्वितीयार्द्धन्तु निगदव्याख्यात मित्याह— "एवा नो दूर्वे इत्यादिना। काण्डशब्दः स्तम्बवाची,

---

* पा० सू० ५. ३. ७, १४।

† 'निदधुः'—इति ङ।

‡ का० श्रौ० सू० १७. ४. १८ क।

§ का० श्रौ० सू० १७. ४. १८ ख।

परुः-शब्दः पर्ववचनः। यावन्तः काण्डाः स्तम्बा विद्यन्ते, तत्रैकैकस्मात् स्तम्बात् प्रकर्षेणोत्पद्यमानाः। एकस्मिन्नपि स्तम्बे यावन्ति 'परूंषि' पर्वाणि विद्यन्ते, तेष्वेकैकस्मात् पर्वणः 'परितः' प्रकर्षेणोत्पद्यमानाः। अथ वा, काण्डशब्देन पर्वणोर्मध्यवर्त्ती दण्ड उच्यते; 'काण्डात्-काण्डात्' सर्वस्मात् काण्डादित्यर्थः। 'परुषः-परुषः' सर्वस्मात् पर्वणः। हे दूर्वे! तेषु काण्डेषु यानि पर्वाणि सर्वाणि विद्यन्ते, तेभ्यः सर्वेभ्योऽपि परतः प्ररोहन्ती भवसीत्यर्थः। 'एवा' एवं यथा त्वं भवसि, एवं 'नः' अस्मान्' 'शतेन सहस्रेण च' शतसहस्रसङ्ख्याकैः पुत्रादिभिः 'प्रतनु' विस्तारयेति प्रथमस्यार्थः * ॥ १४ ॥

हे दूर्वे! 'या' त्वम् काण्डानां 'शतेन' आत्मानं विस्तारयसि, अङ्कुराणां 'सहस्रेण' विविधं प्रादुर्भवसि, हे 'देवि' द्योतमाने 'इष्टके'! 'तस्यास्ते' 'वयं' 'हविषा' 'विधेम' परिचरेमेति द्वितीयस्यार्थः † ॥

उपधानमन्त्रगता मर्थसिद्धां द्वित्वसङ्ख्या मनुवदति— "द्वाभ्यामुपदधातीति। द्वित्वसङ्ख्याप्रशंसालक्षणं व्याख्यानम् "द्वाभ्या मभिजुहोति, द्विपाद्यजमानः, यजमानोऽग्निरित्यादिना प्रागुक्त ‡मित्याह— "तस्योक्तो बन्धुरिति। "सादयित्वेत्यादिकान्तं व्याख्यातम् § ॥ १५ ॥

---

* वा० सं० १३. २०।

† वा० सं० १३. २१।

‡ इहैव पुरस्तात् २३५ पृ० ४ पं० द्रष्टव्यम्।

§ इहैव पुरस्तात् ३०० पृ० ५ पं० द्रष्टव्यम्।

कात्यायनः— "यास्त इति द्वियजुष मिति *। "यास्ते अग्ने सूर्ये रुचः"–इति , "या वो देवाः"–इति , द्वाभ्यां † द्वियजुर्नामिष्टका मुपदध्यादिति सूत्रार्थः। तदेतद् विधत्ते— "अथेति। विहिता मिष्टकां यजमानस्य स्वर्गप्राप्तिसाधनत्त्वेन प्रशंसति— "इन्द्राग्नी इत्यादिना। स्पष्ट मेतत्।

"इमा मेवेति। 'ताम्' आत्मना दृष्टाम् 'इमाम्' अस्माभिरधिष्ठीयमाना मिष्टकाम् 'एव' 'उपादधाताम्'। 'ता मुपधाय', 'अस्यै प्रतिष्ठायै'। षष्ठ्यर्थे चतुर्थी ‡। अस्याः प्रतिष्ठायाः सकाशात् सोपानवदिमा मारुह्य 'स्वर्गं लोकं' प्राप्नुता मित्यर्थः। "तथैवैतदिति। "यजमानो द्वियजुष मुपदधातीति यत् एतत्, 'तथैव' इन्द्राग्निदेवतावदेव। तदेव दर्शयति— "येनेति। येन प्रकारेण 'यत् कर्म कृत्वा' इन्द्राग्नी 'स्वर्गं लोकं' प्राप्नुताम्, तेनैव प्रकारेण 'तत् कर्म कृत्वा' अह मपि 'स्वर्गं' प्राप्नवानीति 'यजमानो द्वियजुष मुपदधाति'। तस्मादेषा स्वर्गप्राप्तिसाधन मिति भावः।

प्रकृताया एवेष्टकायाः द्वियजुरिति नामप्राप्तिं दर्शयति— "सा यदिति। यतः 'एतां' 'द्वे देवते' इन्द्राग्नी 'अपश्यताम्', तस्माद् द्वियजुर्नामेय मिष्टकेत्यर्थः॥

ननु देवताद्वयदर्शनात् कथं द्वियजुरिति नाम स्यादिति चेत्, उच्यते— यतो 'द्वे देवते एता मपश्यताम्', अत एव द्वाभ्यां

* का० श्रौ० सू० १७. ४. २०। परं तत्रास्ति पाठभेदः।

† वा० सं० १३. २२, २३।

‡ पा० ३. २. ६२ सू० १ वा०।

३९

यजुर्भ्या मुपधीयते । तथा सति यजुर्द्वयेनोपधानस्यापि देवता-द्वयदर्शनोपाधिकत्वाद् द्वियजुरिति नामधेयस्यापि देवताद्वयदर्शन-मेव निमित्त मित्यभिप्रायः ॥

ननु "यास्ते अग्ने"–"या वो देवाः"–इत्यनयोर्मन्त्रयोः ऋ-व्यवस्थया पठितत्त्वात् कथं यजुःशब्देन तदभिधान मिति ? तर्हि अत्र यजुःशब्देन मन्त्रमात्रं लक्ष्यते ।

"ऋक्सामयजुषां लक्षणं जैमिनिना दर्शितम्—

"तेषा मृग् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः शब्दः"–इति * ।

एतदेवान्यत्र सङ्गृहीत मभियुक्तैः—

"नर्क्सामयजुषां लक्ष्म साङ्कर्यादिति शङ्किते ।

पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसङ्करः"-- इति † ।

अथवा मन्त्रे एव यजुःशब्दव्यवहारो दृश्यते; यथा "तस्यास्ते देवीष्टके विधेम हविषा वय मिति ‡ "यथैव यजुस्त-बन्धुरित्येवमादौ § ॥

अथ ता मेवेष्टकां यजमानात्मनापि प्रशंसति— "यद्वेवेति द्वियजुषो यजमानात्मकत्वात् तदुपधानेन यजमान मेवास्मिन्न-र्पितवान् भवतीत्यर्थः ॥ १६ ॥

द्वियजुषो यजमानत्वोक्त्या लब्धोदयां पाक्षिकानां जिज्ञासा-मवतारयति— "तदाहुरित्यादिना । "अथ कतमदिति ।

* मी० जै० सू० २ अ० १पा० ३५, ३६, ३७ सू० ।
† जै० अधि० २. १. १०, ११, १२ ।
‡, § पुरस्तादिहैव पञ्चमकण्डीव्याख्यानं (३०४, २६६ पृ०) द्रष्टव्यम् ।

स्य' यजमानस्य 'इदं' द्वियजुर्नामेष्टका कतमद् 'रूपं' स्वरूप ति। रूपापेक्षया नपुंसकत्वम्। उक्तस्योत्तरं दर्शयति— "देवो इति। 'सः' हिरण्मयः पुरुषः 'अस्य' यजमानस्य देवत्वप्रयुक्तः आत्मा' शरीरम्; यद् * द्वियजुरिष्टका मनुष्यत्वप्रयुक्त आत्मेत्यर्थः। हिरण्मयत्वात् पुरुषस्य देवशरीरत्वम्, मृन्मयत्वात् द्वियजुषो मानुषशरीरात्मत्वम् प्रतिपादयति— "तद्यदित्यादिना। "देव- रूप मिति। यतो देवरूपम्, अतः 'अस्य' यजमानस्य तद्रूपम् अमृतं' खलु; विलापनेऽप्यविनश्वरत्वाद्धिरण्यस्यामृतत्वम्। "मा- नुषं होति। 'इदं' द्वियजुर्लक्षणम् स्वरूपम्। यतो मानुषम् अतः 'इयं मृदः कृता भवति' पार्थिवो भवति, मानुषाणां पार्थि- वत्वादित्यर्थः ॥ १७ ॥

द्वियजुष उपधानस्यान्वयव्यतिरेकयोर्गुणदोषप्रदर्शनेनावश्य- कत्व माह— "स यदित्यादिना। 'अमूं' हिरण्मयपुरुषलक्षणा मिष्टकाम् एव 'उपदध्यात्'। "नेमा मिति। 'इमां' द्वियजु- र्लक्षणा मपि तदानी मेव चेदुपदध्यात्, 'नापशिंष्यात्' नाव- शेषयेत्, तर्हि मानुषशरीररूपद्वियजुरिष्टकाया अपरिशेषणात् क्षिप्रकाले एव 'अस्माल्लोकात्' 'यजमानः प्रेयात्', तस्यास्तदानी मनुपधानेनावशेषणे तु 'अनेन' द्वियजुर्लक्षणेन मानुषशरीरे- णास्मिंल्लोके यजमानः कृत्स्नम् आयुरेतीत्यर्थः ॥ १८ ॥

अथास्या इष्टकायाः हिरण्मयपुरुषसमीपे सर्वदाऽनुपधाने दोषप्रदर्शनपूर्वकम्, तत्रोपधाने गुणं दर्शयति— "स यदि-

* नास्त्येतत् पदं क-पुस्तकादन्यत्र।

त्यादिना । समीपेऽनुपधाने सति असम्बन्धाद् यजम
स्वकीयं देवरूप मनुक्रमेण 'न प्रजानीयात्'; उपधानेन
प्रजानीयात् ।

अथ ता मेवेष्टकां दूर्वेष्टकासंस्पर्शेनोपदध्यादित्याह— मनन्तर्हिता मिति ॥ १९ ॥

यजमानस्य हिरण्मयपुरुषो दैवं शरीरम्; हिरण्मयं मानुष मित्युक्तम् । तयोर्मध्ये स्वयमातृण्णादूर्वेष्टकयोरुपधा व्यवधानात् शरीरद्वयस्यापि प्राणेन कथ मव्यवच्छेद इति या कानां प्रश्न मवतारयति— "तदाहुरिति । 'सन्तती'--इत्य विवरणम्— "अव्यवच्छिन्नाविति । उक्तस्योत्तरं दर्शयति "प्राणो वा इत्यादिना । 'प्राणो वै स्वयमातृण्णा' "प्राणो ह्येवे स्वय मात्मन आतृन्ते"--इति स्वयमातृण्णायाः प्राणत्व मुक्तं "अथास्मात् प्राणो मध्यत उदक्रामदित्यादिना प्राणरूप दूर्वाऽभूदित्यपि उक्तम् । सन्तनोतीत्येतदेव विवृणोति— "स धातीति । स्पष्ट मन्यत् ॥ २० ॥

द्वियजुष उपधाने मन्त्रौ विधत्ते— "यास्ते अग्ने इति "यास्ते अग्ने सूर्ये रुचो"—"या वो देवाः सूर्ये रुचः"—इत्येताभ्यां मन्त्राभ्यां द्वियजुष मुपदध्यादित्यर्थः । मन्त्रयोः पुनःपुनः रु पदप्रयोगस्याभिप्राय माह— "रुचं रुच मिति । "अस्मिन्निति यजमाने इत्यर्थः ।

---

* का० श्रौ० सू० १७. ४. २० ।

† वा० सं० १३. २२, २३ ।

मन्त्रयोस्त्वय मर्थः *— "हे 'अग्ने!' 'ते' तव 'सूर्ये' सूर्यमण्डले 'याः' 'रुचः' दीप्तयो 'रश्मिभिः' रश्मिरूपेण 'दिवम्' 'आतन्वन्ति' सर्वतो व्याप्नुवन्ति । रात्रौ या अग्नेर्दीप्तयः, ता एव सूर्योदयकाले सूर्यरश्मयो भवन्ति । एतच्च तैत्तिरीयके अग्निहोत्रब्राह्मणे समाम्नातम्— "उद्यन्तं वावादित्य मग्निरनुसमारोहतीति †। 'ताभिः' सर्वाभिर्दीप्तिभिः 'नः' अस्मत्सम्बन्धिने 'जनाय' यजमानलक्षणाय 'रुचे' 'कृधि' प्रकाशं कुरु। 'रुचे'-इति विभक्तिव्यत्ययः ‡, रुच मित्यर्थः। 'नस्कृधीति "अतः कृकमीत्यादिना § विसर्जनीयस्य सकारः॥ हे 'देवाः!' 'वः' युष्माकं सम्बन्धिन्यः सूर्यमण्डले वर्त्तमानाः 'याः' 'रुचः' दीप्तयः सन्ति, तथा 'गोषु अश्वेषु च 'याः' दीप्तयः सन्ति; 'ताभिः' सर्वाभिर्दीप्तिभिः हे 'इन्द्राग्नी!' 'हे बृहस्पते!' त्वयोऽपि यूयं 'नः' अस्मत्सम्बन्धिने यजमानाय 'रुचं धत्त' प्रकाशं सम्पादयतु॥

ननु चायं मन्त्रोऽध्वर्युणा पठ्यते, ततश्च "रुचन्नो धत्तेति लिङ्गेन मन्त्र मुच्चारयितुरध्वर्योरेव तत् फलं युज्यते;

---

* तयोः पाठस्त्वेवम्,—

"यास्ते अग्ने सूर्ये रुचो दिव मातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाऽभि रुचे जनाय नस्कृधि ॥ २२ ॥
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचे न धत्त बृहस्पते ॥ २३ ॥

† तै० ब्रा० २. १. २. १० ।

‡ पा० ३. १. ८५ सू० द्रष्टव्यम् ।

§ पा० सू० ८. ३. ४६ ।

अतो न इति पदं कि मित्युपचरित मिति चेत्, न; यजेतेत्यात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानगामित्वं प्रतीयते ; न च परिक्रीतस्याध्वर्योर्दक्षिणातिरिक्तफलसम्बन्धो न्याय्यः। तस्मा श्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयम्। तस्माद्यजमानेन पाठ्येषु "आयुर्दा अग्नेऽस्यायुर्मे देहीत्यादिषु* क्रियमाणानुवादिषु प्रत्यगाशीर्मन्त्रेषु श्रुतं फलं यथा याजमानम्, तथैवाध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुत मपि फलं याजमान मेव। "द्वाभ्या मित्यादिकं पूर्वं व्याख्यातम्। प्रकारान्तरेणापि द्वित्वं प्रशंसति— "अथो द्वय मिति। द्विविधं रूप मस्तीति तदुपधानमन्त्रयोरपि द्वित्व मुपपद्यत इत्यर्थः। व्याख्यात मुत्तरं वाक्यम् ॥ २१ ॥

अथ रेतस्सिङ्नामधेययोरिष्टकयोरुपधानं विधत्ते— "अथ रेतस्सिचा इति। "लोपः शाकल्यस्य"–इति † वकारलोपः। विहिते इष्टके पृथिवीद्युलोकात्मना प्रशंसति— "इमो वै लोकाविति। वित्यादिना। तत्रानयोर्लोकयोः रेतस्सेक्तृत्वप्रतिपिपादयिषयोक्तम्— "इमौ वै लोकाविति। तद्रेतस्सेचन मनयोः प्रत्यक्षसिद्धमित्याह— "इमौ ह्येवेति। "इतो वा अय मित्यादिना। तदेव प्रत्यक्षत्वं दर्शयति— 'अयं' लोकः 'इतः' अस्मात् प्रदेशात् धूमलक्षणं 'रेतः सिञ्चति', 'सः' धूमः 'अमुत्र' द्युलोके वृष्टिर्भवति। सेति स्त्रीलिङ्गं वृष्ट्यपेक्षम्। धूमस्य मेघकारणत्वात् तद्द्वारा वृष्टिकारणत्वाद् धूमो वृष्टिरिति कारणे कार्योप-

* वा० सं० ३. १७. २।

† पा० सू० ८. ३. १६।

पचार:। 'तां' वृष्टिम् 'असौ' द्युलोक: 'अमुत:' अमुष्मात् प्रदेशात् सिञ्चति। तस्मादनयोर्लोकयोर्मध्ये वृष्टिपरिणतान्नद्वारा प्रजा: 'प्रजायन्ते'। श्रूयते हि— "अन्नाद्दै प्रजा: प्रजायन्ते"–इति *। अन्यत्राप्युक्तम्— "वृष्टेरन्नं तत: प्रजा:"–इति †। "तस्मादिमौ लोकौ रेतस्सिचौ ; रेतस्सिचोरनयोर्लोकयो: रूपेणानुसन्धानादिष्टके अपि रेतस्सिचावित्युच्येते ॥ २२ ॥

तत्र प्रथमाया उपधाने मन्त्रं विधाय व्याचष्टे— "विराड् ज्योति रिति ‡। 'अयं लोक:' पृथिवी 'विराट्'–शब्देनाभिधीयते। 'स:' च 'इमम्' अस्मदादीनां प्रत्यक्ष मग्निरूपं 'ज्योतिर्धारयति'। प्रथमा रेतस्सिक् भूलोकात्मिकेत्युक्तम्, तस्मात् प्रथमरेतस्सिगात्मको विराड्-शब्दाभिधेयो भूलोकोऽग्निरूपं ज्योतिर्धारयति ॥ "स्वराड् ज्योतिरिति द्वितीयोपधानमन्त्र: §। सोऽप्येव मेव व्याख्येय:।

अनयोर्लोकयोर्विराट्–स्वराट्–शब्दाभिधेयत्व मेवोपपादयति —"विराड् च हीमाविति। विविधं राजत इति विराट्। स्वय मेव राजत इति स्वराट्। तयो: पृथक्–पृथक्–मन्त्रेणोपधान माह— "नानोपदधातीति। यत: 'इमौ लोकौ' 'नाना' पृथग्भूतौ, तस्मात्तदात्मिकयोरिष्टकयोरुपधानं पृथक्-पृथङ्-मन्त्रेण कर्त्तव्य मित्यर्थ:। उपधानमन्त्रवत्सादनमन्त्रस्यापि

---

* तै० आ० उप० ७. २. २।

† म० स० ३. ७. ६।

‡ का० श्रौ० सू० १७. ४. २२।

§ वा० सं १३. २४।

पार्थक्येन प्राप्तावाह— "सकृदिति । "तया देवतयाङ्गिरस्वद् ध्रुवा सीद"–इत्ययं सादनमन्त्रः * । त मेकवार मुच्चार्य सादयेत्, न तु प्रतीष्टक मित्यर्थः । तेन तदुपधानं समानं करोति। 'तस्मादनयोर्लोकयोः 'अन्ताः' प्रान्ताः 'समायन्ति' परस्परं सम्बद्धा भवन्ति । अन्तरिक्षभागा हि पृथिवीभागैः सम्बध्यन्त इत्येतत् प्रत्यक्षसिद्ध मेव ॥ २३ ॥

अथ तदेवेष्टकाद्वय माण्डात्मकेनापि स्तौति— "यद्वेवेति। अण्डशब्दात् स्वार्थिकोऽण् प्रत्ययः । आण्डाविति पुरुष-सम्बन्धिनी वीजे उच्येते । "यस्य ह्याण्डौ भवत इत्यादिना आण्डयोः रेतस्सिक्त्वं प्रतिपादितम् । "विराड् च ह्वीमाविति। आण्डयोः प्रजोत्पादनसामर्थ्याद्विराड् च प्रत्यक्षसिद्ध मित्यर्थः। प्रजापतिशब्देन † प्रजोत्पादन मभिधीयते। रेतसः प्रजापतेश्च प्रजा लक्ष्यन्त इति तत्प्रकाशकत्वाज्ज्योतिष्ट्व मित्यवगन्तव्यम् । "समान-सम्बन्धनाविति । एकरूपसम्बन्धनावित्यर्थः । प्रकृतयोरिष्टकयोः स्थानविशेष माह –"ते अनन्तर्हिते"–इति ‡ । द्वियजुषोः समीपे अव्यवधानेनोपधानं किमर्थं मित्यत आह— "यजमानो वा इति ॥ २४ ॥

रेतस्सिचोरुपधानानन्तरं विश्वज्योतिराख्याया इष्टकाया उपधानं विधाय, ता मग्न्यात्मना स्तौति— "अथेति § । स्वय-

---

* वा० सं० २७. ४५ ।

† 'प्रजातिशब्देन'—इति, 'प्रजापतेस्त्व'—इति च क-पुस्तकीयौ पाठौ।

‡ का० श्रौ० १७. ४. २२ सू० वृत्तिर्द्रष्टव्या ।

§ का० श्रौ० सू० १७. ४. २३ ।

मात्मा इव विश्वज्योतिषोऽपि तिस्रो विद्यन्ते, अतोऽत्र * प्रथमेति विशेषणम्। अस्मिन् लोके 'भुवि' यत् किञ्चन ज्योतिरस्ति, तत् सर्व मग्निमय मेवेति। अग्निर्विश्वज्योतिरिति तदात्मकत्वेनानुसन्धानादिष्टकापि 'विश्वज्योतिः'; अतस्तदुपधाने अग्नि मेवोपहितवान् भवति। विधत्ते— "ता मनन्तर्हिता मिति। 'तां' विश्वज्योतिषं 'रेतस्सिग्भ्याम्' 'अनन्तर्हिताम्' अव्यवहितां तत्संस्पर्शेनोपदध्यात्। तथा सति रेतस्सिचोः पृथिवीद्युलोकात्मकत्वात् ताभ्या मव्यवहित मेव 'अग्निं दधाति'। क्वचित् पार्श्वेऽपि तत्संस्पर्शेनोपधाने अव्यवधान मुपपद्यत इत्यत आह— "अन्तरेवेति। "अन्तरेव हीति। "अन्तरा इवेति पदविभागः। इवशब्द एवकारार्थः। "अन्तरान्तरेण युक्ते"–इत्यनेन † इमाविति द्वितीया। अनयोर्लोकयोर्मध्ये पृथिव्या उपरि अन्तरिक्षे खल्वग्निः प्रकाशते; तस्मात् मध्यत उपधानम् ॥ २५ ॥

अथैता मिष्टकां प्रजात्मना प्रशंसति— "यद्वेवेति। 'प्रजा हि विश्वज्योतिः' यतः प्रजा ज्ञानशक्त्या सर्वान् पदार्थान् प्रकाशयति, तस्मात् प्रजा विश्वज्योतिरित्येतदपरोक्षम्; अतः प्रजा विश्वज्योतिः। तथा सति एतदिष्टकोपधानेन प्रजननं प्रजोत्पादन मेवोपहितवान् भवति। प्रजायाः प्रजोत्पादनस्य च कार्यकारणभावादभेदविवक्षयैव मुक्तम्। रेतस्सिचोराण्डत्वाद, विश्वज्योतिषश्च प्रजात्वात्, ताभ्या मव्यवहितत्वेन मध्यत

* 'अतोऽत्र'—इत्येतन्नास्ति ङ-पुस्तके।

† पा० सू० २. ३. ४।

उपधाने प्रजोत्पादन मेवाण्डयोर्निहितं भवतीति दर्शयति— "मनन्तर्हिता मिति । "अन्तरेव ह्याण्डाविति । आण्डयोर्मध्यत: * एव रेतोनिर्गमनद्वारत्वात्, तत एव 'प्रजा: प्रजायन्ते' ॥ २६ ॥

अथ तस्मिन्नुपधाने मन्त्रं विदधानो व्याचष्टे— "प्रजाप ष्ट्वेत्यादिना † । यत: 'प्रजापतिरेतां प्रथमां चिति मपश्यत्' अत: प्रथमां विश्वज्योतिषं "प्रजापतिष्ट्वा सादयतु"-इति ‡ मन्त्रे उपदध्यादित्यर्थ: । "पृष्ठे ह्यय मिति । 'पृथिव्यै'-इति, षष्ठ्य चतुर्थी § । यतश्च पृथिव्या: 'पृष्ठे' उपरि 'अग्निर्ज्योतिष्मान्' वि ज्योतिश्चाग्निरित्युक्तम्— "अग्निर्वै प्रथमा विश्वज्योति रिति ‖ अत: "पृष्ठे पृथिव्या ज्योतिष्मतीम्"-इति ¶ मन्त्रवचनम् ॥ २६

"प्राणो वा इति । विद्यमाने एव प्राणे सर्वेषा मिन्द्रिया स्व-स्व-विषयप्रकाशकत्वात् प्राणस्य विश्वज्योतिष्ट्वम् । "सर्वस्मा वा एतस्मै'-इति । सर्वस्य खल्वेतस्य लोकस्य । पूर्ववच्चतुर्थी ** प्राण: आशास्यो †† भवतीति शेष: । अपानो व्यानश्चेति प्र एव वृत्तिभेदभिन्न: ; प्राणस्य विश्वज्योतिष्ट्वात् । 'विश्वस्मै' सर्व लोकस्य प्राणादिस्थैर्यार्थं तवोपधान मिति मन्त्रभाग आह । "स ज्योतिरिति विश्वशब्दार्थविवरणम् । "अग्निष्टेऽधिपतिरिति"-

---

* 'आण्डयोर्मध्ये'—इति क ।

† का० श्रौ० सू० १७. ४. २३ ।

‡, ¶ वा० सं० १३. २४. २ ।

§, ** पा० सू० २. ३. ६२. वा० १ ।

‖ इहैव पुरस्तात् २५ कण्डी ( २८७ पृ० ) द्रष्टव्या ।

†† 'आश्रयो'—इति ज ।

तन्मन्त्रभागकथनेन 'अग्नि मेव' 'अस्याः' विश्वज्योतिषः 'अधिपतिं करोति' ।

हे विश्वज्योतिः ! पृथिव्याः पृष्ठे 'ज्योतिष्मतीं' ज्योतिषा युक्तां त्वां 'प्रजापतिः' 'सादयतु' स्थापयतु । किमर्थ मिति तत्राह— 'विश्वस्मै' विश्वस्य, सर्वस्य लोकस्य 'प्राणाय अपानाय व्यानाय' प्राणादिव्यापारार्थम् । किञ्च 'विश्वं' समस्तं 'ज्योतिः' तेजो 'यच्छ' नियच्छ , अस्मदायत्तं कुरु । 'ते' तव 'अग्निः अधिपतिः', अतः स त्वां 'परेभ्यो गोपायत्विति कृत्स्नमन्त्रार्थः ॥ २८ ॥

अथ ऋतव्याख्ययोरिष्टकयोरुपधानं विधत्ते— "अथेति * । 'ऋतव्ये'–इति "वाय्वृतुपित्रुषसो यत्"–इति † देवतार्थे यत् प्रत्ययः । "यचि भम्"–इति ‡ भ सञ्ज्ञायाम् "ओर्गुणः"–इति § गुणः , "वान्तो यिप्रत्यये"–इति ‖ अवादेशः । ऋतुदेवत्येष्टको पधानेन ऋतूना मेवोपधानं भवतीत्याह— "ऋतव एत इति ।

ऋतव्ययोरुपधाने मन्त्रं विधाय ¶ व्याचष्टे — "मधुश्चेति ** । मधुमाधवशब्दाभ्यां चैत्रवैशाखावुच्येते । "वासन्तिकाविति , "वसन्ताच्च"–इति †† ठञ्–प्रत्ययः । ऋतुशब्दो मासद्वये मुख्यः, अत्र

* का० श्रौ० सू० १७. ४. २४ ।

† पा० सू० ४. २. ३१ ।

‡ पा० सू० १. ४. १८ ।

§ पा० सू० ६. ४. १४६ ।

‖ पा० सू० ६. १. ७९ ।

¶ का० श्रौ० सू० १७. ४. २५ ।

** वा० सं १३. २५ ।

†† पा० सू० ४. ३. २० ।

तदवयवभूते मासे उपचारात् वर्त्तते । मधुश्च माधवश्चेत्येतौ वसन्त सम्बन्धिनौ 'ऋतू' मासौ ; अतश्च तद्देवत्यत्वेन तदात्मिके मुपदधामि इत्यर्थः । "नामनी"-इत्यादिना मधुमाधवश पयोगं दर्शयति । ननु स्वयमातृण्णादिवदेकैकस्या इष्टका उपधानं विहाय, कि मिति द्वयोरुपधान मिति तत्राह- इष्टके इति । इष्टकयोर्द्वित्वेऽपि सकृत्सादनेनैक मेव सम्पादयतीत्याह— "सकृदिति ॥ २८ ॥

प्रथमायां चितौ तदुपधानस्य कारण माह— "तद्यदि दिना । 'एते' ऋतव्ये 'अत्र' प्रथमायां चितौ 'उपदधाति'- यत्, तत्र कारण मुच्यते— 'एषः' चीयमानः 'अग्निः' 'संवत् संवत्सरात्मकः । अग्नेः संवत्सरात्मकत्वं संवत्सर मुखायां सम्भृ त्यादनीयत्वात् । चीयमानस्याग्नेः प्रजापतिरूपत्वं प्रागुक्तम् "स यः प्रजापतिर्व्यस्रंसत, अय मेव स योऽय मग्निश्चि इति * । 'सः' प्रजापतिः सर्वलोककारणत्वेन तदात्मकः । " त्सर एषोऽग्निरिति । तस्य संवत्सरात्मकत्वोक्तेश्च संवत्सरः लोकाः' खलु । "तस्येति । 'तस्य' संवत्सराग्निसर्वलोकात्मक प्रजापतेः । 'अय मेव लोकः' पृथिवी । प्रथमा चितिः, वसन्त ऋतुश्च, प्राथम्यसादृश्यात् 'अस्य' संवत्सरात्मकस्य 'प्रजापतेः' अव यवभूतः 'अयं' लोकः ; अतश्चात्र प्रथमायां चितौ 'एते' ऋतव्ये वसन्तर्त्तुदेवत्यत्वेन तदात्मिके उपदधातीति यत्, तेन यदि 'अस्य' प्रजापतेः 'आत्मनः' स्वस्य 'एतद्' इष्टकाद्वयलक्षणं

* इहैव पुरस्तात् चतुर्थी कण्डौ ( २७८ पृ० ) द्रष्टव्या ।

यदङ्ग मस्ति, तद् 'अस्मिन्' अवयवे प्रथमचितिलक्षणे 'एतत्' एतेन पुनः 'प्रतिदधाति' *; तस्मादेते प्रथमायां चितावुपदध्यात् ॥ ३० ॥

अथ पुनस्ते एव ऋतव्ये प्रजापतेः प्रतिष्ठात्मनापि स्तौति— "यद्वेवैते इति। "प्रतिष्ठो अस्य वसन्त ऋतुरिति। 'प्रतिष्ठा उ' इति पदविभागः। "आद्गुणः" †, उकारस्य "निपात एकाजनाङ्"-इति ‡ प्रगृह्यसञ्ज्ञायाम् "प्लुतः प्रगृह्या अचि"-इति § प्रकृतिभावात् "प्रतिष्ठो अस्येति। "एङः पदान्तादति"-इति ‖ पररूपत्वं न भवति। वसन्तर्त्तोः संवत्सरप्रथमावयवत्वात् प्रतिष्ठात्वम्। यत्रावयवे प्रतितिष्ठति, सा प्रतिष्ठा। यथा पुरुषः पदयोः प्रतितिष्ठति, तद्वत् संवत्सरोऽपि वसन्तर्त्तौ प्रतितिष्ठति। प्रथमायाश्चितेस्तु उत्तरचितिलक्षणान् प्रजापतेरवयवान् प्रत्याधारत्वात् प्रतिष्ठात्वम्; अतश्च प्रथमायां चितौ प्रकृतयोरिष्टकयोरुपधाने प्रजापतेः स्वस्य वसन्तर्त्तुदेवत्यत्वेन तदात्मकेतदिष्टकाद्वयलक्षणं यत् प्रतिष्ठारूप मङ्ग मस्ति, तदस्मिन्नेतेन प्रतिनिहितवान् भवतीत्यर्थः॥

अथानयोरिष्टकयोरुपधानस्य स्थानविशेषं विधाय प्रशंसति— "ते अनन्तर्हिते इति। "अनन्तर्हितास्तदिति। 'तत्'

---

* 'प्रदधाति'—इति ज।

† पा० सू० ६. १. ८७।

‡ पा० सू० १. १. १४।

§ पा० सू० ६. १. २५।

‖ पा० सू० ६. १ १०६।

तेन 'प्रजाः' 'ऋतुभ्यः' 'अनन्तर्हिताः' अव्यवहिताः 'दधाति' ऋतुषु प्रतिष्ठापयतीत्यर्थः। तदेव दर्शयति— "तस्मादिति। यत एवं तस्मात् 'प्रजाः' 'ऋतूनेव' अभिलक्ष्य 'प्रजायन्ते' 'गर्भं सन्तं' गर्भेऽपि विद्यमानं 'जन्तुम्' ऋतुभिर्ह्येव 'सम्पश्यन्ति'। ऋतूनां कालात्मकत्वात्, कालस्य च सदातनत्वेन सर्वोत्पत्तिमन्निमित्तत्वाद्, अजातावस्था, जायमानावस्था, जातावस्था च तत्रैव सम्बध्यन्त इति भावः ॥ २१ ॥

विधत्ते— "अथेति *। 'अथ' ऋतव्येष्टकोपधानानन्तरम्, अषाढाभिधा मिष्टका मुपदध्यात्। अषाढायाः मृन्मयेष्टकात्वात् तदुपधाने पृथिव्युपधान मेव सम्पादितम् भवतीत्याह— "इयं वा इति। तस्या अषाढाया उपधानम् चयनस्थलस्य पूर्वभागे कर्त्तव्य मित्याह— "तां पूर्वार्द्ध इति। ननु किमर्थ मस्याः पूर्वार्द्धे उपधान मिति तत्राह— "प्रथमेति। 'इयम्' अषाढा, उखायाः 'प्रथमा' पूर्वा 'असृज्यत' खलु ॥ ३२ ॥

प्रकृताया इष्टकायाः अषाढेतिनामधेयप्राप्तिप्रदर्शनपूर्वक मुपधानोपयोगं दर्शयति — "सा यदषाढा नामेत्यादिना। पुरा खलु 'देवाश्चासुराश्च' 'प्राजापत्याः' प्रजापतेरपत्यभूताः। पत्युत्तरपदत्वाद् "दित्यदित्येत्यादिना † अपत्यार्थे ण्य-प्रत्ययः। 'ते' एते उभयेऽपि स्पर्द्धा मकुर्वन्। ततः 'ते देवाः' केनोपायेनासुरान् जयेमेति विचार्य, 'एताम्' अषाढाभिधाम् 'इष्टकां' तदुपायत्वेन 'अपश्यन्'। दृष्ट्वा च 'ता मिमाम्' इष्टका मुपहितवन्तः। ततः 'ता

* का० श्रौ० सू० १७. ४. २५।

† पा० सू० ४. १. ८५।

मुपधाय' 'असुरान्' 'सपत्नान्' वैरिणः, 'भ्रातृव्यान्'-इति सपत्न-शब्दार्थविवरणम्। भ्रातृशब्दात् "व्यन् सपत्ने"-इति * सपत्नार्थे व्यनो विधानात्। तानसुरान् 'अस्मात् सर्वस्मात्' स्थानात् 'असहन्त' निराकुर्वन्, यथैषु लोकेषु अवस्थानं न लभन्ते, तथा पर्यबोभवन्नित्यर्थः। यत एतया असुरानसहन्त, 'तस्मादषाढा'-इति नामधेयम्। अत्रासुराणां सहनकथनेन स्वेषा मसहन मर्थतः प्राप्तम्; अतश्चैतस्या इष्टकायाः स्वेषा मसहनं प्रत्यपि कारणत्वादसहनसाधनत्वेनाषाढेत्युच्यते। "साढ्यै साढ्वा साढेति निगमः" -इति † 'साढा'-शब्दो निपातितः, ततो नञ्समासः, व्यत्ययेन मूर्द्धन्यादेशः। "तथैवैतदिति। यथैव देवा अषाढा मुपधाय असुरान्निराकुर्वन्, 'तथैव' 'यजमान एता मुपधाय' 'द्विषन्तम्' द्वेषं कुर्वन्तम्, 'भ्रातृव्यम्' अस्मात् सर्वस्मात् 'प्रदेशान्निराकुरुते' ॥ २२ ॥

अथैता मेवेष्टकां वागात्मनापि प्रशंसति ‡—"यद्देवेति। "वाचैव तद्देवाः"-इत्यादिना अषाढाया वाग्रूपत्वं § प्रतिपाद्यते। यतो देवा निर्भर्त्सनादिविशिष्टया 'वाचैव 'असुरानसहन्त', तस्मान्निराकरणसाधनत्वसाधर्म्यादषाढा वाक् खल्वित्यर्थः। "तथैवेति। यतो देवाः वाचा असुरान् असहन्त, ततो देववदेव 'यजमानः' अपि 'वाचैव द्विषन्तं भ्रातृव्य मस्मात् सर्वस्मात् सहते'।

---

* पा० सू० ४. १. १४५।

† पा० सू० ६. ३. ११३।

‡ 'प्रशंसति'—इति ङ।

§ 'वाग्रूपाषाढयोक्तं'—इति ङ।

यतः अषाढा उक्तन्यायेन वागात्मिका, अत एतेन अषाढो पधानेन 'वाच मेव उपादधत देवाः', 'तथैव' 'यजमानः' 'वाच मेवोपधत्ते' ॥ ३४ ॥

यदुक्त मियं वा अषाढेत्यषाढायाः पृथिव्यात्मकत्वम् * तदुपजीव्यास्या अषाढाया इष्टकायाः 'वामभृत्'-सञ्ज्ञाप्राप्तिं दर्शयति— "सेय मिति। 'वामं' वननीयं वस्तु; 'प्राणः' सर्वैराशास्यमानत्वात् 'वामं' वस्तु। 'यत् किञ्च' 'प्राणि' प्राणवत् अर्थजात मस्ति, 'तत् सर्वम्' 'इयं' पृथिवी 'बिभर्ति' खलु। अतश्च वामशब्देन प्राणाना मभिधानात्, प्राणानां तद्वतां चाभेदविवक्षया 'इयं' पृथिवी 'वामभृत्'-सञ्ज्ञेति तदात्मिका प्यषाढा वामभृत्-सञ्ज्ञेत्यर्थः। "वाग्वा अषाढेति यदुक्तं वागात्मत्वकम् †, तदप्युपजीव्यैतत्सञ्ज्ञालाभ माह— "वाग् त्वेवेति। "वाचि वा"-इत्यत्र वाक्शब्देन वागिन्द्रियस्थानं मुखं लक्ष्यते, प्राणानुविधायित्वात् प्राणशब्देन च श्रोत्रादीनीन्द्रियाणि, प्राणिभ्योऽर्थे वाचि मुखे अन्नं 'धीयते' निधीयते "तस्माद् वाग्वामभृदिति। तदात्मिकाषाढापि वामभृदित्यभिधीयते ॥ ३५ ॥

सेय मित्यादिनोक्तप्रकारेण निष्पन्न मर्थ माह— "त एते इति। सेय मित्यादिना अषाढाया आधिभौतिकप्राणात्मकत्व मुक्तम्, वाग्घ त्वेवेत्यादिना तु आध्यात्मिकप्राणात्मकत्वम्। ततश्च अषाढेति यदेषा, 'ते सर्वे प्राणाः' आध्यात्मिकत्वा-

---

* इहैव परस्तात् ३२ कण्डी ( २८६ पृ० ) द्रष्टव्या।

† पुरस्तात् ३४कण्डी ( २८६ पृ० ) द्रष्टव्यम्।

धिभौतिकत्वादिभेदेनोभयविधा अपि प्राणा इत्यर्थः। 'त एते' -इति 'प्राणाः'-इत्येतदपेक्षया लिङ्गवचने। उक्त मषाढाया उभयविधप्राणात्मकत्व मुपजीव्य, तस्याः पूर्वभागे उपधान मुपपादयति— "तां पूर्वार्द्ध इति। "तस्मादिति। 'पुरस्तात्' पूर्वभागे इत्यर्थः। "इमे"-इति अभिनयेन निर्देशः। 'तस्मात्' पूर्वार्द्धे उपधानात् मुखे 'इमे प्राणाः' अवतिष्ठन्त इति शेषः। अषाढायाः पूर्वभागे मन्त्रवत्या इष्टकाया उपधानं निवारयति —"तां नान्ययेति। 'पुरस्तात्' 'ताम्' मषाढां 'प्रति' 'अन्यया' मन्त्रवत्या इष्टकयोपधानं 'न' सम्पादयेत्। 'एतस्यां चिता-विति। तत्र हेतुरुच्यते— "नेदिति, निपातः परिभये वर्त्तते *। अषाढायाः प्राणात्मकत्वाद् एतस्यां प्रथमायां चितौ तस्याः पुरस्तात् मन्त्रवदिष्टकोपधाने तद्‌व्यवधानात् 'प्राणान्' एव अपिहितवान् भवतीति परिभयेन नोपदध्यादित्यर्थः ॥ ३६ ॥

ननु यदि समन्त्रकाणा मिष्टकाना मुपधाने प्राणापिधानम्, तर्हि अपस्यानां मन्त्रविशिष्टाना मिष्टकाना मुपधानेन तत् कस्मान्न भवतीत्यत आह— "यद्वपस्या इति। अपस्याना मन्नात्मकत्वं तद्विधायकब्राह्मणेऽभिधास्यति †। अपश्चान्नात्मिकाः; तत्कारणत्वात्। अन्नेन तु प्राणाना मपिधानं न सम्भवति; अन्नोपजीवित्वात् प्राणानाम्। अतश्चान्नात्मकत्वादपस्यानां समन्त्रकाणा मप्युपधानं न विरुध्यत इति भावः। अथ तस्या उपधान मृतव्ययोः समीपे विधाय स्तौति— "ता मनन्तर्हिता

* "नेति एष इदित्येतेन सम्प्रयुज्यते परिभये"—इति निरु० १. ३. ६।

† इहैवोपरिष्टाद् पञ्चमे ब्राह्मणे १० कण्डिकायां द्रष्टव्यं भविष्यति।

मिति। 'सेयं वागृतुषु प्रतिष्ठिता वदतीति। ऋतुष्ववस्थि… प्राणिषु प्रतिष्ठिता वदतीत्यर्थः ॥ ३७ ॥

"प्रजा वै विश्वज्योतिरिति विश्वज्योतिषः प्रजात्व मुक्ता… "वाग्वा अषाढेति अषाढाया वाक्त्वं प्रतिपादितम्, ततश्च वि… ज्योतिषः समीपे आषाढाया उपधाने सति प्रजासु वागुपहि… भवति; तदुक्त्वा तयोर्मध्ये किमर्थं ऋतव्ययोरुपधानं … मित्याशङ्क्य तत्कारण माह— "तदाहु रिति। "संवत्सरो … ऋतव्ये इति। "ऋतव एते यदृतव्ये इति ऋतव्ययोः ऋत्वा… कत्त्वात्, सम्भूय सर्वेषा मृतूनां संवत्सरात्मकत्त्वात्, ऋत… संवत्सरः। ततश्च ऋतव्ययोरन्तरोपधाने संवत्सरेण प्रजाभ्यो वा… व्यवहितां करोति। 'तस्मात्' इदानी मुत्पत्तेरुपरि 'संवत्सरवेला… संवत्सरे गते सति पश्चात् 'प्रजाः वाचं प्रवदन्ति' ॥ ३८ ॥

प्रकृताया इष्टकाया उपधाने मन्त्रं विदधानो व्याचष्टे… अषाढासीत्यादिना *। यतो 'देवाः' 'एतया' इष्टकया 'असुरा… 'असहन्त' निराकुर्वन्; अतः सहनसाधनत्त्वाद् "अषाढासी… मन्त्र आह। "सहस्रवीर्यासीत्यत्र सहस्रशब्देनापरिमितत्व… विवक्षितेति दर्शयति— "सर्वं वै सहस्र मिति। … इष्टके! त्वं 'सहमाना' असुराणां निराकर्त्री; अतो नाम्ना अषा… ढासि। तस्मात् 'अरातीः' अदानशीलान् (शत्रून् †) 'सह… परिभावय। किञ्च ये पूर्वं विरोधिनो न भवन्ति, इतः पर… 'पृतनां' सङ्ग्राम मिच्छन्ति, ते 'पृतनायतः'। पृतनाशब्दा…

* वा० सं० १३. २६।

† नास्त्येतत् पदं ङ-पुस्तके।

अकारलोपाभावश्छान्दसः । तानपि परिभावय। किञ्च त्वं 'सहस्रवीर्यासि' अपरिमितवीर्यविशिष्टा * भवसि। अनेन शत्रु-निराकरणसामर्थ्य मुपपादितम् भवति। तादृशी 'सा' मां 'जिन्व' प्रीणीहीति मन्त्रार्थः ॥ ३९ ॥

अथ दूर्वेष्टकादीनां स्वयमातृण्णायाः प्राग्भागे उपधाने कारण माह— "तदाहुरिति। 'अभि स्वयमातृण्णाम्' अभिलक्ष्य, स्वयमातृण्णाया उपरि भागे इत्यर्थः। "लक्षणेनाभिप्रती आभिमुख्ये" -इत्यव्ययीभावसमासः †। 'अन्या इष्टकाः' उपरि वक्ष्यमाणाः 'उपधीयन्ते' 'एताः' दूर्वेष्टकादयस्तु तस्याः 'प्राच उपधीयन्ते'-इति यदस्ति, तत्रोत्तर माह—"द्वे वै योनी"-इति। 'देवयोनिः' 'अन्यः', 'मनुष्ययोनिः अन्यः, इति यदुक्त मन्यत्वम्, तदाह— "प्राचीनेति। 'प्राचीने भागे' पूर्वभागे 'प्रजननम्' उत्पत्तिः, तत्कारणं वा येषां ते तथोक्ताः; 'मनुष्याः' तु 'प्रतीचीनप्रजननाः' अतश्च 'एताः' इष्टकाः स्वयमातृण्णायाः 'प्राचीः' प्रागपवर्गाः 'उपदधाति'-इति यत्, तेन 'देवयोनेरेव' 'एतत्' एनं 'यज-मानम्' 'प्रजनयति' उत्पादयति। दूर्वेष्टकादीना मुत्तरोत्तर-पूर्वभावेन उपधानं कात्यायनेनोक्तम्— "पूर्वाम्-पूर्वा मुत्त-राम्"-इति ‡ ॥ ४० ॥ २ [४. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे चतुर्थेऽध्याये द्वितीयं ब्राह्मणम् ॥

* 'अपरिमितसङ्ख्याकवीर्यविशिष्टा'—इति ङ।

† पा० सू० २. १. १४। ‡ का० श्रौ० सू० १७. ४. १९।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शर्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा प्राचसात्सिङ्गणार्यः *।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

॥ इति सप्तमकाण्डे तृतीयप्रपाठकस्य समाप्तः † ॥

---

* अत्रत्याशीष्यन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः।

† अत्र १ ब्रा० ४५ क०, २ ब्रा० ४० क; सङ्कलयनयात्र तृतीयप्रपाठकीयदयोर्ब्राह्मणयोः ८५ कण्डिकाः श्रुता इति।

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ,

अपि वा

पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

॥ हरिः ॐ ॥

कूर्म्म मुपदधाति। रसो वै कूर्मो रस मेवैतदु-पदधाति यो वै स एषां लोकाना मप्सु प्रविद्धानां पराङ्रसोऽत्यक्षरत्स एष कूर्म्मस्त मेवैतदुपदधाति या-वानु वै रसस्तावानात्मा स एष इमऽएव लोकाः * ॥ १ ॥

तस्य यदधरं कपालम्। अयꣳ स लोकस्तत् प्रतिष्ठितमिव भवति प्रतिष्ठित इव ह्ययं लोकोऽथ यदुत्तरꣳ सा द्यौस्तद्व्यवगृहीतान्त मिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षꣳ

* 'लोकाः'—इति ग, घ।

स एष इमऽएव लोका इमानेवैतल्लोकानुपदधाति ॥ २ ॥

त मभ्यनक्ति । दध्ना मधुना घृतेन दधि हैवास्य लोकस्य रूपं घृत मन्तरिक्षस्य मध्वमुष्य स्वेनैवैन मेतद्रूपेण समर्द्धयत्यथो दधि हैवास्य लोकस्य रसो घृत मन्तरिक्षस्य मध्वमुष्य स्वेनैवैन मेतद्रसेन समर्द्धयति * ॥ ३ ॥

मधु व्वाता ऋतायत ऽइति । यां वै देवता मृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्तद्वैतन्मध्वेवैष व्विचो रसो वै मधु रस मेवास्मिन्नेतद्दधाति गायत्रीभिस्त्रिष्टुभिस्तस्योक्तो बन्धुः ॥ ४ ॥

स यत् कूर्मो नाम । एतद्वै रूपं कृत्वा प्रजापतिः प्रजा असृजत यदसृजताकरोत्तद्यदकरोत् तस्मात् कूर्म्मः कश्यपो वै कूर्म्मस्तस्मादाहुः सर्व्वाः प्रजाः काश्यप्य इति ॥ ५ ॥

---

* 'समर्द्धयति'—इति ख ।

स यः स कूर्म्मोऽसौ स आदित्यः। अमु मेवै-तदादित्य मुपदधाति तं पुरस्तात् प्रत्यञ्च मुपदधात्यमुं तदादित्यं पुरस्तात् प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात् प्रत्यङ् धीयते दक्षिणतोऽषाढायै वृषा वै कूर्म्मो योषाषाढा दक्षिणतो वै वृषा योषा मुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषा मुपशेते सैषा सर्व्वासा मिष्टकानां महिषी यदषाढैतस्यै दक्षिणतः सन्त्सर्व्वासा मिष्टकानां दक्षिणतो भवति ॥ ६ ॥

यद्देव कूर्म्म मुपदधाति। प्राणो वै कूर्म्मः प्राणो हीमाः सर्व्वाः प्रजाः करोति प्राण मेवैतदुपदधाति तं पुरस्तात् प्रत्यञ्च मुपदधाति पुरस्तात्तत् प्रत्यञ्चं प्राणं दधाति तस्मात् पुरस्तात् प्रत्यङ् प्राणो धीयते पुरुष मभ्यावृत्तं यजमाने तत् प्राणं दधाति दक्षिणतोऽषाढायै प्राणो वै कूर्म्मो व्वागषाढा प्राणो वै व्वाचो वृषा प्राणो मिथुनम् ॥ ७ ॥

अपां गम्भन्त्सीदेति। एतद्वापां गम्भिष्ठं यत्रैष एतत्तपति मा त्वा सूर्योऽभितासीन् माग्निर्वैश्वानर

इति मैत्र त्वा सूर्यो हिꣳसीन् मो ऽअग्निर्वैश्वानर
इत्येतदच्छिन्नपत्राः प्रजा अनुवीक्षस्वेतीमा वै सर्वाः
प्रजा या इमा इष्टकास्ता अरिष्टा अनार्त्ता अनु
वीक्षस्वेत्येतदनु त्वा दिव्या वृष्टिः सचता मिति
यथैवैनं दिव्या वृष्टिरनुसचेतैव मेतदाह ॥ ८ ॥

अथैन मेजयति । त्रीन्त्समुद्रान्त्समसृपत्
स्वर्गानिती मे वै त्रयः समुद्राः स्वर्गा लोकास्तानेष
कूर्म्मो भूत्वानुसꣳससर्पापां पतिर्वृषभ इष्टकाना
मित्यपाꣳ ह्येष पतिर्वृषभ इष्टकानां पुरीषं
वसानः सुकृतस्य लोक ऽइति पशवो वै पुरीषं
पशून् वसानः सुकृतस्य लोक इत्येतत् तत्र गच्छ
यत्र पूर्व्वे परेता इति तत्र गच्छ यत्रैतेन पूर्व्वे
कर्म्मणेयुरित्येतत् ॥ ९ ॥

मही द्यौः पृथिवी च न इति । महती द्यौः
पृथिवी च न इत्येतदिमं यज्ञं मिमिक्षता मितीमं
यज्ञ मवता मित्येतत्पिपृतां नो भरीमभिरिति
बिभृतां नो भरीमभिरित्येतद् द्यावापृथिव्ययोत्तमयो-
पदधाति द्यावपृथिव्यो हि कूर्म्मः ॥ १० ॥

त्रिभिरुपदधाति । त्रय इमे लोका अथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुपदधाति त्रिभिरभ्यनक्ति तत् षट् तस्योक्तो बन्धुरवका अधस्ताद्भवन्त्यवका उपरिष्टादापो वा ऽअवका अपा मेवैन मेतन्मध्यतो दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ११ ॥

अथोलूखलमुसले ऽउपदधाति । विष्णुरकामयतान्नादः स्या मिति स एते ऽइष्टके ऽअपश्यदुलूखलमुसले ते ऽउपाधत्त ते ऽउपधायान्नादो ऽभवत्तथैवैतद्यजमानो यदुलूखलमुसले ऽउपदधाति येन रूपेण यत् कर्म कृत्वा विष्णुरन्नादोऽभवत्तेन रूपेण तत् कर्म कृत्वान्नादोऽसानीति तदेतत्सर्वं मन्नं यदुलूखलमुसले ऽउलूखलमुसलाभ्याᳵ ह्येवान्नं क्रियत ऽउलूखलमुसलाभ्या मद्यते * ॥ १२ ॥

ते रेतस्सिचोर्वेलयोपदधाति । पृष्टयो वै रेतःसिचौ मध्य मु पृष्टयो मध्यत एवास्मिन्नेतदन्नं दधा-

---

* 'मद्यते'—इति क, ख ।

त्युत्तरे ऽउत्तर मेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्नि-
मात्राद्ध्यन्न मद्यते ॥ १३ ॥

प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो
विष्णुरन्न मेतदात्मसम्मित मेवास्मिन्नेतदन्नं दधाति
यद्वा ऽआत्मसम्मित मन्नं तदवति तन्न हिनस्ति
यद्भूयो हिनस्ति तद्यत् कनीयो न तदवति ॥ १४ ॥

औदुम्बरे भवतः । ऊर्ग्वै रस उदुम्बर ऊर्ज
मेवास्मिन्नेतद्रसं दधात्यथो सर्व्वं ऽएते व्वनस्पतयो
यदुदुम्बर एते ऽउपदधत् सर्व्वान् व्वनस्पतीनुप
धाति रेतस्सिचोर्व्वेलयेमे वै रेतस्सिचावनयोस्तद्व
स्पतीन् दधाति तस्मादनयोर्व्वनस्पतयश्चतुःस
भवति चतस्रो वै दिशः सर्व्वासु तद्दिक्षु व्व
स्पतीन् दधाति तस्मात् सर्व्वासु दिक्षु व्वनस्पतयो
मध्ये सङ्गृहीतं भवत्युलूखलरूपतायै ॥ १५ ॥

यद्वेवोलूखलमुसले ऽउपदधाति । प्रजापते-
र्व्विस्रस्तात् प्राणो मध्यत ऽउदचिक्रमिषत्त मन्नेना-
गृह्णात् तस्मात् प्राणो ऽन्नेन गृहीतो यो ह्येवान्न-
मत्ति स प्राणिति ॥ १६ ॥

प्राणे गृहीते ऽस्मादन्नमुदचिक्रमिषत्तत् प्राणेनागृह्णात् तस्मात् प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति ॥ १७ ॥

एतयोरुभयोर्गृहीतयोः । अस्मादूर्गुदचिक्रमिषत्ता मेताभ्या मुभाभ्या मगृह्णात् तस्मादेताभ्या मुभाभ्यामूर्ग् गृहीता यो ह्येवान्न मत्ति स प्राणिति तमूर्ज्जयति ॥ १८ ॥

ऊर्ज्जि गृहीतायाम् । अस्मादेते ऽउभे ऽउदचिक्रमिषतां ते ऽऊर्ज्जागृह्णात् तस्मादेते ऽउभे ऊर्ज्जा गृहीते यऽ ह्येवोर्ज्जयति स प्राणिति सोऽन्न मत्ति ॥ १९ ॥

तान्येतान्यन्योऽन्येन गृहीतानि । तान्यन्योऽन्येन गृहीत्वात्मन् प्रापादयत तदेतदन्नं प्रपद्यमानꣳ सर्व्वे देवा अनुप्रापद्यन्तान्नजीवनꣳ हीदꣳ सर्व्वम् ॥ २० ॥

तदेष श्लोकोऽभ्युक्तः । तद्वै स प्राणो ऽभवदिति तद्धि स प्राणो ऽभवन् महा भूत्वा § प्रजापति-

§ 'महान् भूमा'—इति क, ख। दृष्टं च वेबरमहोदयेनापि।

रिति महान् हि स तद् भवद्यदेन मेते देवा
प्रापद्यन्त भुजो भुजिष्या व्वित्वेति प्राणा वै भुजं
ऽन्नं भुजिष्या एतत् सर्व्वं व्वित्वेत्येतद्यत् प्राणान्
प्राणयत् पुरीत्यात्मा वै पूर्यद्वै प्राणान् प्राणयत्
तस्मात् प्राणा देवा अथ यत् प्रजापतिः प्राणयत्
तस्माद् प्रजापतिः प्राणो यो वै स प्राण एषा सा
गायत्र्यथ यत् तदन्न मेष स व्विष्णुर्देवताथ या सो
ऽर्गेष स उदुम्बरः * ॥ २१ ॥

सो ऽब्रवीत्। अयं व्वाव मा सर्व्वस्मात् पाप्म
उदभार्षीदिति यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भ
उदुम्भरो ह वै त मुदुम्बर इत्याचक्षते परोऽक्षम्परोऽक्ष
कामा हि देवा उरु मे करदिति तस्मादुरुक
मुरुकरꣳ ह वै तदुलूखल मित्याचक्षते परोऽक्षम्परो
ऽक्षकामा हि देवाः सैषा सर्व्वेषां प्राणानां योनि
र्यदुलूखलꣳ शिरो वै प्राणानां योनिः ॥ २२ ॥

तत् प्रादेशमात्रं भवति। प्रादेशमात्र मिव

---

* 'उडुम्बरः'—इति ख, 'उडुम्बरः'—इति ग, घ।

हि शिरश्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मध्ये सङ्गृहीतं भवति मध्ये सङ्गृहीत मिव हि शिरः ॥ २३ ॥

तं यत्र देवाः समस्कुर्व्वन् तदस्मिन्नेतत् सर्व्वं मध्यतोऽदधुः प्राण मन्न मूर्ज्जं तथैवास्मिन्नय मेतद्दधाति रेतस्सिचोर्व्वेलया पृष्टयो वै रेतस्सिचौ मध्य मु पृष्टयो मध्यत एवास्मिन्नेतत् सर्व्वं दधाति ॥ २४ ॥

विष्णोः कर्म्माणि पश्यतेति । वीर्यं वै कर्म्म विष्णोर्व्वीर्याणि पश्यतेत्येतद्यतो व्रतानि पस्पश ऽइत्यन्नं वै व्रतं यतोऽन्नꣳ स्पाशयाञ्चक्र ऽइत्येतदिन्द्रस्य युज्यः सखेतीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति * द्वे ह्युलूखलमुसले सकृत् सादयति समानं तत् करोति समानꣳ ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २५ ॥

* 'द्विदेवत्यौ भवति'—इति क, ख ।

अथोखा मुपदधाति । योनिर्वा ऽउखा योनि मेवैतदुपदधाति ता मुलूखल ऽउपदधात्यन्तरिक्षं वा ऽउलूखलं यद्वै किञ्चास्या ऊर्द्ध मन्तरिक्ष मे तन्मध्यं वा ऽअन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात् सर्व्वेषां भूतानां मध्यतो योनिरपि वन-स्पतीनाम् ॥ २६ ॥

यद्वेवोखा मुपदधाति । यो वै स प्रजापति-र्व्यंस्त्रꣳसतैषा * सोखि मे वै लोका उखि मे लोका प्रजापतिस्ता मुलूखल ऽउपदधाति तदेन मेतस्मि-न्सर्व्वास्मिन् प्रतिष्ठापयति प्राणो ऽन्न ऽऊर्ज्यंथो ऽए तस्मादेवैन मेतत् सर्व्वस्मादनन्तर्हितं दधाति ॥ २७ ॥

अथोपशयां पिष्ट्वा । लोकभाज मुखां कृत्वा पुरस्तादुखाया उपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तरिता भवति ॥ २८ ॥

तदाहुः । कथ मस्यैषा पक्वा शृतोपहिता भव-

* 'व्यस्त्रꣳससतैषा'—इति ग, घ ।

तीति यदेव यजुष्कृता तेनाथो यद्वै किञ्चैत मग्निं वैश्वानर मुपनिगच्छति तत एव तत् पक्वꣳ शृत मुपहितं भवति ॥ २९ ॥

ध्रुवासि धरुणेति। तस्योक्तो बन्धुरितो जज्ञे प्रथम मेभ्यो योनिभ्यो ऽअधि जातवेदा इत्येतेभ्यो हि योनिभ्यः प्रथमं जातवेदा अजायत स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्नि-त्येतैर्वा ऽएष छन्दोभिर्देवेभ्यो हव्यं वहति प्रजा-नन् ॥ ३० ॥

इषे राये रमस्व। सहसे द्युम्न ऽऊर्जे ऽअप-त्यायेत्येतस्मै सर्वस्मै रमस्वेत्येतत् सम्राडसि स्वरा-डसीति सम्राट् च ह्येष स्वराट् च सारस्वतौ त्वोत्सौ प्रावता मिति मनो वै सरस्वान् वाक्सर-स्वत्येतौ सारस्वता ऽउत्सौ तौ त्वा प्रावता मित्ये-तद् द्वाभ्या मुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ३१ ॥

अथैना मभिजुहोति। एतद्वा ऽअस्या मेतत्

पूर्व्वᳬ रेतः सिक्तं भवति सिकतास्तदेतदभिकरो[ति]
तस्माद्योनौ रेतः सिक्त मभिक्रियत ऽआज्येन जु[हो]
होति स्रुवेण स्वाहाकारेण द्वाभ्या माग्नेयीभ्यां गाय[त्री]
त्रीभ्यां तस्योक्तो बन्धुः ॥ ३२ ॥

अग्ने युक्ष्वा हि ये तव। युक्ष्वा हि देवहूत[त]-
मानिति युक्तवतीभ्या मिद मेवैतद्योनौ रेतो युनक्ति
तस्माद्योनौ रेतो युक्तं न निष्पद्यते ॥ ३३ ॥

स यदि संव्वत्सरभृतः स्यात्*। अथाभिजुहु-
यात् सर्व्वं वै तद्यत् संव्वत्सरभृतः सर्व्वं तद्यदभि-
जुहोत्यथ यद्यसंव्वत्सरभृतः स्यादुपैव तिष्ठेता सर्व्वं
वै तद्यदसंव्वत्सरभृतो ऽसर्व्वं तद्यदुपतिष्ठते ऽग्नि[ष्व]-
त्वेव जुहुयात् ॥ ३४ ॥

पशुरेष यदग्निः†। सो ऽत्रैव सर्व्वः कृत्स्नः
संस्कृतस्तस्यावाङ् प्राणः स्वयमातृण्णा श्रोणी द्वियजु[षी]
पृष्ट्यो रेतस्सिचौ कीकसा व्विश्वज्योतिः ककुद[भौ]

---

* 'स्यात्'—इति ग, घ।

† 'यदग्नि'—इति ग, घ।

मृतव्ये ग्रीवा अषाढा शिरः कूर्म्मो ये कूर्म्मे प्राणा ये शीर्षन् प्राणास्ते * ते ॥ ३५ ॥

तं वा ऽएतम्। इत ऊर्द्ध्वं प्राञ्चं चिनोत्यसौ वा ऽआदित्य एषो ऽग्निरमुं तदादित्य मित ऊर्द्ध्वं प्राञ्चं दधाति तस्मादसावादित्य इत ऊर्द्ध्वः प्राङ् धीयते † ॥ ३६ ॥

अथैनं प्रसलव्यावर्त्तयति। अमुं तदादित्यं प्रसलव्यावर्त्तयति तस्मादसावादित्य इमांल्लोकान् प्रसलव्यनुपर्य्येति ॥ ३७ ॥

उदरमुखा ‡। योनिरुलूखल मुत्तरोखा भवत्यधर मूलूखल मुत्तरꣳ ह्युदर मधरा योनिः शिश्नं मुसलं तद् वृत्त मिव भवति वृत्त मिव हि शिश्नं तद् दक्षिणत उपदधाति दक्षिणतो वै वृषा योषा मुपशेते यदु पशोः संस्कृतस्यान्नं तद् दूर्वेष्टका तस्य वा ऽएतस्योत्तरोऽर्द्ध उदाहिततरो भवति पशु-

* 'ते'—इति ग, घ।

† 'धीयते'—इति क।

‡ 'उदरमुखा'—इति ग, घ।

रेष यदग्निस्तस्मात् पशोः सुहितस्योत्तरः कुक्षिरुन्नत-
तरो भवति * ॥ ३८ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [ ५. १. ]॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन् ब्राह्मणे स्वयमातृण्णादीना मुपधान मभिहितम्। अथास्मिन् ब्राह्मणे कूर्मादीना मुपधान मभिधास्यते। तत्रादौ तावत् कूर्मोपधानं विधाय तं रसात्मना स्तौति— "कू मुपदधातीति। उक्त मेव कूर्मस्य रसत्वं प्रतिपादयति— " वै स इति। 'एषां' पृथिव्यादीनां 'लोकानाम्' 'अप्सु' 'प्रविद्धानां' मग्नानां 'सः' प्रसिद्धो यः 'रसः' 'पराङ्' अनावृत्तः 'अत्यक्षरत्' अस्रवत्। 'सः' रसः 'एषः' इदानी मस्माभिरुच्यमानः 'कूर्मः' अतः 'त मेव' रसम् 'एतत्' एतेन कूर्मोपधानेनोपहितवान् भवति। लोकरसत्वप्रनाड्या कूर्मस्य लोकात्मकत्व मेवाह— "यावा वा इति। 'रसः' 'यावान्' यत्परिमाणः, 'आत्मा' देहोऽपि 'तावान्' तत्परिमाणः; रस एव देहस्यान्तर्भावात्। यथा विलीने लोहपिण्डे तत्स्वरूपं तद्रसे सूक्ष्माकारेण अवतिष्ठते तद्वल्लोकरसात्मके कूर्मे 'लोकाः' अपि सूक्ष्मरूपेण अवतिष्ठन्ते इति 'स एषः' कूर्मः एतत् सर्वलोकात्मक इत्यर्थः ॥ १ ॥

यदुक्तं कूर्मस्य पृथिव्यादिलोकत्रयात्मकत्वम्, तदेव तच्छ्

* 'भवति'—इति क।

रीरे विविच्य दर्शयति— "तस्येति । 'तस्य' कूर्मस्य यदधस्तनं 'कपालं' कठिनत्वक्, 'सः' 'अयं लोकः' पृथिवी । अधरकपाल-पृथिव्योः कस्यचित् साधर्म्यस्य प्रदर्शनात् तादात्म्य मुपपादयति— "तत् प्रतिष्ठित मिवेति । 'प्रतिष्ठितम्' अधः सर्वत्र पृष्ठतलम् । अधरकपाल-पृथिव्योस्तथाविधत्वात् तस्य पृथिव्यात्मकत्वम् । "अथेति । 'अथ' 'यत्' 'उत्तरं' कपालम्, 'तद्' 'द्यौः' द्युलोकः । पूर्ववत् तदेवोपपादयति—"तद् व्यवगृहीतान्त मिति । विविध मवगृहीतः अवनतः प्रान्तो यस्य, तत् तथोक्तम् । कूर्मस्योपरिकपालम् सर्वतो मण्डलाकारेणावनतप्रान्तम् 'इव' 'भवति', 'द्यौः' अपि तथाविधा ; अतस्तस्य तदात्मकत्वम् । अथ 'यत्' अधरोत्तरयोर्द्वयोः कपालयोः 'अन्तरा' मध्य मस्ति, 'तदन्तरिक्षम्' । अतः 'स एषः' कूर्मः, 'इमे' पृथिव्यादयः 'एव' लोकाः । तस्मादेतेनोपधानेन 'इमानेव लोकानुपदधाति' ॥ २ ॥

विहितस्य कूर्मस्य दधिमधुघृतैरभ्यञ्जनं विधत्ते— "त मभ्यनक्तीति * । दधिमधुघृतानां पृथिव्यादिलोकरूपत्वम् । घृतस्य, दध्न उपरिभावित्वात् पृथिव्युपरितनान्तरिक्षलोकरूपत्वम् । मधुनस्तु वृक्षाचलशिखरादिषूपरि भागेष्ववस्थितत्वात् द्युलोकात्मकत्वम् । अथवा मधुनो मधुररसत्वेन सोमात्मकत्वात्, सोमस्य च द्युलोकेऽवस्थानात्, 'मधु' द्युलोकरूपम् । प्रकारान्तरेणापि दध्यादिभिरभ्यञ्जनं प्रशंसति— "अथो इति ॥ ३ ॥

अभ्यञ्जने मन्त्रं विधत्ते— "मधु वाता ऋतायत इति † ।

---

* का० श्रौ० सू० १७. ४. २७ ।

† य० वा० १३. २७, २८, २९ ।

विहित मभ्यञ्जनमन्त्रं रसात्मना प्रशंसति—"यां वै देवता मिति
'यां देवताम्' 'अभि'-लक्ष्य, या 'ऋक्' 'अनूक्ता' उच्चारिता
तद्देवताप्रतिपादकत्वेनोच्यते, सा ऋक् तत्प्रतिपादकत्वात्
प्रतिपाद्या देवता। तथा यजुरपि। एवं च सत्यत्र तद्देवता
रूप मेतत् मधु; "मधुवाता ऋतायते"-इत्यनया ऋचा प्रति
पाद्यत्वात्। ततश्च 'एष तृचः' प्रतिपाद्यत्वेन देवतात्म
मध्वात्मकः। तिस्र ऋचो यस्मिन् समुदाये, स तृचः
"ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि"-इति * त्रिशब्दस्य सं
सारणम्, ऋवर्णस्य च लोपः, "ऋक्पूरब्धूरिति समासान्तः †
मधु च सोमरसस्वरूपम्; अतश्चैतेन तृचेनोपधाने सति र
त्मके 'अस्मिन्' कूर्मे 'रस मेव' विहितवान् भवति।

अभ्यञ्जनमन्त्राणां छन्दःसङ्ख्ये विधत्ते— "गायत्रीभिस्तिसृ
रिति। तद्व्याख्यानम् प्रागुक्त मित्याह— "तस्योक्तो बन्धुरिति
तच्च "गायत्रीभिः प्राणो गायत्री प्राण मेवास्मिन्नेतद्दधाति ति
भिः, त्रयो वै प्राणाः प्राण उदानो व्यानः, तानेवास्मि
तद् दधाति"-इति षष्ठकाण्डेऽभिहितम् ‡।

मन्त्राणा मय मर्थः §,— 'ऋतायते' ऋतं यज्ञ मात्म

---

* पा० ६. १. ३७ सू० १ वा०। † पा० सू० ५. ४. ७४

‡ ६का० ३प्र० २ब्रा० ५क० ( ६ भा० २११ पृ० )।

§ तत्पाठस्त्वेवम्,—

"मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः। १। मधु नक्त मुतोषसो मधुमत्
पार्थिवं रजः। मधु द्यौरस्तु नः पिता। २। मधुमान् नो
वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। ३।"

च्छतीति ऋतायन् यजमानः । व्यत्ययेनाकारः । तस्मै 'वाताः' वायवो 'मधु' मधुररसं 'क्षरन्ति' स्रावयन्ति । 'सिन्धवः' समुद्राश्च नद्यश्च 'मधु क्षरन्ति' । 'ओषधीः' ओषधयोऽपि । "वा-च्छन्दसि"-इति * पूर्वसवर्णदीर्घः । 'नः' अस्मत्सम्बन्धि यजमानार्थं 'माध्वीः' मधुररसोपेताः 'सन्तु' । "ऋत्व्यवास्त्व्यवास्त्वेत्यादिना † माध्वी-शब्दो निपातितः । किञ्च 'नक्तम्' रात्रिरपि 'मधु' मधुररसोपेता भवतु । अपि च 'उषसः' मधुररसोपेता भवन्तु । तथा यत् 'पार्थिवं रजः', तत् सर्वं 'मधुमत्' अस्तु । 'नः' अस्माकं यजमानस्य 'पिता' पितृस्थानीया 'द्यौः' 'मध्वस्तु' मधुररसोपेता भवतु । 'वनस्पतिः' अश्वत्थादिर्यज्ञसाधनभूतः 'नः' अस्मद्यजमानार्थं 'मधुमान् अस्तु' । 'सूर्यः' अपि 'मधुमान्' सन्तापराहित्यलक्षणमाधुर्यरसोपेतः 'अस्तु' । तथा 'गावः' 'नः' अस्मद्यजमानार्थं 'माध्वीः' मधुरक्षीरोपेताः 'भवन्तु' ॥ ४ ॥

अथ कूर्म इति नाम्नः प्रवृत्तिनिमित्तं दर्शयति— "स यत् कूर्म इति । 'एतत्' कूर्मसम्बन्धि 'रूपम्' आत्मनः 'कृत्वा' 'प्रजापतिः प्रजा असृजत' । असृजतेत्यस्य व्याख्यानम्— "यदसृजताकरोदिति । असृजतेति यत्, तदकरोदित्यर्थः । 'तत्' तेन कूर्मरूपेण 'अकरोत्'-इति 'यत्', तस्मात् अकरोदिति 'कूर्मः'-इति, कूर्मशब्दो नामधेय मित्यर्थः । करोतेरौणादिके मक्-प्रत्यये "बहुलं छन्दसि"-इत्युक्ते ‡, 'हलि च'-इति § दीर्घे च

* पा० सू० ६. १. १०६ ।

† पा० सू० ६. ४. १७५ । ‡ पा० सू० ७. १. १०३ ।

§ पा० सू० ८. २. ७७ ।

कृते, कूर्म इति रूपम् भवति। "कश्यपो वा"-इत्यादि स्याय मर्थः ,— कूर्मशब्दस्य करणे प्रवृत्तिनिमित्तकत्वात्, कश्यपस्य च प्रजापतित्वेन प्रजाकारकत्वात्, 'कश्यपः कूर्मः खलु अत एव 'सर्वाः प्रजाः काश्यप्यः' इति 'आहुः' जनाः। अत कूर्मस्य कश्यपात्मकत्वात् तदुपधानम् प्रशस्त मिति ॥ ५ ॥

अथ त मेव कूर्म मादित्यात्मनापि स्तौति— "स य इति। 'सः' प्रकृतो 'यः' 'कूर्मः' अस्ति, 'सः' 'असौ' विप्रकृष्टः 'आदित्यः' आदित्यात्मकत्वम् मण्डलाकारसाम्यात्, यथा 'आदित्यो यूपः' इति। एतस्योपधाने आदित्यस्यैवोपधानं कृतम् भवति। आ मादित्यात्मकत्व मुपजीव्य, तस्य चयनप्रदेशे एव पूर्वभागे प्रत्यङ्मुखस्योपधान माह— "तं पुरस्तादिति।

ननु कूर्मस्यादित्यात्मकत्वेन पुरस्तात् * प्रत्यगुपधानेनादित्यस्य पुरस्तात् प्रत्यङ्निधान मित्यन्योन्याश्रयता-दोष इति चेत्, मैवम् †; कारकज्ञापकयोर्हेतुहेतुमद्भाववैपरीत्यं भूषण मेव, न तु दूषणम्। यथा अग्निर्धूमस्य कारको हेतुः धूमश्चाग्नेर्ज्ञापक इति; तथात्रापि कूर्मस्य पुरस्तात् प्रत्यगुपधान मादित्यस्य पुरस्तात् प्राङ्निधाने कारकम्, आदित्यस्य पुरस्तात् प्रत्यगवस्थानं कूर्मस्यैवंविधोपधाने ज्ञापकम्। पुरस्तात् प्रत्यगुपधानम्, अषाढायाः पुरस्तादुत्तरतो वापि स्यादित्यत आह— "दक्षिणत इति। 'अषाढायै-

* "प्रत्यगुपधानम्, एतस्य च पुरस्तात्"—इत्यधिकः पाठोऽत्र ङ-पुस्तके।
† 'मैवम्'—इत्यस्य स्थाने "नैष दोषः"—इति ङ-पाठः।

ति, षष्ठ्यर्थे चतुर्थी *। उक्तेऽर्थे उपपत्ति माह— "वृषा वा इति। वृषशब्देन सेचनसमर्थत्वात् पुमानुच्यते; अषाढा-शब्दस्य स्त्रीलिङ्गत्वाद् अषाढा योषा खलु। "उत्तरतो हि स्त्री पुमांस मुपशेते"–इति श्रुतेः † पुमान् दक्षिणभागे योषा मुपशेते। उपशयनेन ईप्सिततमत्वात् योषा मिति द्वितीया ‡; तथास्य कूर्मस्य अषाढायाः दक्षिणभागे उपधान मुपपन्न मित्यर्थः। दक्षिणभागे विप्रकृष्टेऽप्युपधानं स्यादित्यत आह— "अरत्निमात्रे इति। उखाया अपि पुरस्ताद् अषाढायाः शिष्टत्वेन सर्वेष्टकाना मपि प्रशस्तत्वात् तद्दक्षिणभागे उपधानेन सर्वेष्टकाना मपि दक्षिणभागे उपशयनं सिद्धम् भवतीति दर्शयति— "सैषेति ॥ ६ ॥

अथ त मेव कूर्मं प्राणात्मनापि स्तौति— "यद्वेवेति। "प्राणो ह्येमा इति। 'प्राणः' खलु 'इमाः सर्वाः प्रजाः करोति'; प्राणिभिरेव प्रजाना मुत्पादनात्। अतश्च कर्त्तव्यत्वसामा-न्यात् 'प्राणः कूर्मः' इति। तदुपधाने प्राणस्यैवोपधानं भवति। "तं पुरस्तादिनोक्तम् प्राणात्मकत्त्व मुपजीव्य 'पुरस्तात्' प्रत्यङ्मुखत्वेनोपधान मुपपाद्यते। "तस्मादिति। यत एवम्, तस्मात् कारणात् 'पुरस्तात्' मुखे प्राणवायुः प्रत्यङ्मुख-त्वेन 'धीयते' ध्रियते।

कूर्मस्य प्राणात्मकत्वाद्धिरण्मयपुरुषाभिमुख्येन तस्योपधाने

---

* पा॰ २. ३. ६२ सू॰ १ वा॰।

† पुरस्तात् १का॰ १प्र॰ १ब्रा॰ २०क॰ ( १भा॰ ८९॰ ) द्रष्टव्यम्।

‡ पा॰ सू॰ १. ४. ४६।

पुरुषस्य यजमानरूपत्वाद् यजमाने प्राणनिधानं भवत्याह "पुरुष मभ्यावृत्त मिति । कूर्मस्य प्राणत्वादषाढाया: वाक्त्वात् तस्य दक्षिणत उपधानं युज्यत इति दर्शयति — "दक्षिणत इति स्त्रीत्वसामान्यादषाढाया: वागात्मकत्वम् । 'प्राण:' 'वाच:' 'वृषा' पति: खलु ; प्राणोपजीवनेन वाच: प्रवृत्ते: । अत: प्राणो वागित्युभय मपि 'मिथुनम्' । एवञ्च वागात्मिकाया अषाढाया दक्षिणभागे प्राणात्मकस्य कूर्मस्योपधान मुपपन्न मित्यर्थ: ॥ ७ ॥

अथ तदुपधाने मन्त्रं विदधानो व्याचष्टे— "अपां गम्भन्नित्यादिना *। "यत्रेति । 'यत्र' स्थाने 'एष:' सूर्य: 'एतत्' तपः करोति, 'एतत्' खलु 'अपां' 'गभिष्ठं' गम्भीरतमम् , ह्रद इत्यर्थ: सूर्यस्य वृष्टिहेतुत्वात् तस्यावस्थानप्रदेशस्य ह्रदत्व मुचितं ततश्च कूर्मस्यापा मन्तरेणावस्थानाद् 'अपां गम्भन्' सूर्यावस्थान समीपदेशलक्षणे अपां ह्रदे 'सीद' उपविशेति मन्त्र आह "गम्भन्निति । गम्भीरशब्दस्य छान्दसो गम्भन्नादेश: †, तत उत्तरस्या: सप्तम्या: "सुपां सुलुक्"-इत्यादिना ‡ लुकि रूपम् "गभिष्ठ मिति । गम्भन्-शब्दादतिशायने इष्ठनि कृते §, "टे:" इति ‖ टिलोपे कृते, रूपम् । "मा त्वा सूर्योऽभितासीत् माग्निर्वैश्वानर:"-इत्यत्राभिताप्सीदित्येतत्पदार्थ माह— "मैत

* का० श्रौ० सू० १७. ४. २८ ।
† "समुद्र इव वासि गम्भना"—इति तै० ब्रा० ७. ७. ६ ।
‡ पा० सू० ७. १. ३६ ।
§ पा० सू० ५. ३. ५५ ।
‖ पा० सू० ६. ४. १४३ ।

इति। 'अच्छिन्नपत्राः'-इति। पत्रशब्देनात्रावयवो लक्ष्यते, तेनावाच्छिन्नावयवा इत्ययमर्थः स्यात्। 'या इमाः' उपहिताः 'इष्टकाः', 'ताः' इमा एव 'सर्वाः प्रजाः' खलु। इष्टकानां प्रजापत्यात्मकत्वेन, प्रजापतेश्च सर्वप्रजाकारणत्वेन, तदात्मकत्वादित्यर्थः। रिष्ट-शब्देनानिष्टं व्याधिप्रभृतिक मुच्यते, तद्रहिता अरिष्टाः; तस्यैव विवरणम्— 'अनार्त्ताः'-इति। तथा सति अच्छिन्नपत्राः प्रजाः 'अनुवीक्षस्व'-इत्यनेन एतदुपहितेष्टकारूपाः प्रजाः, यथा 'अरिष्टा अनार्त्ताः' भवन्ति, तथा ताः 'अनुवीक्षस्व' अनुपालयेत्येतदुक्तम् भवतीत्यर्थः। "यथैवेन मिति। 'एनं' कूर्मं मनुलक्ष्य, 'यथैव' 'दिव्या वृष्टिः' सम्बध्नीयात्, 'एवम्' अनेनाभिप्रायेण 'एतत्' अनुत्वेत्यादिकम् आह॥

"अपाङ्गभ्नन्", 'त्रीन्त्समुद्रान्', "मह्वो द्यौः"-इति * त्रिभिः मन्त्रैः अयं कूर्मं उपधीयते। तत्र मध्यमेन तं चालयन्नुपदध्यात्। अत एव कात्यायनः— "अपाङ्गभन्निति तिसृभिर्घट्टयति मध्यमया"-इति † ॥ ८ ॥

तदेतद्दर्शयन्नाचष्टे — "अथेति। 'एजयति' कम्पयति। "एजृ कम्पने"-इति ‡ धातुः। "इमे इति। ये 'इमे त्रयः' 'समुद्राः' समुद्द्रवन्ति समुन्नच्छन्तीति समुद्रा लोकाः §।

* वा० सं० १३. ३०, ३१, ३२।
† का० श्रौ० सू० १७. ५. १, २।
‡ भ्वा० प० २३४ धा०।
§ निरु० २. ३. १ द्रष्टव्यम्।

'स्वर्गाः' सुखहेतुभूताः। 'तान्' 'एषः' प्रजापतिः 'कूर्म्मो भूत्वा अनुसंससर्प'; प्रजापतेर्लोकत्रयात्मकत्वात् *। "स एष ... एव लोका इत्यादिना † कूर्मस्य लोकत्रयात्मकत्वाभिधानात् प्रजापतिः कूर्मरूपेण लोकाननुसंससर्पेति।

अथ मन्त्राभिसन्धिः,— अपाम्पतित्वं कूर्मस्य; तत्रैव सर्वदा वस्थानात्। वृषभशब्देन श्रैष्ठ्य लक्ष्यते, तच्च लोकत्रयात्मकत्वादित्ति द्रष्टव्यम्। अथ वा इष्टकात्मनां स्त्रीणां 'वृषभः' पुमान्। पुरी शब्देन पशवोऽभिधीयन्ते, तान् 'वसानः' आच्छादयन्, य मानस्य सम्पादयन्नित्यर्थः। अथ वा इष्टकारूपान् प आच्छादयन्निति। पूर्वं सुपहिताः कूर्माः 'एतेन' उपधानल णेन कर्मणा 'यत्र' 'परेताः' मृताः प्राप्नुवन्, तत्र गच्छे तदुक्तं भवति ॥ ८ ॥

"मही द्यौरिति ‡, अत्र महीपदस्य विवक्षित मर्थं माह "महतीति। द्वितीयपादे 'मिमिक्षताम्'-इत्यस्यावन मर्थं द दर्शयति— "इमं यज्ञ मवता मित्येतदिति। अनेकार्थत्वा तूनां मिमिक्षतिरत्रावने वर्त्तते। तृतीयपादे 'पिपृताम्'-इ स्यार्थं माह— "बिभृता मिति ॥

मन्त्रार्थस्तु,— हे कूर्म! त्व मपां गम्भीरतरे देशे विश, तत्र सीदन्तं त्वां सूर्यो मा अभितपतु, 'वैश्वानर सर्वेषा मुदरस्थः सर्वात्मा च सर्वज्ञः अग्निरपि मा अभितपतु

* वा० सं० १३. ३१।

† पुरस्तादिहैव द्वितीया कण्डी द्रष्टव्या।

‡ वा० सं० १३. ३२।

यथाविधस्त्व मनवखण्डितावयवा इष्टकारूपाः प्रजाः अनु-वीक्षस्व। 'त्वा' त्वां 'दिव्या वृष्टिः' चानुसम्बध्नीयता मिति प्रथमस्यार्थः * ॥

हे कूर्म! त्वं 'त्रीन्' सुखहेतुभूतान् लोकान् 'समसृपत्' संसृप्तोऽसि। व्यत्ययेन तिबादेशः, लृदित्वात् च्लेरङादेशः †। यतः स त्वम् 'अपाम्पतिः', 'इष्टकानां' च 'वृषभः', अतस्त्वां ब्रवीमि— 'पुरीषम्' इष्टकारूपान् पशून् 'वसानः' आच्छादयन्, 'सुकृतस्य' सुष्ठु सम्पादितस्याग्नेः 'लोके' स्थाने स्थित्वा, 'तत्र' गच्छ', एतेन कर्मणा 'पूर्वे' कूर्माः 'यत्र' 'परेताः' परागताः, सद्गतिं प्राप्नुवन्निति द्वितीयस्यार्थः ‡ ॥

"मही द्यौरिति मन्त्रस्तु प्रागेव व्याख्यातः §। अन्तिम-मन्त्रस्य द्यावापृथिव्यत्वं प्रशंसति— "द्यावापृथिव्य इति। "तस्य यदधरं कपाल मयं स लोकः"-इत्यादिना ‖ कूर्मस्या-धस्तनोपरितनयोः कपालयोर्द्यावापृथिवीरूपत्वस्योक्तत्वात् 'कूर्मो

---

* अस्य पाठस्त्वेवम्—
"अपाङ्गम्भन्त्सीद मा त्वा सूर्योऽभिताप्सीन्माग्निर्वैश्वानरः। अच्छिन्न-पत्राः प्रजा अनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम्"—इति।

† पा० सू० ३. १. ५५।

‡ अस्य पाठस्त्वेवम्—
"त्रीन्त्समुद्रान्त्समसृपत् स्वर्गानपाम्पतिर्वृषभ इष्टकानाम्। पुरीषं वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः"—इति।

§ ३४६ पृ० १३ पङ्क्तितो द्रष्टव्यम्।

‖ पुरस्तादिहैव ३२५ पृ० २१ पं० द्रष्टव्यम्।

'द्यावापृथिव्य:' ; अतस्तदुपधाने उत्तमाया ऋचो द्यावापृथिव्य प्रशस्त मिति यावत् । द्यावापृथिव्यशब्दस्तु "द्यावापृथिवीशु सीरेत्यादिसूत्रेण * देवतार्थे यत्प्रत्ययान्त: ॥ १० ॥

उपधानमन्त्राणां त्रित्वसङ्ख्या मनूद्य प्रशंसति— "त्रि रिति । 'इमे' पृथिव्यादयो 'लोका: त्रय:' ; कूर्मश्च लोकत्र त्मक: ; ततश्च तदुपधानं त्रिभिर्मन्त्रै: सम्पाद्यते । अपि अग्निस्त्रिवृत्स्तोमात्मक: ; अग्नेस्त्रिवृत्त्व मेकस्मादेव सहोत्प तथा च श्रूयते— "स मुखतस्त्रिवृतं निरमिमीत, त म देवतान्वसृज्यतेति † । आहवनीयादिभेदेन वा अग्नेस्त्रिवृत्त्व अथवा षष्ठकाण्डे रुद्रादिनवनामधेयाभिधेयत्वादग्नेस्त्रिवृत्त्व क्तम् ‡। तथा सति अत्रोपधानमन्त्राणां त्रित्वात् 'अग्नि:' 'याव यत्परिमाणविशिष्ट:, 'अस्य' च 'मात्रा' अवयव: 'याव यत्परिमाणविशिष्टा, 'तावता' तत्परिमाणविशिष्टेन 'एतदुपधानं' सम्पादितम् भवति ।

अभ्यञ्जनमन्त्राणा मुपधानमन्त्राणां च सङ्ख्या: स प्रशंसति— "त्रिभिरभ्यनक्तीति । 'तत्' तथा सति 'षट्' स सम्पद्यते । तत्सङ्ख्यासम्पादनस्य तु प्रशंसारूपं व्याख्यानम् " वा ऋतव:"–इत्यादिना § प्रागुक्त मित्यर्थ: ।

कूर्मस्याधस्तादुपरिष्टाच्चावका: स्थापयेदित्याह—॥ "अव

* पा० सू० ४. २. ३२ ।

† तै० सं० ७. १. १. ४ ।

‡ पूर्वस्मिन् काण्डे १. ३. १०—१८ (६भा० १७—२०पृ०) द्रष्टव्यम् ।

§ पुरस्तादिहैव २. ३. ३५ द्रष्टव्यम् ।

इति *। 'अवका' शैवालम्। अवकास्थापनं किमर्थं मित्यत आह— "आपो वा इति। 'अवकाः' अप्सु जायन्त इति कार्यकारणभेदाविवक्षया आपोऽप्यवकाः। अतश्चैतेनावकास्थापनेन 'अपा मेव मध्यतः' 'एनं कूर्मं निहितवान् भवति। "सादयित्वेत्यादिकन्तु प्रागेव व्याख्यातम् ॥ ११ ॥

कूर्मोपधानानन्तरम् उलूखलमुसलयोरुपधानं विधत्ते— "अथेति। विहित मुलूखलमुसलयोरुपधान मन्नादनसाधनतया प्रशंसति— "विष्णुरित्यादिना। 'येन' 'रूपेण' प्रकारेण 'यत् कर्म कृत्वा विष्णुरन्नादोऽभवत्', 'तेन' प्रकारेण 'तत् कर्म कृत्वा' अह मपि 'अन्नादोऽसानीति' अभिप्रायेण 'यजमान उलूखलमुसले उपदधाति' यतः, अतो यथैव विष्णुरभूत्, 'तथैव' 'एतत्' एतेन यजमानोऽप्यन्नादो भवतीत्यर्थः।

अन्नादनसाधनता कथ मनयोरिति तदुपपादयति— "तदेतदिति। यतः 'उलूखलमुसलाभ्या मन्नं क्रियते'; ताभ्यां व्रीह्यादीनां वितुषीकरणात्, वितुषीकृताना मेवान्नत्वात्, 'अन्न मप्युलूखलमुसलाभ्यां क्रियते'। अतश्च 'उलूखलमुसले'- इति यदेतत् कृत्स्न मन्नम्; तथा सति अन्नादनसाधनतानयोरुपपद्यत इति भावः॥ १२ ॥

अनयोः स्थानविशेषं विधाय स्तौति— "ते इति। रेतस्सिचाविति, इष्टकाविशेषौ प्राग्विहितौ †। तयोः 'वेलया' प्रान्तेन। सप्तम्यर्थे तृतीया। अत एव कात्यायनः,— "रेतस्सिचोर्वेलाया

* का० श्रौ० सू० १७. ४. २७ ।

† पुरस्तात् ३. २. २२ द्रष्टव्यम्।

मरत्निमात्रश्रुतेरिति *। तदेते उपदध्यात्। यतो 'रेतःसिचौ' 'पृष्टयः'। पृष्टिशब्देन कटिपार्श्वस्थास्थिविशेषावुच्येते अवयवापेक्षया च बहुत्वम्। रेतस्सेचनसाधनत्वसामान्यात् रेतस्सिचोः पृष्टिरूपता। शरीरमध्येऽवस्थानात् पृष्टयो मध्यं हि; अतश्च तत्प्रान्ते अनयोरुपधानात् मध्यभागे एवास्मिन् प्रजापतौ चीयमानाग्निरूपे 'एतत् अन्नं' निहितवान् भवति।

दिगन्तरेऽपि रेतस्सिचोरुपधानं सम्भवेदित्यत आह— "उत्तर इति। स्वयमातृण्णाया उत्तरप्रदेशेऽपि। प्रमाणविशेषमाह— "अरत्निमात्रे इति। लोके हि अरत्निमात्रप्रदेशादन्नमादायाभ्यवह्रियते; अतश्चान्नरूपयोरनयोरुपधानं तावति प्रदेशे कर्त्तव्यम्। "उलूखलमुसले स्वयमातृण्णा मुत्तरेणारत्निमात्रे"-इति हि सूत्रम् † ॥ १३ ॥

प्रकृते उलूखलमुसले प्रादेशमात्रे कर्त्तव्ये इत्याह— "प्रादेशमात्रे भवत इति ‡। परिमाणविशेषोपादाने कारणमाह— "प्रादेशमात्रो वा इति। 'विष्णुः' यज्ञः, चीयमानाग्निरूपः। इदानीं मनिष्पन्नत्वेन गर्भः खलु; अतोऽयं प्रादेशमात्रः; लोके गर्भाणां तावत्-प्रमाणत्वात्। उलूखलमुसलं चान्नम्; तदेतत् सर्वं मन्न मित्युक्तत्वात्। ततश्च 'अस्मिन्' गर्भरूपे विष्णौ एतेनात्मसदृशप्रमाण मेव 'अन्नं दधाति'।

---

* "उलूखलस्य रेतस्सिग्वेलाया मरत्निमात्रश्रुतेः"—इति मुद्रित-पाठः का० श्रौ० सू० १७. ४. २१।

† का० श्रौ० सू० १७. ५. ३क।

‡ का० श्रौ० सू० १७. ५. ३ख।

अन्नस्यात्मानुरूपप्रमाणपरिग्रहे को लाभः ? तदतिक्रमे वा कः ? इत्यत आह— "यदु वा इत्यादि । 'आत्मसम्मित मन्नम्' आत्मानं रक्षति, न तु हन्ति । यत्तु ततोऽधिकं न्यूनं वा 'तत्' तथा न करोति । अल्पस्य बलाङ्गपोषानाधायकत्वाद्, अधिकस्य च दुर्ज्जरत्वेन पोडाकरत्वादित्यर्थः । "हिनस्तीति, 'हिसि हिंसायाम्" -इत्यस्य* रौधादिकस्य तिपि श्नमि "श्नान्नलोपः"-इति † नकारलोपे रूपम् । अल्पशब्दादीयसुनि "युवाल्पयोः"-इत्यादिना कनादेशे ‡ कनीय इति भवति ॥ १४ ॥

अनयोर्वृक्षविशेषं विधाय स्तौति— "औदुम्बरे भवत इति । 'औदुम्बरे' उदुम्बरविकारे, ततो निष्पन्ने भवतः । "बिल्वादिभ्योऽण्" § अण् प्रत्ययः । 'उदुम्बर ऊर्क्', 'बलकरो रसः' खलु । उदुम्बरस्य ऊर्ग्रूपत्वं तैत्तिरीयके श्रूयते— "देवा वा ऊर्ज्जं व्यभजन्त तत उदुम्बर उदतिष्ठदिति ‖ । तथा चैतेन 'अस्मिन्' प्रजापतौ 'ऊर्ज्ज मेव रसं निदधाति । सर्ववनस्पतीना मुपधानसिध्यर्थं मुदुम्बरस्य सर्ववनस्पतिरूपता माह— "अथो सर्वं एत इति । 'एते' उलूखलमुसले 'उपदधद्' उपदधानः 'सर्वान् वनस्पतीन् उपहितवान् भवति ॥

रेतस्सिग्वेलाया मुपधानेन द्यावापृथिव्योर्वनस्पत्युपधानं प्रति-

* रु० प० १८ धा० ।
† पा० सू० ६. ४. २३ ।
‡ पा० सू० ५. ३. ६४ ।
§ पा० सू० ४. ३. १३६ ।
‖ तै० ब्रा० १. १. ३. १० ।

पादयति— "रेतस्सिचोर्वेलयेति। 'इमे' द्यावापृथिवी खलु 'रेतस्सिचौ' इष्टके 'तत्' तेन 'अनयोः' द्यावापृथिव्योः 'वनस्पतीन्' उपहितवान् भवति। 'तस्माद्' हेतोर्द्यावापृथिव्योः 'वनस्पतयः' सन्तीति शेषः ॥

उलूखलस्य चतुष्कोणत्वाभिधानेन सर्वदिक्षु वनस्पत्युपधान माह— "चतुःस्रक्तीति। चतस्रः स्रक्तयः कोणा यस्य, तदिदं चतुःस्रक्ति। यथा 'मध्ये सङ्गृहीतम्' मध्यप्रदेशे सङ्गृहितम्। किमर्थम्? 'उलूखलरूपतायै' एवं रूपं हि लोके प्रसिद्ध मुलूखलम्। एतस्मादेव च वाक्यशेषादुलूखल मेव चतुःस्रक्ति मध्यसङ्गृहीतञ्च भवति, न मुसलम्। तथा च वक्ष्यते— "तद् वृत्त मिव भवतीति * ॥ १५ ॥

अथ विश्लिष्टावयवस्य प्रजापतेः प्राण मन्न मूर्ज मस्मिन्नग्नौ प्रतिनिधातु मितिहास माह—"यद्वेवेति। 'मध्यतः' मध्यप्रदेशात् 'प्राणः' अशेषवृत्तिर्वायुः 'उदचिक्रमिषत्' उत्क्रमितु मैच्छत्। 'तं' प्राण मुत्क्रमितु मिच्छन्तम् 'अन्नेन' अदनीयेन 'अगृह्णात्' गृहीतवान्, प्रजापतिरिति शेषः। 'तस्मात्' कारणात् 'प्राणोऽन्नेन' गृहीतः। उक्त मेवार्थं प्रसिद्ध्या दृढयति— "यो ह्येवेति। 'यो हि' अत्ता 'अन्नम्' अदनीयम् 'अत्ति' भक्षयति, 'सः' 'प्राणिति' चेष्टते ॥ १६ ॥

सिद्धे प्राणग्रहणे अन्नस्योत्क्रमणेच्छा माह— "प्राणो गृहीत इति। 'अस्मात्' प्रजापतेः 'अन्नं' कर्तृ उत्क्रमितु मैच्छत्।

* उपरिष्टादिहैव (३३७पृ०) ३८ कण्डी द्रष्टव्या।

'तत्' अन्नं 'प्राणेन' साधनेन 'अग्टह्णात्' प्रजापतिः। तस्मादित्यादि पूर्ववद् व्याख्येयम् ॥ १७ ॥

"एतयोरिति। 'एतयोरुभयोः' प्राणान्नयोर्वशीकृतयोः 'ऊर्क्' बलम् 'उदचिक्रमिषत्'। "ऊर्ज बलप्राणनयोरिति * धातुः। ऊर्ज्जयति बलयतीत्यूर्क् बलम्; यद्वा बलहेतुरन्नरसोऽपि ऊर्गित्यभिधीयते। 'ताम्' ऊर्जम् 'एताभ्या मुभाभ्यां' प्राणान्नाभ्याम् 'अग्टह्णात्' प्रजापतिः। 'तस्मात्' अन्नप्राणाभ्यां सा 'ऊर्क्' 'ग्टहीता' वशीकृता। "यो ह्येवेत्यादि, पूर्ववद् व्याख्येयम्। "त मूर्ज्जयतीति। 'तम्' अत्तारम् पुरुषम् 'ऊर्जयति' बलयति, भुक्त मन्नं कर्त्तृ इति शेषः ॥ १८ ॥

"ऊर्जीति। ऊर्क् ग्रहणानन्तर मुच्चिक्रमिषन्तावन्नप्राणौ 'ऊर्ज्जा अग्टह्णात्'। "यं हीति। ऊर्क् बलं य मेव 'ऊर्ज्जयति' बलयति 'सः' 'प्राणिति' चेष्टते, 'सोऽन्न मत्ति' च ॥ १९ ॥

"तान्येतानीति। यतस्तावत् 'तानि' सर्वाणि अन्योऽन्येन 'ग्टहीतानि', ततः 'तान्यन्योऽन्येन' 'ग्टहीत्वा' प्रजापतिः आत्मनि 'प्रापादयत' प्रापयत्। 'आत्मन्'-इति, "सुपां सुलुगित्यादिना † सप्तम्या लुक्। यत् 'इदं सर्वम्' इन्द्रियजातम् 'अन्नजीवनम्'। अन्न मेव जीवनं यस्य तदन्नजीवनम्; तदभावे सर्वेषां स्वस्वव्यापारासमर्थत्वात्। अतोऽस्मिन् प्रजापतौ प्रपद्यमान मन्नं 'सर्वे देवाः' इन्द्रियाणि प्रपन्नान्यभूवन् ॥ २० ॥

---

* धु० प० १६ धा०।

† पा० सू० ३. १. ३६।

उक्तेऽर्थे कञ्चिन् मन्त्रं संवादयति — "तदेष इति। 'तत्' तत्रार्थे 'एषः' वक्ष्यमाणः 'श्लोकः' मन्त्रोऽभ्युक्तः। मन्त्रः—

"तद्धै स प्राणोऽभवन्महा भूत्वा प्रजापतिः।
भुजो भुजिष्या वित्त्वा यत् प्राणान् प्राणयत् पुरि"-इति॥

त मेतं मन्त्रं पादशो विभज्य व्याचष्टे— "तद् वा इति। 'तत्' तद्धि तदा अन्नलाभाय* 'सः' वै खलु 'प्राणोऽभवत्'। प्राणशब्देन इन्द्रियाण्युच्यन्ते, ततश्च सेन्द्रियोऽभूदित्यर्थः। "महान् भूत्वेति। यदा 'एनं' प्रजापतिम् 'एते देवाः' इन्द्रियाणि 'प्रापद्यन्त', तदा 'स महान् अभूत्' खलु। "भुजो भुजिष्या वित्त्वेति। भोगसाधनत्वेन 'भुजः' प्राणा उच्यन्ते। 'भुजिष्या'-शब्देन भोग्यत्वादन्नम्। तदेतत् सर्वं 'वित्त्वा' लब्ध्वेत्येतदुक्तं भवति। "यत् प्राणानिति। 'पुरि' आत्मनि शरीरे 'प्राणान्' 'प्राणयत्' स्वस्वव्यापारसमर्थानकरोत्। यत एवं प्राणयत्, 'तस्मात्' 'देवाः' इन्द्रियाणि प्राणन्त इति † (प्राणा इति) व्युत्पत्त्या प्राणाः अभूवन्। अथ 'प्रजापतिः' तान् प्राणयदिति यत्, तस्मात् प्रजापतिरपि प्राणोऽभूत्। अत्र प्राणप्रयोजकत्वात् प्रजापतेः प्राणत्वमुक्तम्। एतावता तदेतदन्नं प्रपद्यमानं सर्वे देवा अनुप्रापद्यन्त अन्नजीवनं ह्येदं सर्व मित्यय मर्थः संवादप्रदर्शनेनोपपादितो भवति॥

प्रजापतेर्विस्रस्तादित्याद्युपक्रमेण प्रकृते कि मायात मित्यत आह— "यो वा इत्यादि। 'सः' पूर्वोक्तः प्रजापतिसम्बन्धी

---

* 'अन्नलाभावसरेषु'—इति ज-पाठः।

† नैतत् पदद्वय मस्ति ज-पुस्तकादन्यत्र।

यः प्राणोऽस्ति, 'सैषा गायत्री' विष्णोः कर्माणीत्यत्र * यद् गायत्र्यात्मकं छन्दः, स प्राण एतदित्यर्थः। प्रकृतोपधानमन्त्रसन्निहितत्वादेषेति परामृश्यते—"सैषेति। लिङ्गं विधेयापेक्षम्। उत्तरत्राप्येवं द्रष्टव्यम्। प्राणो वृत्तिभेदेन त्रिधा भिद्यते, गायत्र्यपि पादभेदेन; अतः सादृश्यात् † 'प्राणो गायत्री'-इत्युक्तम्। 'अथ' 'यत्' प्रजापतिसम्बन्धि 'अन्नम्' अस्ति, 'स एष विष्णुर्देवता' विष्णुरिति यज्ञोऽभिधीयते; भोगसाधनत्वसामान्यादन्नस्य विष्णुरूपत्वम्। 'अथ' 'या सा ऊर्क्', 'स एष उदुम्बरः'। उदुम्बरस्य बलकररसत्वादूर्गात्मकत्वम्॥ २१॥

उदुम्बरोलूखलशब्दौ निर्वक्ति— "सोऽब्रवीदिति। 'सर्वस्मात्' 'पाप्मनः' कृच्छ्रात् 'मा' माम् 'अयं' हि 'उदभार्षीत्' उद्धृतवान् 'इति' 'सः' प्रजापतिः 'अब्रवीत्'। कृच्छ्रादुद्धरणञ्चास्याऽन्नप्राणयोरवरोधकत्त्वात्; अतश्चोदभार्षीन्मा मिति यदब्रवीत्, 'तस्मात्' ऊर्क् 'उदुम्भरः' अभूत्। अत एव मुक्तत्वादय मुदुम्भरः। त मेव देवाः 'उदुम्बर इति परोक्ष माचक्षते'। पारोक्ष्येणाभिधानं गौरवाय कल्प्यत इति देवानां परोक्षकामत्वम्।

तथा 'मे' 'उरु' अधिकम् 'अकरत्' अकार्षीदिति यदब्रवीत्, 'तस्मात्' उरुकरम्, त मेव देवाः 'उलूखल मिति परोक्ष माचक्षते'। उदुम्बरस्योर्गात्मकत्त्वात्, उलूखलस्य च औदुम्बरत्वात् उरुकरणं पाप्मन उदभार्षीदित्युक्तं च सम्पद्यते।

---

* 'कर्माणीत्यर्थः'—इति ज-पाठः।

† 'एतत्साद्दश्यात्'—इति ज-पाठः।

उदुम्बरोलूखलशब्दौ पृषोदरादित्वाद् * भवतेः करोतेश्च व्युत्पा
दनीयौ। 'अकरत्'-इति, "कृमृदृरुहिभ्यश्छन्दसीति च्लेरङादेशः†
"ऋदृशोऽङि गुणः" ‡। प्रकृत मुलूखलं शिरोरूपेण प्रशंसति
—"सैषेत्यादिना। शिरः 'सर्वेषां' 'प्राणानाम्' इन्द्रियाणां
'योनिः' खलु; मुखस्यापि शिरःप्रदेशत्वात् तत्रैव सर्वेन्द्रियाणा
मुत्पत्तिः, तथा सति उलूखल मिति यत्, सैषापि सर्वेषां
'प्राणानां योनिः' भवति ॥ २२ ॥

उलूखलस्य शिरस्साधर्म्यसम्पादनादेतदुपपद्यत § इत्येतत्
प्रदर्श्यते— "तदिति। 'तत्' उलूखलं 'प्रादेशमात्रम्' 'चतुः
स्रक्ति' 'मध्ये' च 'सङ्गृहीतं' तनूकृतं 'भवति', शिरोऽपि तथैवेति
सर्वप्राणियोनित्व मुलूखलस्योपपद्यत इत्यर्थः ॥ २३ ॥

उपसंहरति— "तं यत्र देवा इति। 'यत्र' यदा 'देवाः' 'तं'
प्रजापतिं संस्कृतवन्तः, तदैतस्मिन् 'प्राण मत्र मूर्जम्'-इत्येवं
तत् सर्वं मध्यप्रदेशे निहितवन्तः; तस्मात् 'तथैव' 'अयं'
यजमानोऽपि अनेनोपधानेनैतत् सर्वं सम्पादयति। रेतस्सिचोः
पृष्टिरूपेण मध्यत्वात् तत्समीपदेशे उपधाने देवा यथा मध्यतो
ऽदधुः, तथैव 'अस्मिन् मध्यत एव' 'सर्वं' निदधाति ॥ २४ ॥

विहिते उलूखलमुसलयोरुपधाने मन्त्रं विदधानो व्याचष्टे—
"विष्णोः कर्माणीति ‖। कर्मशब्देन वीर्यं विवक्ष्यते। अतश्च इ

* पा० सू० ६. ३. १०६ । † पा० सू० ३. १. ५६ ।
‡ पा० सू० ७. ४. १६ ।
§ '०सम्पादनं तु उपपाद्यत'—इति ज-पाठः ।
‖ वा० सं० १३. ३३ ।

जना: ! 'विष्णोः' यज्ञस्य 'कर्माणि' वीर्याणि 'पश्यत' इत्येतत् उक्तं भवति। "यत इति। 'यतः' वीर्यतः 'व्रत'-शब्देनान्न मुच्यते। 'व्रतानि' अन्नानि 'पस्पशे' स्पाशयाञ्चक्रे, स्पर्शयमानश्च स्वजनैर्लम्भयामासेत्यर्थः। "स्पश बाधनस्पर्शनयोः"-इति * धातुः। "इन्द्रस्येति। 'एषः' यज्ञः 'इन्द्रस्य' 'युज्यः' योग्यः 'सखा हि' तस्य तृप्तिहेतुत्वात्। अत इन्द्रस्य युज्यः सखेत्युक्त मित्यर्थः॥

उलूखलमुसलयोर्द्वित्वात् तदुपधानमन्त्रस्य द्विदेवत्यत्व मुपपन्न मिति दर्शयति— "द्विदेवत्ययेति। उलूखलमुसलयोः सादनं पृथगेव कर्त्तव्य मित्यत आह— "सकृदिति। यतः 'एतत्' उलूखलं मुसलञ्च अन्नरूपेण 'समान मेव', अतः सादन मपि सकृदेव कर्त्तव्य मिति। अनेनैव लिङ्गेनोपधानमन्त्रस्यावृत्तिर्ज्ञाप्यते; यदि युगपदुपधानं स्यात्, सकृत् सादनञ्चोच्येतेति। उत्तरवाक्यं व्याख्यातम्। अत्र कात्यायनः— "उलूखलमुसले स्वयमातृण्णा मुत्तरेणारत्निमात्र औदुम्बरे प्रादेशमात्रे चतुरस्र मुलूखलं मध्यसङ्गृहीत मूर्द्ध्वं वृत्तं मुसलं दक्षिण मुलूखलाद्विष्णोः कर्माणीति † ॥ २५॥

उलूखलमुसलोपधानानन्तर मुखाया उपधानं विधत्ते— "अथेति ‡। इष्टकाचितिषु विधास्यमानस्याग्नेरुखायां भृत्योत्पादनात् उखायाः योनित्वेन § तदुपधाने योनिरेवोपधानं भवती-

* भ्वा० उ० ८८७ धा०।

† का० श्रौ० सू० १७. ५. ३।

‡ का० श्रौ० सू० १७. ५. ४।

§ 'उखायोनित्वेन'—इति ज-पाठः।

त्याह— "योनिर्वा इति। विहित मुपधान मुलूखले कर्त्त- मित्याह— "ता मिति। तत्रोपधानं प्रशंसति— "अन्त- रिक्षं वा इति। 'यत्' कि मपि वस्तु, 'अस्याः' पृथिव्याः 'ऊर्ध्वं' उपरि अवस्थितम्, तत् सर्वम् 'अन्तरिक्ष मेव'; 'अन्तरिक्षं' द्यावापृथिव्योः अन्तराले अवस्थानात् 'मध्यं हि'; तत उलू- खलस्यापि पृथिव्या उपर्यवस्थानेन मध्यभूतान्तरिक्षात्मक- त्वात् तत्रोपधाने मध्यभागे एव योनेरुपधानं भवति 'मध्यतः'–इति, सार्वविभक्तिकस्तसीति * सप्तम्यर्थे तसिः दृष्टानुसारेणोक्त मर्थं प्रमाणयति— "तस्मादिति। 'वनस्पतीना- मपि' वीजानां मध्यभागं भित्त्वोपन्नत्वात् † 'मध्यतो योनि' इत्यर्थः ॥ २६ ॥

अथोखायाः प्रजापत्यात्मकत्वेनोलूखले उपधानं प्रशं- सति— "यद्वैवोखा मिति। "स इति। प्रजासर्जनेनावयव- विश्लेषदशापन्नः परामृश्यते—'सः यः'। 'सः' प्रजापतिः 'व्यस्रंसत' विस्रस्तावयवोऽभूत्। 'सा उखा'। सेति स्त्रीलिङ्ग मुखापेक्षया अतः प्रजापतेरेतल्लोकत्रयात्मकत्वात् 'एषा' 'उखा' अपि, 'इमे' पृथिव्यादयो 'लोकाः'। तथा सति प्रजापत्यात्मिकाया उखाया उलूखले उपधानेन विस्रस्ताङ्गं प्रजापतिम् 'एतस्मिन् सर्व- स्मिन् प्रतिष्ठापयति'। तदेव प्रदर्श्यते— "प्राणेऽन्न ऊर्ज्जीति। उलूखलस्य औदुम्बरत्वेन तस्य चान्नरसात्मकत्वादन्नरसेन

* "इतराभ्योऽपि दृश्यन्ते"—इति पा० सू० ५. ३. १४।

† 'मध्यभागत उत्पत्तिः'—इति ज-पाठः।

प्राणानां धारणात् प्राणात्मकत्त्व मनुसन्धेयम्। प्राणान्नोर्जा परस्परं ग्रहण मुक्तम्, न केवलम् प्रतिष्ठापनमात्रम्; अपि तु अव्यवधानेन तत्सम्बद्ध मेव कुर्यादित्याह— "अथो इति ॥ २७ ॥

उपशयानामोखाभेदे सति तत्प्रतिसन्धानार्थं प्रागवशेषिता मन्त्रसंस्कृता मृत्। तां चूर्णीकृत्योखायाः पुरोभागे निदध्यादित्याह— "अथेति। 'उखां लोक भाजं' स्थानभाजं उलूखलभाजिनीं कृत्वेत्यर्थः। उखाभेदप्रतिसन्धानार्थत्वादुपशयायास्तत्पुरोभागे अवकाशः, अतस्तत्रोपनिवापेन स्वावकाशस्याव्यवहिता भवतीत्याह— "एष ह्येतस्या इति ॥ २८ ॥

इष्टकोपधानप्रदेशे पक्वाना मेवोपधानात्, उपशयायाश्चापक्वत्वात् कथ मत्रोपधानं युज्यत इति याज्ञिकानां जिज्ञासा मवतारयति— "तदाहुरिति। "अस्येति। उपधानप्रदेशावकाशस्येत्यर्थः। शृत मिति पाकविशेषाभिधानात् 'पक्वा शृता'-इति न पुनरुक्तिः। अथवा पाकेन शृता सतीत्यर्थः। एतस्योत्तरं द्वेधा दर्शयति— "यदेवेत्यादिना। 'एषा' उपशया नाम 'यजुष्कृतेति यत्', तेन असौ पक्वा शृता च भवति। मन्त्रेणाहृतैव मृदुपशया क्रियते, अतश्चास्याः मन्त्रेण निष्पादनादेव पाकसम्पत्तिरित्यर्थः। किञ्च 'यत्' किञ्चिदपि वस्तु 'एनं वैश्वानर मग्निम्' इष्टकोपधानस्थलात्मकं प्राप्नोति, 'तत्' सर्वं 'तत एव' तत्प्राप्तेरेव 'पक्वं शृतं' सदेव 'उपहितं भवति' ॥ २९ ॥

उखोपधाने ध्रुवासीति, इषे राय इति च, द्वौ मन्त्रौ विद-

धानो व्याचष्टे— "ध्रुवासीत्यादिना *। "ध्रुवासि धरुणेत्यस्य व्याख्यानम्— "ध्रुवासीति स्थिरासि"-इत्यादिना प्रागुक्तम् ‡। "एभ्य इति। प्रथमतो यदुखायाः जनित्वा, पश्चात् 'एतेभ्यो योनिभ्यः' लोकेभ्यः 'जातवेदा अजायत', अतस्तामु मर्थम् "ए इत्यादिमन्त्रभागो ब्रूते इत्यर्थः। 'एतैः' गायत्र्यादिभिः 'छन्दोभिः' स हैषोऽग्निः स्वाधिकारं जानन्, 'हव्यं वहति' खलु छन्दसां हविर्वहनं तैत्तिरीयके श्रूयते— "छन्दांसि देवेभ्योऽपाक्रामन् वो भागानि हव्यम् वक्ष्याम इति § ॥ ३० ॥

"इषे राय इत्यादिना ‖ इट्प्रभृतिभ्यः सर्वेभ्यो रमस्वेति तदुक्तं भवतीति व्याचष्टे— "एतस्मा इति। यत इयं मुखे सम्यग्राजते, स्वय मेव राजते, अतः "सम्राडसि स्वराडसीति मन्त्रभागो ब्रूते-इति व्याचष्टे—"सम्राडसीति। "सारस्वताविति। 'सरस्वान् मनः' उच्यते, 'सरस्वती च वाक्', 'एतौ' 'सारस्वतौ'-इति स्वार्थिकोऽण् प्रत्ययः। 'उत्सौ' वारिप्रवाहौ, वाङ्मनसात्मकौ। मनसस्तावत् सर्वशास्त्रार्थपरिज्ञानरसाधारत्वात्, वाचश्च तत्प्रतिपादनरसाधारत्वात्, उत्सत्त्व मनयोः। 'तौ' 'त्वा' 'प्रावतां' पालयतां अभिज्ञानवदनव्यापाराभ्या मित्यर्थः॥

हे उखे! त्वं 'ध्रुवा' स्थिरा 'असि', 'धरुणा' धारि

* का० श्रौ० सू० १७. ५. ४।

† वा० सं० १३. ३४।

‡ पुरस्तादिहैव २७६ पृ० ७ पं० द्रष्टव्यम्।

§ तै० सं० ५. १. १. ४ (५भा० १पृ०)।

‖ वा० सं० १३. ३५।

च 'असि'। 'जातवेदाः' 'इतः' त्वत्तः सकाशात् 'प्रथमम्' 'अधिजज्ञे', पश्चात् 'एभ्यः' लोकेभ्यः अधिजातः। 'सः' तथाविधो जातवेदाः गायत्र्यादिभिश्छन्दोभिः सह स्वाधिकारं 'प्रजानन्' 'देवेभ्यः' हविः 'वहतु' धारयतु॥ (१) किञ्च त्वम् 'इषे' अन्नाय, 'राये' धनाय, 'सहसे' बलाय, 'द्युम्ने' द्युम्नं यशः तस्मै, 'ऊर्ज्जे' पयोदध्याद्युपसेचनाय, 'अपत्याय' पुत्रार्थञ्च 'रमस्व', तत् सर्वं सम्पादयितु मभिरतिं कुरु। त्वं सम्यम् राजमानाऽसि, स्वेनैव राजमानासि त्वाञ्च वाङ्मनसरूपौ 'उत्सौ' प्रकर्षेण पालयताम्॥ (२) इति मन्त्रद्वयस्यार्थः *।

अत्र कात्यायनः— "उलूखले उखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्तात् ध्रुवासीत्युखा मिति †। अत्र "अथोपशयां पिष्ट्वेत्यादिश्रुतिक्रमेणानुष्ठानम् ‡। उपशयोपनिवापोत्तरकालञ्च मन्त्रवचनम्। उपधानमन्त्रयोर्द्वित्वसङ्ख्याया व्याख्यानं प्रागुक्त मित्याह— "द्वाभ्या मिति। किञ्च अद्भिरेव सिक्तया मृदा कृतत्वादुखायां मृच्चापश्चेति द्विविधं रूप मस्ति, अतश्च तदुपधानमन्त्रयोर्द्वित्व मुपपद्यत इत्याह— "अथो इति। उत्तरवाक्यं तु व्याख्यातम्॥ २१॥

उपधानानन्तर मुखाया उपरि होमं विधत्ते— "अथेति §। अभिहोमस्योपयोग माह— "एतद्वा इति। भिन्नं वाक्य

* वा॰ सं॰ १३. ३४, ३५।

† का॰ श्रौ॰ सू॰ १७. ५. ४।

‡ पुरस्तादिहैवाष्टाविंशी कण्डी (३३४ पृ॰) द्रष्टव्या।

§ का॰ श्रौ॰ सू॰ १७. ५. ५।

मेतत्। 'एतत्' खलु समभूत्। तदेवाह— "अस्या मेतत् पूर्वं रेतस्सिक्तं भवति सिकता इति। पूर्वं मस्या मुखाया मेतद्रेतः सिक्तं भवति। सिकता इत्येतदिति निर्दिष्टप्रदर्शनम्। अस्युद्वाप-समनन्तर मेव ह्युखायाः सिकताभिः पूरितत्वात् तद्रेत एते-नाभिहोमेन 'अभिकरोति' अभिवर्द्धयति। यत एवं 'तस्मात्' इदानीं 'योनौ सिक्तं रेतः' 'अभिक्रियते' अवयविरूपेण क्रियते इत्यर्थः। विहितोऽभिहोमः 'आज्येन', 'स्रुवेण', 'स्वाहा कारेण' 'द्वाभ्या माग्नेयीभ्यां गायत्रीभ्यां' कर्त्तव्य इत्याह— "आज्ये-नेत्यादिना। आज्यस्रुवाद्यर्थवादस्तु प्रागुक्त इत्याह – "तस्योक्तो बन्धुरिति। "द्वाभ्या मित्यादिना ॥ ३२ ॥

उक्ते ऋचौ प्रदर्शयन् तयोर्युजिधातुसम्बन्धं प्रशंसति-"अग्ने युक्ष्वाहीति *। 'युक्तवतीभ्यां' युजिधातुमतीभ्या मित्यर्थः। 'एतत्' एतेनोपधानमन्त्रयोर्युजिधातुसम्बन्धेन 'योनौ' सिक्तं "रेतः' 'युनक्ति' नियच्छति। 'तस्मात्' इदानीं 'योनौ' सिक्तं 'रेतः' अपत्योत्पादनार्हं 'युक्तं' सत् 'न निष्पद्यते' न निष्प-तति, तत्रैवावतिष्ठत इत्यर्थः ॥

मन्त्रयोरर्थस्तु— हे 'अग्ने!' 'देव' दानादिगुणविशिष्ट! 'तव' 'ये' 'अश्वासः' अश्वाः 'साधवः' जातिगुणसमन्विताः सन्ति। 'अश्वासः'–इति "आज्जसेरसुक्" †। तान् 'युक्ष्वा हि' युङ्क्ष्व। "बहुलं छन्दसि"–इति ‡ विकरणस्य लुक्,

* वा० सं० १३. ३६, ३७।

† पा० सू० ७. १. ५०।

‡ पा० सू० २. ४. ७३।

"ह्यचोऽतस्तिङः"–इति * दीर्घः। एवं च सति 'ते' अश्वाः मन्यवे यज्ञार्थम् 'अरम्' अलं 'वहन्ति' वक्ष्यन्ति। वर्त्तमान-सामीप्ये भविष्यदर्थे लट् † ॥ (१)

हे 'अग्ने!' 'देवहूतमान्' देवानाह्वयन्तीति देवहुवः। क्विब-न्तस्य सम्प्रसारणे कृते रूपम्। अतिशयेन देवहुवः देवहूत-मास्तानश्वान् 'नियुङ्क्ष्व'। क इव? 'रथीरिव' रथिक इव। ईकारो मत्वर्थीयः। 'हि' यस्मादेवम्, अतः 'सदः' सदसि। विभक्तिव्यत्ययः। 'पूर्व्यः' अग्निः, यो होता सन्निषी-देदिति शेषः (२) ॥ २२ ॥

उखाया मग्नेः संवत्सरभरणम्, असंवत्सरभरणं वेति पक्ष-द्वय मस्ति, तत्र प्रथमेऽग्निहोम इत्याह— "स यदीति। 'सः' अग्निः 'यदि' उखायां व 'संवत्सरभृतः स्यात्', 'अथ' एतस्याम् 'अभिजुहुयात्'। संवत्सरस्य सर्वावच्छेदकत्वात् संवत्सरभृतोऽपि सर्वात्मकः, अग्निहोमश्च सर्वः; तेन कृत्स्नतायाः सम्पादनात्। अतः संवत्सरभरणपक्षेऽग्निहोमो युज्यत इति दर्शयति। असं-वत्सरभरणपक्षे किं कर्त्तव्य मिति तत्राह— "अथ यदीति ‡। असंवत्सरभृतस्य पूर्वोक्तविपर्ययेणासर्वात्मकत्वादुपस्थानस्य चाहो-मात्मकत्वेनानुकल्पत्व मिति। असर्वात्मकत्त्वात् तस्मिन् पक्षे तदेतदेव युक्त मित्याह— "असर्वं वा इति। अस्मिन् पक्षे-ऽग्निहोमं विकल्पेनाह— "अभि त्वेव जुहुयादिति। एवकारो-

* पा० सू० ६. ३. १३५।
† पा० सू० ३. ३. १३१।
‡ का० श्रौ० १७. ५. ६।

ऽत्र विकल्पद्योतकः । "उपस्थानं वाऽसंवत्सरभृतिनः"-इति हि सूत्रम्। संवत्सरभृतिनो होमवन्नियमेन तूपस्थानम्; इतरस्य तु विकल्पः। उपस्थानं होमो वेति सिद्धोऽर्थः ॥ ३४ ॥

अथ चित्याग्नेः स्वयमातृण्णादिषु त्रयोदशस्विष्टकासु कृत्स्न पञ्चाकारत्वं सम्पादयितुम् (आह— "पशुरेष यदग्निरिति "स) † एतान् पञ्च पशून् प्राविशत्, स एते पञ्च पशवोऽभवत्"-इत्युक्त मग्नेः पञ्चात्मकत्वम्। 'सः' पञ्चाकारोऽग्निः 'अत्रैव' उखान्ते स्वयमातृण्णादाविष्टकाकलापे 'सर्वः कृत्स्नः संस्कृतः'। कथ मित्यपेक्षायां त मिष्टकाकलाप मङ्गत्वेन सम्पादयति —'तस्यावाङ् प्राणः'-इत्यादिना। 'स्वयमातृण्णा' इष्टका, तस्य पञ्चाकारस्याग्नेः 'अवाङ् प्राणः' अपानाख्यः; पश्चाद्भागस्थिति सामान्यात्। 'द्वियजुः' इष्टका, 'श्रोणी' कटी; तदानन्तर्यात् 'रेतस्सिचौ' इष्टके, 'पृष्टयः' महान्ति पार्श्वास्थीनि। 'विश्वज्योतिः' इष्टका, 'कीकसाः' ह्रस्वपार्श्वास्थीनि। 'ऋतव्ये', 'ककुदं', गल प्रदेशतः पश्चात् पृष्ठदेशे अवस्थित उन्नतावयवः। 'अषाढा' 'ग्रीवाः' कन्धराः। 'कूर्मः', 'शिरः'। 'कूर्मे' ये प्राणाः, 'ते' 'शीर्षन्' शीर्षण्याः 'प्राणाः'; 'ते' चक्षुरादय इत्यर्थः ॥ ३५ ॥

एव मग्नेः कृत्स्नरूपत्वं प्रतिपाद्य, आदित्यरूपत्व मूर्ध्वचयनेन प्रतिपादयति— "तं वा एत मिति। 'त मेतं' चित्य मग्निम् 'इतः' अवाचः प्राणादारभ्य आ-शिरसः 'ऊर्ध्वं' प्रागपवर्गं 'चिनो-

---

* का० श्रौ० सू० १७. ५. ६।

† एतावान् पाठः सर्वेष्वेव मद्दृष्टेषु पुस्तकेषु डा०-वेवरदृष्ट-पुस्तकेषु च विनष्ट इव प्रतीयते।

ति'। किं मत इत्येकेनाग्निनादित्यता माह— "असौ वा आदित्य एषोऽग्निरिति। "अमुं तदिति। इतो लोकाः भूराद्याः 'अमु मादित्यम्' 'ऊर्द्धं' 'प्राञ्चं' प्रागञ्चनं 'दधाति' स्थापयति। 'तस्माद्' एव यज्ञानुकरणाद् 'असावादित्यः' 'इतः' पृथिवीलोकात् 'ऊर्द्धः प्राङ्' 'धीयते' धार्यते, लोकैरिति शेषः ॥ ३६ ॥

अथ प्रदक्षिणावर्त्तनं विधत्ते— "अथैन मिति। 'अथ' अनन्तरम्' 'एनम्' आदित्यभूतं स्वयमातृण्णाद्यात्मक मग्निं 'प्रसलवि' प्रदक्षिणं 'आवर्त्तयति' आवर्त्तते। अषाढां पूर्वार्द्धे उपधाय तस्याः दक्षिणतः कूर्म मुपदधाति, ततः स्वयमातृण्णाया उत्तरतः उलूखलमुसले, तत्रैवोखा मुपदधातीत्येव मावर्त्तयति। 'तत्' तेन प्रदक्षिणावर्त्तनेन 'अमुम्' आदित्यं प्रदक्षिण मावर्त्तयति। 'तस्मात्' यज्ञानुकरणात् 'असावादित्यः' 'इमान् लोकान्' तथैव सञ्चरति ॥ ३७ ॥

प्रकारान्तरेण उलूखलमुसलयोरौत्तराधर्यं प्रशंसति— "उदर मुखेति। उखायाः सकाशात् * अग्नेरुत्पत्तेः 'उखां' 'उदरम्', 'उलूखल' तु हविर्निष्पादनात् 'योनिः'। तथा च लोके, —उदरयोन्योरौत्तराधर्यादनयोरपि तदात्मकयोरौत्तराधर्यं मुपपन्न मित्यर्थः। मुसलस्य उदुलूखलदक्षिणभागे उपधानं सोपपत्तिक माह— "शिश्न मिति। शिश्नस्य वृत्ताकारतया तदाकारत्वेन † मुसल मपि 'शिश्नम्'। तथाविधम् उलूखलस्य

* 'प्रसक्तात्'—इति ज-पाठः।

† 'तदाकारवत्त्वेन'—इति ज-पाठः।

दक्षिणभागे उपदध्यात्। लोके दक्षिणभागे 'वृषा' वर्षणसमर्थः पुरुषः 'योषा मुपशेते', अतश्चास्यापि * वर्षणसमर्थत्वेन वृषत्वात्, उलूखलस्य योनित्वेन स्त्रीत्वात्, दक्षिणभागेऽस्य उपधान मुपपन्नम् † ॥

उक्त मेवाग्नेः पशुरूपत्वं प्रकारान्तरेण द्रढयति। "यद्वै पशोरिति। "अग्निरिति। 'यत्' यतः, एष पशुः खलु, तथैव प्रागुक्तत्वात्; अतश्च पशोः अग्निरूपस्य संस्कृतस्य पञ्चवयव-सम्पादनाय ‡ निष्पादितस्य 'यदन्नम्', 'तद् दूर्वेष्टका'। तस्मात् 'तस्य' दूर्वेष्टकारूपेणान्नेन सुहितस्यैतस्याग्निरूपस्य पशोरुत्तरभागः 'उदाहिततरः' उन्नततरो भवति; उत्तरभागे एव उलूखल-मुसलाद्युपधानात्। उक्त मर्थं प्रमाणयति— "तस्मादिति। यतोऽग्निरूपस्य पशोः दूर्वेष्टकान्नत्वेन सुहिततरस्योत्तरभागः उन्नततरोऽभूत्, तस्मादिदानी मपि लोके तृणाद्यभ्यवहारेण तृप्तस्य 'पशोरुत्तरः कुक्षिरुन्नततरो भवति' ॥ ३८ ॥ १ [५. १.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ॥

---

* 'अस्य'—इत्येक मेव पद मिह ज-पुस्तके।

† 'स्त्रीत्वात्तदुपपन्नम्'—इत्येवेह ज-पाठः।

‡ 'सम्पादनाय'—इत्येव पाठो ज-पुस्तके।

( अथ द्वितीयं ब्राह्मणम्. )

पशुशीर्षाण्युपदधाति। पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखाया मुपदधातीमे वै लोका उखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून् दधाति तस्मादिम ऽएषु लोकेषु पशवः ॥ १ ॥

यद्वेवोखायाम् *। योनिर्वा ऽउखा पशवः पशुशीर्षाणि योनौ तत् पशून् प्रतिष्ठापयति तस्माद्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान् प्रतिष्ठापयति ॥ २ ॥

यद्वेव पशुशीर्षाण्युपदधाति। या वै ताः श्रिय एतानि तानि पशुशीर्षाण्यथ † यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यास्ताः पञ्च चितय इमे ते लोकास्तद्ये त ऽइमे लोका एषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥ ३ ॥

* 'यद्वेवोखायाम्'—इति क।

† 'पशुशीर्षाण्यथ'—इति ख।

तान् पुरस्तात् प्रतीच उपदधाति। एतद्वै यत्रैतान् प्रजापतिः पशूनालिप्सत त ऽआलिप्स्यमाना उदचिक्रमिषंस्तान् प्राणेषु समगृह्णात्तान् प्राणेषु सङ्गृह्य पुरस्तात् प्रतीच आत्मन्नधत्त ॥ ४ ॥

तद्वा ऽएतत् क्रियते। यद्देवा अकुर्व्वन्निदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्त्वेतत् करोति यद्देवा अकुर्व्वंस्तत् करवाणीत्यथो * प्राणेष्वेवैनानेतत् सङ्गृह्य पुरस्तात् प्रतीच आत्मन् धत्ते ॥ ५ ॥

यद्वेव पशुशीर्षाण्युपदधाति। प्रजापतिर्व्वा ऽइद मग्र ऽआसीदेक एव सोऽकामयतान्नꣳ सृजेय प्रजायेयेति स प्राणेभ्य एवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गाꣳ श्रोत्रादविं व्वाचोऽजं तद्यदेनान् प्राणेभ्योऽधि निरमिमीत तस्मादाहुः प्राणाः पशव इति मनो वै प्राणानां प्रथमं तद्यन् मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां व्वीर्यवत्तम इति मनो वै

---

* 'करवाणीत्यथो' – इति ख।

सर्व्वे प्राणा मनसि हि सर्व्वे प्राणाः प्रतिष्ठितास्तद्यन् मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः सर्व्वे पशव इति पुरुषस्य ह्येवैते सर्व्वे भवन्ति ॥ ॥ ६ ॥

तदेतदन्नꣳ सृष्ट्वा। पुरस्तात् प्रत्यगात्मन्नधत्त तस्माद्यः कश्चान्नꣳ सृजते पुरस्तादेवैनत् प्रत्यगात्मन् धत्ते तद्वा ऽउखाया मुदरं वा ऽउखोदरे तदन्नं दधाति * ॥ ७ ॥

अथैषु हिरण्यशकलान् प्रत्यस्यति। प्राणो वै हिरण्य मथ वा ऽएतेभ्यः पशुभ्यः सञ्ज्ञप्यमानेभ्य एव प्राणा उत्क्रामन्ति तद्यद्धिरण्यशकलान् प्रत्यस्यति प्राणानेवैष्वेतद्दधाति ॥ ८ ॥

सप्त प्रत्यस्यति। सप्त वै शीर्षन् प्राणास्तानस्मिन्नेतद्दधात्यथ यदि पञ्च पशवः स्युः पञ्चैव कृत्वः सप्त-सप्त प्रत्यस्येत्पञ्च वा ऽएतान् पशूनुपदधाति सप्त-सप्त वा ऽएकैकस्मिन् पशौ प्राणास्तदेषु सर्व्वेषु प्राणान् दधाति ॥ ९ ॥

* 'दधाति'—इति क।

तद्धैकेऽपि । यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त-सप्त प्रत्यस्यन्ति पञ्च वा ऽएतान् पशूनुपदधाति सप्त-सप्त वा ऽएकैकस्मिन् पशौ प्राणास्तदेषु सर्व्वेषु प्राणान् दध्म इति न तथा कुर्यादेतस्मिन् वै पशौ सर्व्वेषां पशूनाꣳ रूपं तद्यदेतस्मिन् प्रत्यस्यति तदेवैषु सर्व्वेषु प्राणान् दधाति * ॥ १० ॥

मुखे प्रथमं प्रत्यस्यति । सम्यक् स्रवन्ति सरितो न धेना इत्यन्नं वै धेनास्तदिदꣳ सम्यङ्मुख मभिसꣳस्रवत्यन्तर्हृदा मनसा पूयमाना इत्यन्तर्वै हृदयेन मनसा सतान्नं पूतं य ऋजुस्तस्य घृतस्य धारा अभिचाकशीमीति या एवैतस्मिन्नग्नावाहुतीर्होष्यन् भवति ता एतदाह हिरण्ययो वेतसो मध्ये ऽअग्नेरिति य एवैष हिरण्मयः पुरुषस्त मेतदाह ॥ ११ ॥

ऋचे त्वेतीह । प्राणो वा ऽऋक् प्राणेन ह्यर्चति रुचे त्वेतीह प्राणो वै रुक् प्राणेन हि रोचतेऽथो

* 'दधाति'—इति क ।

प्राणाय हीदꣳ सर्व्वꣳ रोचते भासि त्वेतीह ज्योतिषि त्वेतीह भास्वती हीमे ज्योतिष्मती चक्षुषीऽअभूदिदं विश्वस्य भुवनस्य वाजिन मग्नेर्व्वैश्वानरस्य चेतीहाग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्च्चस्वानितीह विश्वावतीभ्यां विश्वꣳ हि श्रोत्रम् ॥ १२ ॥

अथ पुरुषशीर्ष मुद्गृह्णाति । महयत्येवैनदेतत् सहस्रदा असि सहस्राय त्वेति सर्व्वं वै सहस्रꣳ सर्व्वस्य दातासि सर्व्वस्मै त्वेत्येतत् * ॥ १३ ॥

अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तद् वीर्य्येणाप्त्वा दधाति † मध्ये पुरुष मभित इतरान् पशून् पुरुषं तत् पशूनां मध्यतोऽत्तारं दधाति तस्मात् पुरुष एव पशूनां मध्यतोऽत्ता ‡ ॥ १४ ॥

अश्वं चाविं चोत्तरत § । एतस्यां तद्दिश्येतौ

* 'त्वेत्येतत्'—इति ग, घ ।

† 'वीर्य्येणात्वा दधाति'—इति ख-पुस्तके, दृष्टश्च डा॰-वेवरमहोदयेनापि ।

‡ 'मध्यतोऽत्ता'—इति ग, घ ।

§ 'चोत्तरतः'—इति क, ख ।

पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १५ ॥

गां चाजं च दक्षिणत * । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १६ ॥

पयसि पुरुष मुपदधाति । पशवो वै पयो यजमानं तत् पशुषु प्रतिष्ठापयत्यादित्यं गर्भं पयसा समङ्ग्धीत्यादित्यो वा ऽएष गर्भो यत् पुरुषस्तं पयसा समङ्ग्धीत्येतत् सहस्रस्य प्रतिमां विश्व-रूप मिति पुरुषो वै सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति परिवृङ्ग्धि हरसा माभिमꣳस्था इति पर्येनं वृङ्ग्ध्यर्चिषा मैनꣳ हिꣳसीरित्येतच्छतायुषं कृणुहि चीयमान इति पुरुषं तत् पशूनाꣳ शतायुं करोति तस्मात् पुरुष एव पशूनाꣳ शतायुः ॥ ॥ १७ ॥

अथोत्तरतोऽश्वम् । वातस्य जूत मिति वा-

* 'दक्षिणतः'--इति क, ख ।

तस्य वा ऽएष जूतिर्यदश्वो व्वरुणस्य नाभि मिति व्वारुणो ह्यश्वोऽश्वं जज्ञानꣳ सरिरस्य मध्य ऽइत्यापो वै सरिर मप्सुजा उ वा ऽअश्वः शिशुं नदीनाꣳ हरि मद्रिबुध्न मिति गिरिर्व्वा ऽअद्रिर्गिरिबुध्ना उ वा ऽआपोऽग्ने मा हिꣳसीः परमे व्योमन्निती मे वै लोकाः परमं व्योमेषु लोकेष्वेनं मा हिꣳसीरित्येतत् * ॥ १८ ॥

अथ दक्षिणतो गाम् †। अजस्र मिन्दु मरुष मिति सोमो वा ऽइन्दुः स हैष सोमो ऽजस्रो यद्गौर्भुरण्यु मिति भर्त्तार मित्येतदग्निमीडे पूर्व्वचित्तिं नमोभिरित्याग्नेयो वै गौः पूर्व्वचित्ति मिति प्राञ्चꣳ ह्यग्नि मुद्धरन्ति प्राञ्च मुपचरन्ति स पर्व्वभिर्ऋतुशः कल्पमान इति यद्वा ऽएष चीयते तदेष पर्व्वभिर्ऋतुशः कल्पते गां मा हिꣳसीरदितिं व्विराज मिति व्विराड् वै गौरन्नं वै व्विराडन्न मु गौः ‡ ॥ १९ ॥

* '०रित्येतत्'—इति ग, घ।

† 'गाम्'—इति ग, घ।

‡ 'गौः'—इति ग, घ।

अथोत्तरतोऽविम् । व्वरूत्रीं त्वष्टुर्व्वरुणस्य नाभि मिति व्वारुणी च हि त्वाष्ट्री चाविरविं जज्ञानाᳪ रजसः परस्मादिति श्रोत्रं वै परᳪ रजो दिशो वै श्रोत्रं दिशः परᳪ रजो महीᳪ साहस्री मसुरस्य माया मिति महतीᳪ साहस्री मसुरस्य माया मित्येतदग्ने मा हिᳪसीः परमे व्योमन्निती-मे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳪसी-रित्येतत् * ॥ २० ॥

अथ दक्षिणतोऽजम् † । यो ऽअग्निरग्नेरध्य-जायतेत्यग्निर्व्वा ऽएषो ऽग्नेरध्यजायत शोकात् पृथिव्या उत वा दिवस्परीति यद्वै प्रजापतेः शोका-दजायत तद्दिवश्च पृथिव्यै च शोकादजायत येन प्रजा व्विश्वकर्म्मा जजानेति व्वाग्वा ऽअजो व्वाचो वै प्रजा व्विश्वकर्म्मा जजान त मग्ने हेडः परि ते व्वृणक्त्विति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

---

* '०रित्येतत्'—इति ग, घ ।

† 'ऽजम्'—इति ग, घ ।

त ऽएते पशवः। तान्नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः * ॥ २२ ॥

अथ पुरुषशीर्ष मभिजुहोति। आहुतिर्वै यज्ञः पुरुषं तत् पशूनां यज्ञियं करोति तस्मात् पुरुष एव पशूनां यजते ॥ २३ ॥

यद्वेवैनदभिजुहोति। शीर्षंस्तद्वीर्यं दधात्याज्येन जुहोति व्वज्रो वा ऽआज्यं व्वीर्यं वै व्वज्रो व्वीर्य मेवास्मिन्नेतद्दधाति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वीर्यं वै व्वृषा व्वीर्य मेवास्मिन्नेतद्दधाति त्रिष्टुभा व्वज्रो वै त्रिष्टुब् वीर्यं वै व्वज्रो व्वीर्यं त्रिष्टुब् वीर्येणैवास्मिन्नेतद् व्वीर्यं दधाति ॥ ॥ २४ ॥

स वा ऽअर्द्धर्च मनुद्रुत्य स्वाहाकरोति। अस्थि वा ऽऋगिदं तच्छीर्षकपालं व्विहाप्य यदिद मन्तरतः शीर्ष्णो व्वीर्यं तदस्मिन् दधाति ॥ २५ ॥

* 'पप्रवः' – इति ग, घ।

अथोत्तर मर्द्धर्च्च मनुद्रुत्य स्वाहाकरोति। इदं तच्छीर्षकपालᳪ सन्धाय यदिद मुपरिष्टाच्छीर्ष्णो व्वीर्यं तदस्मिन् दधाति ॥ २६ ॥

चित्रं देवाना मुदगादनीक मिति। असौ वा ऽआदित्य एष पुरुषस्तदेतच्चित्रं देवाना मुदेत्यनीकं चक्षुर्मित्रस्य व्वरुणस्याग्नेरित्युभयेषाᳪ हैतद्देवमनुष्याणां चक्षुराप्रा द्यावापृथिवी ऽअन्तरिक्ष मित्युद्यन् वा ऽएष इमाँल्लोकानापूरयति सूर्य आत्मा जगतस्तस्थुषश्चेत्येष ह्यस्य सर्व्वस्यात्मा यच्च जगद्यच्च तिष्ठति ॥ २७ ॥

अथोत्सर्गैरुपतिष्ठते *। ऽएतद्वै यत्रैतान् प्रजापतिः पशूनालिप्सत त ऽआलिप्स्यमाना अशोचंस्तेषा मेतैरुत्सर्गैः शुचं पाप्मान मपाहंस्तथैवैषा मय मेतैरुत्सर्गैः शुचं पाप्मान मपहन्ति ॥ २८ ॥

तद्वैके। यं य मेव पशु मुपदधति तस्य तस्य शुच मुत्सृजन्ति नेच्छुचं पाप्मान मभ्युपदधा-

* '०रुपतिष्ठत'—इति ग, घ।

महा ऽइति ते ह ते शुचं पाप्मान मभ्युपदधति याᳬं हि पूर्व्वस्य शुच मुत्सृजन्ति ता मुत्तरेण सहो-पदधति ॥ २९ ॥

व्विपरिक्राममु हैक ऽउपतिष्ठन्ते। ऊर्द्ध्वाᳬं शुच मुत्सृजाम इति ते ह ते शुचं पाप्मान मनूद्य-न्त्यूर्द्ध्वो ह्येतेन कर्म्मणोत्यूर्द्ध्वा मु शुच मुत्सजन्ति ॥ ॥ ३० ॥

बाह्येनैवाग्नि मुत्सृजेत्। इमे वै लोका एषो ऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति वहि-र्वेदीयं वै व्वेदिरस्यै तद् बहिर्द्धा शुचं दधात्युदङ् तिष्ठन्नेतस्याᳬं ह दिश्येते पशवस्तद्यत्वेते पशव-स्तदेवैष्वेतच्छुचं दधाति * ॥ ३१ ॥

पुरुषस्य प्रथम मुत्सृजति। तᳬं हि प्रथम मुपदधातीमं मा हिᳬंसीर्द्विपादं पशु मिति द्विपाद्वा ऽएष पशुर्यत् पुरुषस्तं मा हिᳬंसीरित्येतत् सह-स्राक्षो मेधाय चीयमान इति हिरण्यशकलैर्व्वा

* 'दधाति'—इति क।

ऽएष सहस्राक्षो मेधायेत्यन्नायेत्येतन् मयुं पशुं मेधमग्ने जुषस्वेति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येतत्तेन चिन्वानस्तन्वोः निषीदेत्यात्मा वै तनूस्तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतन् मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तन् मयौ च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३२ ॥

अथाश्वस्य। इमं मा हिꣳसीरेकशफं पशुमित्येकशफो वा ऽएष पशुर्यदश्वस्तं मा हिꣳसीरित्येतत् कनिक्रदं वाजिनं वाजिनेष्विति कनिक्रदो वा ऽएष वाज्यु वाजिनेषु गौर मारण्यमनु ते दिशामीति तदस्मै गौर मारण्य मनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतद्गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३३ ॥

अथ गोः। इमꣳ साहस्रꣳ शतधार मुत्समिति साहस्रो वा ऽएष शतधार उत्सो यद् गौर्व्यच्यमानꣳ सरिरस्य मध्य ऽइतीमे वै लोकाः

सरिर मुपजीव्यमान मेषु लोकेष्वित्येतद् घृतं दुहा-
ना मदितिं जनायेति घृतं वा ऽएषादितिर्ज्जनाय
दुहेऽग्ने मा हिꣳसीः परमे व्योमन्निती मे वै लोकाः
परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतद्गवय
मारण्य मनु ते दिशामीति तदस्मै गवय मारण्य
मनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन
चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतद्गवयं ते शुग-
च्छतु यं द्विष्मस्तं ते शुगच्छत्विति तद् गवये च शुचं
दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३४ ॥

अथाविः । इम मूर्णायु * मित्यूर्णावल मित्येतद्
व्वरुणस्य नाभि मिति व्वारुणो ह्याविस्त्वचं पशूनां
द्विपदां चतुष्पदा मित्युभयेषाꣳ ह्येष पशूनां त्वग्
द्विपदां च चतुष्पदां च त्वष्टुः प्रजानां प्रथमं जनित्र
मित्येतद्ध त्वष्टा प्रथमꣳ रूपं व्विचकाराग्ने मा
हिꣳसीः परमे व्योमन्नितीमे वै लोकाः परमं
व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतदुष्ट्र मारण्य

* 'मूर्णायु'—इति क, ख।

मनु ते दिशामीति तदस्मा ऽउष्ट्र मारण्य मनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतदुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्विति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३५ ॥

अथाजस्य। अजो ह्यग्नेरजनिष्ट शोकादिति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत सो ऽअपश्यज्जनितार मग्र ऽइति प्रजापतिर्वै जनिता सो ऽपश्यत् प्रजापति मग्र ऽइत्येतत् तेन देवा देवता मग्र ऽआयन्निति * व्वाग्वा ऽअजो व्वाचो वै देवा देवता मग्र मायंस्तेन रोह मायन्नुप मेध्यास इति स्वर्गो वै लोको रोहस्तेन स्वर्गं लोक मायन्नुप मेध्यास इत्येतच्छरभ मारण्य मनु ते दिशामीति तदस्मै शरभ मारण्य मनुदिशति तेन चिन्वानस्तन्वो निषीदेति तेन चिन्वान आत्मानꣳ संस्कुरुष्वेत्येतच्छरभं ते शुगृच्छतु यं

---

* 'मायन्निति'—इति क, ख।

द्विष्मस्तं ते शुगृच्छत्विति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥ ३६ ॥

तदाहुः । यां वै तत् प्रजापतिरेतेषां पशूनाᳬं शुचं पाप्मान मपाहंस्त ऽएते पञ्च पशवो ऽभवंस्त ऽएत ऽउत्क्रान्तमेधा अमेध्या अयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मादेतस्यां दिशि पर्ज्जन्यो न व्वर्षुको यत्रैते भवन्ति * ॥ ३७ ॥

प्रत्येत्याग्नि मुपतिष्ठते । एतद्वा ऽएतद्यथायथं करोति यदग्नौ सामिचिते बहिर्व्वेदीति तस्मा ऽएवैतन्निह्नुते ऽहिᳬंसाया ऽआग्नेय्याग्नय ऽएवैतन्निह्नुते गायत्र्या गायत्र्योऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा ऽएतन्निह्नुतेऽनिरुक्तया सर्व्वं वा ऽअनिरुक्तᳬं सर्व्वेणैवास्मा ऽएतन्निह्नुते यविष्ठवत्यैतद्वास्य † प्रियं धाम यद्यविष्ठ

---

* 'भवन्ति'—इति क ।

† 'यविष्ठवत्यैतद्वास्य'—इति क, ख ।

इति यद्वै जातं इदꣳ सर्व्वं मयुवत तस्माद्यविष्ठः ॥ ॥ ३८ ॥

त्वं यविष्ठ दाशुष इति । यजमानो वै दाश्वान् नॄँःपाहीति * मनुष्या वै नरः शृणुधी गिर इति शृणु न इमाꣳ स्तुति मित्येतद्रचा तोकमुतत्मनेति प्रजा वै तोकꣳ रक्ष प्रजां चात्मानं चेत्येतत् † ॥ ३९ ॥

आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति । आप एता यदपस्या अथ वा ऽएतेभ्यः पशुभ्यः आप उत्क्रान्ता भवन्ति तद्यदपस्या उपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुभ्य उपदधात्यनन्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्च-पञ्चोपदधाति पञ्च ह्येते पशवः सर्व्वत उपदधाति सर्व्वत एवैष्वेतदपो दधाति ॥ ४० ॥

तद्याः पञ्चदश पूर्व्वाः । ता अपस्या व्रज्यो

* 'दाश्वान्नृः पाहीति'—इति क, ख ; इष्टं च वेबरमहोदयेनापि ।
† 'चेत्येतत्'—इति क, ख ।

वा ऽआपो व्वज्रः पञ्चदशस्तस्माद्येनापो यन्त्यपैव तत्र पाप्मानं घ्नन्ति व्वज्रो हैव तस्यार्द्धस्य पाप्मान मपहन्ति तस्माद्वर्षत्यप्रावृतो व्व्रजेदयं मे व्वज्रः पाप्मान मपहनदिति * ॥ ४१ ॥

अथ याः पञ्चोत्तराः । ताश्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवोऽन्न मु पशोर्म्माꣳस मथ वा ऽएतेभ्यः पशुभ्यो माꣳसान्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या उपदधात्येष्वेवैतत् पशुषु माꣳसानि दधात्यनन्तर्हिताः पशुभ्यः उपदधात्यनन्तर्हितानि तत् पशुभ्यो माꣳसानि दधात्यन्तरा अपस्या भवन्ति बाह्याश्छन्दस्या अन्तरा ह्यापो बाह्यानि माꣳसानि ॥ ४२ ॥

तदाहुः । यदिमा आप एतानि माꣳसान्यथ क्व त्वक् क्व लोमेत्यन्नं व्वाव पशोस्त्वगन्नं लोम तद्यच्छन्दस्या उपदधाति सैव पशोस्त्वक्तल्लोमाथो यान्यमून्युखाया मजलोमानि तानि लोमानि बाह्योखा

---

* 'मपहनदिति' – इति ग, घ ।

भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि लोमान्यन्तर आत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सर्व्वानेव व्वयं कृत्स्नान् पशून्संस्कुर्म्म इति ॥ ४३ ॥

यद्वेवापस्या उपदधाति । प्रजापतेर्व्विस्रस्ताद्राप आयंस्ताश्चितास्वविशद्यदविशत्तस्माद्विंशतिस्ता अस्याङ्गुलिभ्यो ऽध्यस्रवन्नन्तो वा ऽअङ्गुलयो ऽन्तत एवास्मात्ता आप आयन् ॥ ४४ ॥

स यः स प्रजापतिर्व्यस्रꣳसत । अय मेव स योऽय मग्निश्चीयतेऽथ या अस्मात्ता आप आयंस्तास्ता अपस्यास्तद्यदेता उपदधाति या एवास्मात्ता आप आयंस्ता अस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति * ॥ ४५ ॥

अपां † त्वेमन्त्सादयामीति । व्वायुर्व्वा ऽअपामेम यदा ह्येवैष इतश्चेतश्च व्वात्यथापो यन्ति व्वायौ ताꣳ सादयति ॥ ४६ ॥

* 'अत्रोपदधाति'--इति क, ख ।

† 'आपां'--इति ख ।

अपां त्वोद्मन्त्सादयामीति *। ओषधयो वा ऽअपा मोद्म यत्र ह्यापउन्दन्त्यस्तिष्ठन्ति तदोषधयो नायन्त ऽओषधिषु ताᳰ सादयति ॥ ४७ ॥

अपां त्वा भस्मन्त्सादयामीति †। अभ्रं ‡ वा ऽअपां भस्माभ्रे ताᳰ सादयति ॥ ४८ ॥

अपां त्वा ज्योतिषि सादयामीति। विद्युद्वा ऽअपां ज्योतिर्व्विद्युति ताᳰ सादयति ॥ ४९ ॥

अपां त्वायने सादयामीति। इयं वा ऽअपामयन मस्याᳰ ह्यापो यन्त्यस्यां ताᳰ सादयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत् प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५० ॥

अर्णवे त्वा सदने सादयामीति। प्राणो वा ऽअर्णवः प्राणे ताᳰ सादयति ॥ ५१ ॥

समुद्रे त्वा सदने सादयामीति। मनो वै

---

*, † '०यामीति'—इति ग, घ।

‡ 'अभ्रं'—इति, 'यामीत्यभ्रं'—इति च दृष्टं वेबरमहोदयेन।

समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनंस्तदेष श्लोको ऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णाभिरभ्रिभिः सुदेवो ऽअद्य तद्विद्याद्यत्र निर्व्वपणं दधुरिति मनः समुद्रो व्वाक् तीक्ष्णाभ्रिस्त्रयी व्विद्या निर्व्वपणमेतदेष श्लोको ऽभ्युक्तो मनसि ताꣳ सादयति ॥ ५२ ॥

सरिरे त्वा सदने सादयामीति । व्वाग्वै सरिरं व्वाचि ताꣳ सादयति ॥ ५३ ॥

अपां त्वा क्षये सादयामीति । चक्षुर्व्वा ऽअपां क्षयस्तत्र हि सर्व्वदैवापः क्षियन्ति चक्षुषि ताꣳ सादयति ॥ ५४ ॥

अपां त्वा सधिषि सादयामीति । श्रोत्रं वा ऽअपाꣳ सधिः श्रोत्रे ताꣳ सादयति तद्या अमुतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत् प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥

अपां त्वा सदने सादयामीति । द्यौर्व्वा ऽअपाꣳ सदनं दिवि ह्यापः सन्ना दिवि ताꣳ सादयति ॥ ५६ ॥

अपां त्वा सधस्थे सादयामीति । अन्तरिक्षं वा अपाᳪ सधस्थ मन्तरिक्षे ताᳪ सादयति ॥ ५७ ॥

अपां त्वा योनौ सादयामीति । समुद्रो वा ऽपां योनिः समुद्रे ताᳪ सादयति ॥ ५८ ॥

अपां त्वा पुरीषे सादयामीति । सिकता वा ऽपां पुरीषᳪ सिकतासु ताᳪ सादयति ॥ ॥ ५९ ॥

अपां त्वा पाथसि सादयामीति * । अन्नं वा ऽपां पाथोऽन्ने ताᳪ सादयति तद्या अस्यैतेभ्यो रूपेभ्य आप आयंस्ता अस्मिन्नेतत् प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥

गायत्रेण त्वा छन्दसा सादयामि । त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयाम्यानुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामीति तद्या अस्यैतेभ्यश्छन्दोभ्य आप आयंस्ता अस्मिन्नेतत् प्रतिदधात्यथो ऽएतान्ये-वास्मिन्नेतच्छन्दाᳪसि दधाति ॥ ६१ ॥

* 'सादयामीति' – इति ग, घ ।

ता एता अङ्गुलयः। ताः सर्व्वत उपदधाति सर्व्वतो ह्रीमा अङ्गुलयो ऽन्तेषूपदधात्यन्तेषु ह्रीमा अङ्गुलयश्चतुर्द्धोपदधाति चतुर्द्धा ह्रीमा अङ्गुलयः पञ्च पञ्चोपदधाति पञ्च-पञ्च ह्रीमा अङ्गुलयो नानोपदधाति नाना ह्रीमा अङ्गुलयः सकृत्सकृत्सादयति समानं तत् करोति तस्मात् समानसम्बन्धनाः। ॥ ६२ ॥ २ ॥

॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [ ५. २. ]॥

अथ पशुशीर्षाणा मुपधानं विधाय प्रशंसति— "पशुशीर्षाणीति *। पशुशीर्षाणां पश्ववयवत्वेन पशुत्वम्; अतस्तदुपधाने पशूना मेवोपधानं भवतीत्यर्थः। तेषा मुपधानस्य स्थानविशेषं विधत्ते— "तानीति। "यो वै स प्रजापतिर्व्यस्रंसतैषा सोखेमे वै लोका उखेमे लोकाः प्रजापतिः"—इत्युखाया लोकत्रयरूपत्वस्योक्तत्वात् † तस्या मुपधाने 'लोकेषु' 'पशून्' निहितवान् भवति। 'तस्मात्' इमे 'पशवः', 'एषु लोकेषु' अवतिष्ठन्ते ॥ १ ॥

प्रकारान्तरेणाप्युखाया मुपधानं प्रशंसति— "यद्वेवोखायामिति। उखायाः सकाशादग्न्युत्पत्तेः 'योनिः उखा', अतस्तस्यां

* का० श्रौ० सू० १७. ५. १३।

† पूर्वस्मिन ब्राह्मणे १७ क० ( ३६४ पृ० ) द्रष्टव्यम्।

पधाने योनावेव 'पशून्' निदधाति। 'तस्मात्' 'अद्यमानाः' उपभुज्यमानाः, 'पच्यमानाः' जीर्यमाणा अपि 'पशवः' 'न क्षीयन्ते'। उपभोगात्परिपाकाच्च विनाशे सत्यपि 'योनौ' प्रतिष्ठितत्वात् नोच्छिद्यन्ते, किन्तु पुनरुत्पद्यन्त इत्यर्थः। 'पच्यमानाः'-इति कर्म्मकर्त्तरि यक् प्रत्ययः * ॥ २ ॥

अथ तानि पशुशीर्षाणि श्रीरूपत्वेन प्रशंसति— "यद्वेवेति। 'याः' खलु प्रागुक्ताः † 'श्रियः', 'ताः' एव 'एतानि' 'पशुशीर्षाणि'; अत एतेषा मुपधाने श्रिया मेवोपधानं भवति। उखायाः परम्परया कबन्धात्मकत्वम्। तत्रोपधाने कबन्धशिरसां सन्धानं भवतीति दर्शयति— "अथ यानीति। 'तानीति' प्रश्नःसम्भरणावसरपरामर्शः। 'यानि तानि' 'कुसिन्धानि' कबन्धानि, तानि 'एताः' अत्र सम्पाद्यमानाः 'पञ्च चितयः'। चित्यात्मकत्वन्तु कबन्धानां पञ्चत्वसङ्ख्यासामान्यात्। ततस्तथाविधाः 'याः पञ्च चितयः', 'ताः' 'इमे' पृथिव्यादयो 'लोकाः'। चितीनां प्रजापत्यवयवात्मकत्वात्, लोकाना मपि तथाभावादिति। तथा च 'ये' 'ते' एते 'इमे लोकाः', ते 'एषा उखा'; तस्याः लोकत्रयात्मकत्वस्य प्रागुक्तत्वात्। अतश्च 'उखायां' पशुशीर्षाणा मुपधानेन ‡ 'एतैः' कबन्धानि संयोजयति §। 'शीर्षभिः' -इति "शीर्षंश्छन्दसि"-इति ‖ शीर्षन्नादेशः ॥ ३ ॥

---

* पा० सू० ३. १. ८७।
† ६का० २अ० १ब्रा० ७ख० (६ भा० ५४ पृ०) द्रष्टव्याः।
‡ 'मुपधाने'—इति ज-पाठः।
§ 'संश्लेषयति'—इति ज-पाठः। ‖ पा० सू० ६. १. ६०।

उखाया मुपधानं पुरस्तादारभ्य प्रत्यगपवर्गं कर्त्तव्य मित्याह— "तानिति। पशुशीर्षाणा मपि पशुत्वात् 'तान्'-इति पुल्लिङ्गवचनम्। विहितप्रकारे उपधाने कारणं वक्तुं प्रतिजानीते— "एतद्वा इति। तत्रैतत् कारणं खल्वित्यर्थः। तदेव दर्शयति— "यत्रै-तानिति। 'यत्र' यस्मिन् प्रस्तावे 'प्रजापतिः' 'एतान्' पशून् 'आलिप्सत' आलब्धु मैच्छत्। ततः 'आलिप्स्यमानाः' ते पशव उत्क्रमितु मैच्छन्। उच्चिक्रमिषूंश्च 'तान्' 'प्राणेषु' शीर्षगतेषु* 'सर्वप्राणाधारत्वाच्छिरसां प्राणत्वम्। प्राणा इति इन्द्रियाण्युच्यन्ते, 'तान् प्राणेषु' सङ्गृह्य, 'पुरस्तात्' पूर्वस्माद्देशात् 'प्रतीचः' प्रत्यङ्मुखानाकृष्य, 'आत्मन्' आत्मनि 'अधत्त' स्वाधीनीकृतवान्। पलायनेच्छूनां† पशूनां शिरांसि गृहीत्वा स्वाभिमुख माकृष्य वशीकृतवानित्यर्थः ॥ ४ ॥

"तद्वेति। तथा सति 'देवा यदकुर्वन्', 'तत्' एवैतस्मिन्नपि काले 'क्रियते' खलु। अतश्च यजमानो 'देवा यदकुर्वन्', 'तत्' 'करवाणि'-'इति' अभिप्रायेण 'एतत्' उक्तप्रकार मुपधानं 'करोति' -इति 'यत्', 'इदन्नु' 'अस्मात्' एव निमित्तात् 'ते पशवः' 'अस्माद्' यजमानात् 'नोच्चिक्रमिषन्ति'। न केवलं तेषा मुत्क्रमणेच्छाभावः, अपि तु 'एनान्' पशून् 'प्राणेषु' 'सङ्गृह्य', 'पुरस्तात्' 'प्रतीचः' आकृष्य, स्वस्मिन्निहितवान् भवति ॥ ५ ॥

उखायां पशुशीर्षाणा मुपधाने प्रजापत्युदरे अन्नं दधातीति दर्शयितु माख्यायिका मवतारयति— "यद्वेवेति। 'पशुशीर्षा-

* 'शीर्षे गतेषु'—इति ज-पाठः।

† 'पलायने'—इति ज-पाठः।

त्युपदधाति'-इति 'यत्', तत्कारण मुच्यत इत्यर्थः। 'अग्रे' सृष्टेः पूर्वं 'प्रजापतिः एक एवासीत्' खलु, 'सः' प्रजापतिः 'अन्नं सृजेय', प्रजारूपेण जायेयेति 'अकामयत'। 'प्रजायेय' इति अन्न-सृष्ट्युपायप्रदर्शनम्। 'सः' एवं जातेच्छुः प्रजापतिः 'प्राणेभ्य एव पशून्निरमिमीत'। तदेव विवृणोति— "मनसः पुरुष मिति। "प्राणादिति। प्राणसञ्चारणस्थानत्वाद् घ्राणेन्द्रिय मुच्यते। यतः 'एनान्' पशून् 'प्राणेभ्यो निर्मितवान्', 'तस्मात्' लोके 'प्राणाः पशव इत्याहुः' जनाः। किञ्च। सर्वेषा मिन्द्रि-याणां 'मनः' खलु 'प्रथमं' श्रेष्ठम्; तदुपधानादेव सर्वेषां स्वस्वव्यापारक्षमत्वात्। अतश्च मनसः पुरुषस्य निर्माणात् लोके 'पुरुषः पशूनां' मध्ये श्रेष्ठः 'वीर्यवत्तमः'-इति आहुः। अपि च 'मनस्येव सर्वे प्राणाः प्रतिष्ठिताः'-इति, तदेव खलु 'सर्वे प्राणाः'; अतश्च सर्वप्राणात्मकात् 'मनसः पुरुषं निर-मिमीत'-इति 'यत्', 'तस्मादाहुः पुरुषः सर्वे पशवः'-'इति'। यतः 'पुरुषस्य' ह्येवैते 'सर्वे पशवः' भवन्ति; सर्वपशुसम्पा-दनक्षमत्वात् पुरुषस्य; अतः 'पुरुषः सर्वे पशवः'-इति 'आहुः'। सर्वेन्द्रियप्रतिष्ठारूपात् मनसः सकाशात् पुरुषस्य निर्मा-णेन तस्य पशुसम्पादनक्षमत्वात् पुरुषः सर्वे पशवः इत्याहु-रित्यर्थः॥ ६॥

"तदेतदिति। 'एतत्' पुरुषादिपशुलक्षणम् 'अन्नं सृष्ट्वा', स प्रजापतिः 'पुरस्तात्' प्रतीचीन मात्मनि 'अधत्त'। 'तस्मात्' लोके-ऽपि कश्चनापि अन्नं सम्पादयति, एतत् सम्पादनं 'पुरस्ता-देव' प्रतीचीन मात्मनि धारयति; मुखप्रदेशादेवान्नस्य प्रती-

चीन मभ्यवहारात्। अतश्च 'तत्' पुरस्तात् प्रतीचीनं तेषां पशुशीर्षाणा मुपधान मुखायां क्रियत इति यत्, तेन प्रजापतिरुदररूपायाम् 'उखायां' पुरस्तात् प्रतीचीन मन्नं निहितवान् भवति ॥ ७ ॥

अथ तेषु पशुशीर्षेषु सुवर्णशकलानां प्रक्षेपं विधाय प्रशंसति—"अथैष्विति *। प्राणसाधनत्वाद्धिरण्यस्य प्राणात्मकत्वम्। "अथ वा इति। 'अथ' खलु 'सञ्ज्ञप्यमानेभ्यः' एभ्यः 'प्राणा उत्क्रामन्त्येव'। अतश्च 'हिरण्यशकलान् प्रत्यस्य'-इति यत्, एतेन 'प्राणानेव' 'एषु' पशुषु नि-'दधाति' ॥ ८ ॥

सुवर्णशकलानां सङ्ख्याविशेषं विधत्ते—"सप्त प्रत्यस्यतीति †। शिरसि,— वाणिका, नेत्रे द्वे, श्रोत्रे द्वे, नासाविवरे च द्वे, इति सप्त प्राणाः। तथा सप्तहिरण्यशकलनिधानेन सप्तप्राणवान् भवतीत्याह— "सप्त वा इति। पञ्चपशुपक्षः, एकपशुपक्षः, इति पक्षद्वय मस्ति। तत्र पञ्चपशुपक्षे 'पञ्चकृत्वः' 'सप्त-सप्त' हिरण्यशकलान् प्रतिशीर्षं प्रत्यस्यति ॥ ९ ॥

"तद्धैक इति। 'यदि एकोऽपि पशुर्भवति', तदापि 'पञ्चकृत्व एव' 'सप्त-सप्त' सुवर्णशकलान् प्रत्यस्येदिति 'एके' शाखिन आहुः। तथा वदताञ्च तेषा मय माशयः।— पञ्चाना मपि पशूनां स्थाने एकस्योपधानादसावङ्गुर्युः 'पञ्च' खल्वेतान् 'पशून्' 'उपदधाति'। तथा च 'एकैकस्मिन् पशौ' 'सप्त-सप्त प्राणाः' विद्यन्ते। तस्मात् तावतां हिरण्यशकलानां प्रत्य-

* का० श्रौ० सू० १७. ५. ७ ख।

† का० श्रौ० सू० १७. ५. ७ क।

मनेन 'एतेषु सर्वेष्वपि प्राणान् दध्मः'-'इति' दूषयति— "न तथा कुर्यादिति ।

कथं तर्हि सर्वेषां पशूनां प्राणसङ्घटनेति तत्राह— "एतस्मिन् वा इति । 'एतस्मिन्' उपधीयमाने 'पशौ एकस्मिन्' एव 'सर्वेषां पशूनां रूपम्' अस्ति ; तेषां सर्वेषा मपि कार्ये एतस्यैव सामर्थ्यावधारणात् । तस्मात् 'एतस्मिन्' सप्तसङ्ख्याविशिष्टहिरण्यशकलप्रत्यसनेन 'सर्वेष्वपि' पशुषु प्राणप्रतिसन्धानं सम्पादितवान् भवति ॥ १० ॥

तत्र प्रथमं मुखे शकलस्य प्रत्यसनं विधत्ते— "मुखे प्रथम मिति * । तत्र मन्त्रं दर्शयन् व्याचष्टे— "सम्यक् स्रवन्तीति † । 'धेना इति अन्नम्' उच्यते । 'तदिदम्' अन्नं 'मुखम्' 'अभि'-लक्ष्य 'सम्यक् संस्रवति' । कथ मिव ? 'सरितो न' सरित इवेति । अय मर्थो मन्त्रभागेन प्रतिपाद्यत इत्यर्थः । द्वितीयं पादं व्याचष्टे— "अन्तर्हृदेति । 'यः' 'ऋजुः' अकुटिलाङ्गः, 'तस्य' 'अन्तः' शरीरमध्ये 'हृदा' हृदयदेशेन 'मनसा' च 'सता' विद्यमानेन 'अन्नं पूतं भवति', सारासारभेदेन विवेचितं भवति । हृदयदेशस्य त्वन्नावतरणप्रदेशत्वात् शोधकत्वम् । 'यः' 'ऋजुः' अकुटिलः शोभनकर्मा यजमानः, 'तस्य' मनसेति । तृतीयं पादं व्याचष्टे— "घृतस्य धाराः"-इत्यनेन । होष्यमाणाहुत्यभिधान मभिप्रेत मित्याह— "घृतस्य धारा इति । चतुर्थपादे

* का० श्रौ० सू० १७. ५. ७ ग ।

† का० श्रौ० सू० १७. ५. ७ घ ।

अग्निमध्यावस्थितहिरण्मयपुरुषाभिधानं क्रियत इति व्याचष्टे— "हिरण्मय इति ॥

तदयं मन्त्रस्यार्थः *।— अकुटिलावयवस्य अन्तर्मध्ये शरीरे, हृदयेन विद्यमानेन, मनसा च शोध्यमाना, धेना अन्नानि, इदं मुख मभिलक्ष्य स्रवन्ति; यथा नद्यः समुद्रम्, तद्वत्। तथाविधे अस्मिन् मुखे शकलं निदधामि। निहितं शकलञ्चेदं 'अग्नेर्मध्ये यो हिरण्ययो वेतसः इति' संस्रवन्ती 'घृतस्य धाराः' 'अभिचाकशीमि' अभिपश्यति। चाकशीमीति पुरुषव्यत्ययः, यङ्लुगन्तस्य रूपम् †। 'हिरण्यय'-शब्दः "ऋत्व्यवास्त्वेत्यादिना निपातितः ‡ ॥ ११ ॥

अथ दक्षिणनासाविवरे समन्त्रकं शकलनिधानं विधत्ते— "ऋचे त्वेतीति §। 'इय'-इति दक्षिणनासाविवरस्याभिनयेन निर्देशः। व्याचष्टे— "प्राणो वा इति। यतः 'प्राणो वा' 'अर्चति' प्राप्नोति; प्राणवतैव सर्वस्य प्राप्तेः। अनेकार्थत्वाद् धातूना मर्चतिरत्र प्राप्त्यर्थः। अतश्च ऋगिति प्राणः। तथा सति 'ऋचे' प्राणाय सञ्चरमाणाय प्रत्यस्यामीति मन्त्रार्थः ‖। सव्यनासाविवर मप्यभिनयेन निर्दिश्य समन्त्रकं शकलनिधानं विधत्ते—"रुचे त्वेतीति ¶। 'इह'-इति सव्यनासाविवरस्याभिनयेन

* वा० सं० १३. ३८।
† पा० सू० २. ४. ७४।
‡ पा० सू० ६. ४. १७५।
§ का० श्रौ० १७. ५. ८, ९।
‖ वा० सं० १३. ३९. १।
¶ वा० सं० १३. ३९. २।

निर्देश:। 'प्राणो वै' 'रुक्' दीप्यमान: ; 'प्राणेन हि' शरीरादिकं दीप्यते। प्राणार्थं मेव 'सर्वम्' 'इदं' जगत् प्रियं भवति॥

दक्षिणनेत्र मभिनयेन निर्दिश्य समन्त्रकं शकलनिधानं विधत्ते *—"भासित्वेतीति †। 'इह' दक्षिणनेत्रे। "ज्योतिषे त्वेति ‡। 'इह' सव्ये नेत्रे प्रत्यस्यति। यत: 'इमे' चक्षुषी 'भास्वती' अर्थप्रकाशनलक्षणतेजोविशिष्टे, 'ज्योतिष्मती' स्वयञ्च ज्योतिर्विशिष्टे, अतस्तत्र शकलप्रत्यसनमन्त्रयो: 'भासे' ज्योतिषे इति प्रयुक्तम्।

श्रोत्रयो: समन्त्रकं शकलप्रत्यसनं विधत्ते §— "अभूदिति ‖। 'इदं' दक्षिणश्रोत्रं 'विश्वस्य भुवनस्य' समस्तस्य लोकस्य 'वाजिनं' शब्दोपलब्धिसाधनम् 'अभूत्'। न केवल मस्यैवाभूत्, अपि तु 'वैश्वानरस्य' अभूत्। अपि तु 'वैश्वानरस्य' सर्वजनानां जनकत्वेन सम्बन्धिन:। "तस्येदम्"-इत्यण् प्रत्यय: ¶, "नरे सञ्ज्ञायाम्"-इति ** पूर्वपदस्य दीर्घ:। तस्य 'अग्नेः' प्रजापतेरपि शब्दोपलब्धिसाधन मभूत्। तादृशे तत्र त्वां प्रत्यस्यामीत्यर्थ:। "अग्निर्ज्योतिषेति ††। 'ज्योतिषा ज्योतिष्मान्' प्रशस्तज्योति-

* का॰ श्रौ॰ सू॰ १७. ५. १०।

† वा॰ सं॰ १३. ३६. ३।

‡ वा॰ सं॰ १३. ३६. ४।

§ का॰ श्रौ॰ सू॰ १७. ५. ११।

‖ वा॰ सं॰ १३. ३६. ५।

¶ पा॰ सू॰ ४. ३. १२०।

** पा॰ सू॰ ६. ३. १२९।

†† वा॰ सं॰ १३. ३६. ६।

ष्मान्, प्रशस्तज्योतिर्विशिष्टोऽग्निरिव। 'वर्चसा वर्चस्वान्' प्रशस्तवर्चोविशिष्टोऽग्निरिव। 'इव'-शब्दोऽध्याहार्यः। 'इदं' यद्दक्षिणेतरश्रोत्रं प्रकाशते, तथाविधे तत्र त्वां प्रक्षिपामीत्यर्थः॥

मन्त्रे विश्वपदप्रयोगस्याभिप्राय माह— "विश्ववतीभ्यामिति *। यद्यप्यत्रैकस्या मेव विश्वपदप्रयोगः, तथापि प्राणभृन्न्यायेन लिङ्गसमवायादुभयोरपि विश्ववतीभ्या मित्यभिधान मुपपद्यते। यतः श्रोत्रं 'विश्वं' विश्वव्यापकाकाशात्मकत्वात्; अतस्तत्र शकलप्रत्यसनमन्त्रे विश्वपदप्रयोगः॥ १२॥

पशुशीर्षाणा मुपधानम्, तस्य स्थानविशेषम्, उपधाने प्रकारभेदम्, तदुत्पत्त्यादिकञ्च प्रदर्श्यानन्तरम्, उपधानार्थं पुरुषशिरस उद्ग्रहणं विधत्ते— "अथेति †। उद्ग्रहणस्योपयोग माह— "महयत्येवैनदेतदिति। एतेनोद्ग्रहणेन 'एतत्' पुरुषशिरो 'महयति', पूजयति सत्कृतवान् भवति; अत एव यजमानदेवत्यत्वाज्जुहुरुद्यंस्यते, ऋतव्यदेवत्यत्वादुपभृद्वियस्यते।

विहिते उद्ग्रहणे मन्त्रं विधाय, व्याचष्टे— "सहस्रदा इति ‡। "सर्वं वा इति। यतः 'सहस्रं सर्वं'; तस्मिन्नेव शता-

---

* तत्पाठस्त्वेवम्—

"अभूदिदं विश्वस्य भुवनस्य वाजिन मग्नेर्वैश्वानरस्य च"—इत्येका; अथापरा,—"अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान्"—इति। वा० सं० १३. ३६. ५, ४०. १।

† का० श्रौ० सू० १७. ५. १४।

‡ वा० सं० १३. ४०. २।

दीना मन्तर्भावात्, अतः 'सर्वस्य दातासि'। तस्मात् 'सर्वस्मै त्वा' उद्गृह्णामि इत्येतत् उक्तं भवतीत्यर्थः। "सहस्रदा इति, विच्-प्रत्ययान्तं पदम्। "सर्वस्य दातासीति, पुरुषविवक्षया पुल्लिङ्गत्वम् ॥ १३ ॥

अथैतेषां पशूना मुपधान मनूद्य, तत्र पुरुषस्य प्राथम्यं विधत्ते— "अथेति *। उपधाने पुरुषस्य प्राथम्यात् वीर्येण पुरुष मतिशयितं करोतीत्याह— "पुरुषं तदिति। उखाया मुपधानस्य विहितत्त्वात् तस्यां मध्ये पुरुषोपधानं तत्पार्श्वयोरितरपशूना मुपधानं कुर्यादित्यर्थः। "मध्ये पुरुषम्"— इति विहितस्य सन्निवेशस्य प्रयोजन माह— "पुरुषं तदिति। 'तत्' तेन सन्निवेशेनोपधाने पशूनां 'मध्ये' 'पुरुषम्' 'अत्तारं' भोक्तारं करोति; भोक्तुः पार्श्वे भोग्यस्यावस्थानात्। 'तस्मात्' सम्प्रत्यपि 'पशूनां' मध्ये 'पुरुष एव' 'अत्ता' भोक्ता भवति ॥ १४ ॥

सामान्येनाभित इतरान् पशूनिति † विधानात् कस्य कुत्र पार्श्वे उपधान मिति विशेषजिज्ञासाया माह— "अश्वञ्चाविञ्चेति ‡ ॥ १५ ॥

"गाञ्चाजञ्चेति § ॥ १६ ॥

"मध्ये पुरुष मिति, पुरुषोपधानस्य मध्यस्थानं विहितम् ‖,

---

* का० श्रौ० सू० १७. ५. ११—१७।

† इतः पूर्वस्या मेव कण्डिकायां ( ३७१ पृ० ) द्रष्टव्यम्।

‡ का० श्रौ० सू० १७. ५. १५।

§ का० श्रौ० सू० १७. ५. १६।

‖ इहैव चतुर्दशकण्डिकायां ( ३३१ पृ० ) द्रष्टव्यम्।

तत्रैव विशेषं विधत्ते— "पयसीति *। उखामध्ये पयःपूरिते पुरुष मुपदध्यात्। एवञ्च सति यजमानस्य पुरुषत्वात् पयसः पशुकार्यत्वेन पशुत्वात् तत्र 'यजमानं प्रतिष्ठापयति'।

विहिते उपधाने मन्त्रं विदधानः पदशो विभज्य व्याचष्टे— "आदित्यं गर्भं मिति †। पुरुष इति यत्, 'एष आदित्यो गर्भः' खलु, अदितेः सकाशाद्विवस्वदाख्य आदित्योऽजायत। तथा च श्रूयते—"ततो विवस्वानादित्योऽजायतेति ‡। विवस्वत्सम्बन्धिनश्च सर्वे पुरुषा इति पुरुषस्याप्यादित्यगर्भत्वम्। तथा सति 'पुरुषम्' एव 'पयसा समङ्ग्धीत्येतत्' उक्तं भवति। द्वितीय-पादेऽपि 'सहस्रस्य प्रतिमा'-इत्यनेन पुरुष एव विवक्षित इति दर्शयति— "सहस्रस्येति। यतः पुरुषस्यैव पशूनां 'सहस्रं भवति', अतोऽयं सहस्रस्य सदृशः। अत एव तैत्तिरीयके श्रूयते— "सहस्रं वै प्रति पुरुषः पशूनां यच्छ-तीति §। तृतीयपादे 'हरः'-शब्देनार्चिरुच्यते। 'माभिसंस्था इति' अनेन हिंसन मिति दर्शयति— "परिवृङ्ग्धीति। चतुर्थपादे 'शतायुषं कृणुहि'-इत्येतदुच्चारणेन पुरुषस्य शता-युष्ट्वं सम्पादयतीत्याह— "शतायुष मिति॥

हे अग्ने! 'चीयमानः' त्वं पूर्वोक्तप्रकारेणादित्यगर्भरूपं 'सह-स्रस्य' 'प्रतिमां' सदृशम्; अत एव 'विश्वरूपम्' पुरुषं 'पयसा'

* का० श्रौ० सू० १७. ५. १७।
† वा० सं० १३ ४१—४५।
‡ तै० सं० ६. ५. ६. २। इहापि ३. १. ३. ४ द्रष्टव्यम्।
§ तै० सं० ५. २. ६. ५ (५भा० ५१पृ०)।

आर्द्रीकुरु। किञ्च 'एनं' परितो वर्ज्जय, 'अर्चिषा मा हिंसीः', 'शतायुषञ्च कृणुहि' इति मन्त्रार्थः * ॥ १७ ॥

उत्तरतोऽश्वस्योपधान मनूद्य, तत्र मन्त्रं विदधानो व्याचष्टे — "अथेति †। 'अश्व इति यत्, एष वा तस्य जूतिः' खलु। 'जूति'-शब्देन वेग उच्यते, तद्रूपत्वात् अश्वोऽपि तच्छब्देन, वायुवेग इत्यर्थः। अपा मधिपतिः 'वरुणस्य' सम्बन्धित्वात् 'अश्वः' 'वरुणस्य नाभिः'। अत एव श्रूयते— "प्रजापतिर्वरुणायाश्व मनयदिति ‡। 'सरिरम्'-इति § आप उच्यन्ते, 'अश्वश्चाप्सुजः' खलु; समुद्रमध्ये वडवारूपेणोत्पन्नत्वात्। अत एव "अप्सुयोनिर्वा अश्वः"-इत्यन्यत्र श्रुतम् ‖। "अद्रिबुध्न मितीति। 'अद्रिः' इति, 'गिरिः' उच्यते; 'आपः' 'बुध्नाः' गिरिमूलाः खलु; तत्रोत्पद्यमानत्वात्। तथा च तथाविधजलसमुद्भूतत्वात् अश्वोऽपि गिरिबुध्न इत्यर्थः। "इमे वै लोकाः परमं व्योम" -इत्यनेन मन्त्रगतं व्योमपद मितरलोकयोरप्युपलक्षण मिति तद्दर्शितम्।

हे 'अग्ने!' वायुवेगविशिष्टम्, 'वरुणस्य' 'नाभिं' नाभिस्थानीयम्, 'सरिरस्य मध्ये' उत्पन्नम्, अत एव 'नदीनां शिशुम्',

* वा० सं १३. ४१।

† का० श्रौ० सू० १७. ५. १५। 'पूर्वं मश्वस्यापर मवेः। उखाया मेवोत्तरभागे शिरसी उपधेये'।

‡ तै० सं० २. ३. १२. १ ( २भा ४५५पृ० )

§ 'शरीरम्—इति'—इति ङ-च-पुस्तकयोः।

‖ उपरिष्टात् १३का० १प्र० ११ब्रा० १९क० द्रष्टव्यम्।

'अद्रिबुध्नं' गिरिमूलोत्पत्तिस्थानम्, 'हरिम्' आरोढुर्हर्त्तारम्, 'अश्वम्' 'परमे व्योमन्' उत्कृष्टेषु पृथिव्यादिषु 'लोकेषु' 'मा हिंसीः'-इति मन्त्रार्थः * ॥ १८ ॥

दक्षिणदेशे गोरूपधान मनूद्य, स्तुतिवत् मन्त्रं विधत्ते- "अथेति †। "इन्दुरिति। 'सोमो हि इन्दुः'-इति, यतः 'स एषः' 'अजस्रः' सोमो हि; सर्वदा पयोलक्षणस्यामृतस्य स्यन्दनात्, इन्दोस्तु कदाचिदुपक्षयो विद्यत इति तदभिप्रायेणाजस्र मित्युक्तम्। 'भुरण्यु मिति' दोहनादिभिः 'भर्त्तार मित्येतत्' उक्तं भवति, गोजातीयस्य घृतत्वात्। अथ वा 'गौः' पुङ्गवः, 'अजस्रः' सोमः, सर्वदा आह्लादकत्वात्; कृषिसाधनत्वेन भर्तृत्वाद् 'भुरण्यु मिति'।

"अग्नि मीड इति। यतो 'गौः आग्नेयः', ततोऽसावग्निः। यतः 'अग्निं प्राञ्च मुद्धरन्ति', 'प्राञ्चम्' एव होमादिना 'उपचरन्ति', अतः अग्निः 'पूर्वचित्तिः' पूर्वस्मिन् प्रदेशे 'चित्तिः' अनुष्ठेयस्य प्रतीतिर्यस्य, स तथोक्तः। "यद्वा इति। 'एषः' अग्निः चीयत इति यत्, तेनैषः 'पर्वभिः' इष्टकाचितिलक्षणैः 'ऋतुशः' तेन तेन ऋतुना 'कल्पते'; चितिलक्षणानां पर्वणामृतुरूपत्वादित्यर्थः।

"विराड् वा इति। अन्नसाधनत्वाद् विराजोऽन्नत्वम् ‡।

---

* वा० सं० १३ ४२।

† का० श्रौ० सू० १७. ५. १६। 'पूर्वं गोरपरम जस्य। उखाया दक्षिणे भागे'। [ विराट्त्वम्।

‡ 'तस्यै प्रद्वटं तस्यै शरः'-इति (३भा० १६५पृ०) दशवीर्याभिप्रायं

गौरपि तथैवान्नत्त्व मिति, 'विराड्'-इति 'गौः' एवेत्यर्थः। सर्वदाह्लादकत्वेन 'अजस्र मिन्दुम्', 'अरुषम्' आरोचमानम्, कृष्यादिसाधनत्वेन भर्त्तारम्, 'पूर्वचित्तिम्' पूर्वत्वानुष्ठेयप्रतीतिविशिष्टम्, 'अग्निं' तदीयत्त्वेन तदात्मकं, 'गाम्' अत्रोपधानाय 'नमोभिः' नमस्कारैर्युक्ताम्, 'अग्निम्' 'ईडे'। हे अग्ने! 'पर्वभिः' चितिलक्षणैः 'ऋतुशः कल्पमानः' तथाविधस्त्वं 'अदितिम्' अखण्डनीयं 'विराजम्', 'अन्नम्' अन्नसाधनम्, 'गां' 'मा हिंसीः' इत्यर्थः * ॥ १९ ॥

अथोत्तरप्रदेशे अवेरुपधान मनूद्य मन्त्रं विधत्ते— "अथेति। "वारुणी च ह्यीति। यतोऽविः 'वरुणस्य' अनिष्टनिवारकस्याग्नेर्नाभिस्थानीया; रूपाणां निर्माता यः त्वष्टा, तस्यानुग्रहणीयरूपयुक्ता; अतोऽविः 'त्वष्टुर्वरूत्री', 'वरुणस्य नाभिः' च ॥

"श्रोत्रं वा इति। 'श्रोत्रं' खलु 'परं रजः' उत्कृष्टो लोकः। तदेवोपपादयति— "दिशो वा इति। श्रोत्रं च दिशः खलु; तस्य तत्कार्यत्त्वात्। 'दिशः परं रजः' दिग्भ्यसावय उत्पद्यन्ते; दिशां सर्वोत्पत्तिमन्निमित्तकारणात्। 'महीं साहस्रीम्'-इत्यत्र, महीपदस्य महतीत्यर्थ इति दर्शितम्— "महती मिति।

मन्त्रार्थस्तु †,— हे 'अग्ने!' 'त्वष्टुः' वरणीयरूपयुक्तां, 'वरुणस्य' नाभिस्थानीयां, 'परस्माद्रजसः' दिग्भ्यो जातां,

* वा॰ सं॰ १३ ४३।

† वा॰ सं॰ १३. ४४।

'महती', सहस्रमूल्यार्हाम्, 'असुरस्य मायां' सुवर्भानोरसुरस्य सम्बन्धित्वेन निर्मिताम्। अत एव तैत्तिरीयके— 'सुवर्भानुर्वा असुरः सूर्यं तमसाविध्यत्, तस्मै देवाः प्रायश्चित्ति मैच्छन्स्य यत् प्रथमं तमोऽपघ्नन् सा कृष्णाविरभवदिति * श्रूयते। तादृशीम्, 'अविं' पृथिव्यादिष्वेतेषु लोकेषु 'मा हिंसीः' ॥ २० ॥

अथ दक्षिणदेशे अजस्योपधान मनूद्य, मन्त्रं विदधानो व्याचष्टे— "अग्नेति। "अग्निर्वा इति। 'एषोऽग्निः' अजः, 'अग्नेः' प्रजापतेः 'अध्यजायत' अग्नेः सकाशादुत्पन्नत्वादजस्याग्नित्वम्। अग्नेः सकाशादुत्पत्तिरेव प्रदर्श्यते— "शोकादिति। 'यद्वै प्रजापतेः शोकादजायत', 'तद् दिवः', 'पृथिव्यै' पृथिव्याश्च 'शोकादजायत'; प्रजापतेस्तदात्मकत्वात्। अग्निरिति प्रजापतिरेवोच्यते, 'यत्' येनेत्यर्थः। 'विश्वकर्मा' प्रजापतिः 'वाचः' सकाशात् 'प्रजाः' 'जजान'। जनिरन्तर्भावितण्यर्थः, उत्पादितवान्। अजश्च वागात्मकः, ततश्च 'येन' 'विश्वकर्मा' प्रजाः 'जजान'। 'यथैव यजुः तथा बन्धुः'–इति मन्त्रो यथैव, तथैव व्याख्याने स्पष्टार्थ इत्यर्थः!

हे 'अग्ने!' उपधीयमानो 'यः' अग्न्यात्मकोऽजः 'अग्नेः' प्रजापतेः 'अध्यजायत'। तत् कथम्? यतः 'पृथिव्याः शोकात्', अपि च 'दिवः' शोकाद्, अध्यजायत। किञ्च, 'विश्वकर्मा जजान', 'येन' 'प्रजाः' उत्पादयामास। तम् अजं ते 'हेडः' कोपः 'परिवृणक्तु' अपवर्जयतु † ॥ २१ ॥

---

* तै० सं० २. १. २. ४ ( २भा० २६४पृ० )।

† वा० सं० १३ ४५।

प्रकृतानां पशूनां नानात्वात् पृथगेवोपधानसादनानि कर्त्तव्यानीत्याह— "त एते पशव इति ॥ २२ ॥

उपधानानन्तरं पुरुषशिरसि होमं विधत्ते— "अथेति। अभिहोमस्योपयोग माह— "आहुतिरिति। यत् एषा खलु आहुतिः, तदात्मको 'यज्ञः' स्यात्, तथा सत्यभिहोमेन 'पशूनां' मध्ये 'पुरुषं' 'यज्ञियं' यज्ञार्हं 'करोति'। 'तस्मात्' 'पुरुष एव पशूनां' मध्ये 'यजते' ॥ २३ ॥

न केवल मभिहोमस्य यज्ञियत्व मेव प्रयोजनम्, अपि तु तस्य वीर्यत्व मपीत्याह— "यद्वेवेति। 'एतत्' पुरुषशीर्षम् 'अभि'-लक्ष्य 'जुहोति' इति 'यत्', तेन 'शीर्षन्' शीर्षणि 'वीर्यं दधाति'। "शीर्षंश्छन्दसीति * शिरःशब्दस्य शीर्षन्नादेशः। तत उत्तरस्याः सप्तम्याः "सुपां सुलुगित्यादिना † लुक् ॥

एतदेव वीर्यनिधान मभिहोमसाधनभूताज्यस्रुवादीनां मध्ये प्रत्येकसाध्यतया दर्शयति— "आज्येनेत्यादिना। आज्यस्य वज्रत्वं तैत्तिरीयके श्रुतम्— "घृतं खलु वै देवा वज्रं कृत्वा सोम मघ्नन्निति ‡। वज्रस्य ग्रहणरूपत्वाद्वीर्यत्त्वम्। "वृषा वै स्रुवः"-इति § वृषा पुरुषः। स्रुवस्य पुल्लिङ्गत्वाद् वृषत्त्वम्। वृष्णो वीर्यत्त्वाद्वीर्याधानहेतुत्त्व मिति स्वाहाकारस्याप्येव

---

* पा० सू० ६. १. ६० ।

† पा० सू० ७. १. ३९ ।

‡ तै० सं० ६. २. २. ७ ( ३भा० ३६६पृ० )

§ "योषा वै स्रुक्, वृषा स्रुवः"—इतीहैव १. ३. १. ६ ( १ भा० १७६ पृ० ) द्रष्टव्यम् ।

मेव वीर्यत्वम्। "वज्रो वै त्रिष्टुबिति। त्रिष्टुभो हननसाधनत्वसादृश्याद् वज्रता। तथा च वज्रस्य वीर्यरूपत्वात् त्रिष्टुभोऽपि वीर्यतया त्रिष्टुबात्मकेन 'वीर्येणैव' हेतुना 'अस्मिन्' पुरुषशिरसि 'वीर्यं दधाति' ॥ २४ ॥

चित्तं देवानां मुदगादित्यस्याभिहोममन्त्रस्य पूर्वेणार्द्धेनैकाहुतिः क्रियते, अपरेण चान्या; अत एव कात्यायनः,—"चित्तं देवाना मित्यर्द्धर्च्चेन स्रुवाहुतिरिति *। तत्र पूर्वार्द्धसाध्या माहुतिं दर्शयति— "स वा अर्द्धर्च्च मिति। 'सः' खल्वध्वर्युः 'अर्द्धर्च्चं मनुद्रुत्य', स्वाहाकारेणैका माहुतिं सम्पादयेदित्यर्थः। ननु किमर्थ मर्द्धर्च्चे स्वाहाकरण मित्यत आह— "अस्थि वा ऋगिति। ऋचोऽस्थ्यात्मकत्वं पादबन्धेन दार्ढ्ययोगात्। ऋचो दार्ढ्यं तैत्तिरीयकेऽधीयते— "यदृचा तद् दृढ मिति †। तथाच सति ऋचो विभागेन तद् 'इदं' पुरुषसम्बन्धि 'शीर्षकपालम्' 'विहाप्य' विभिद्य। "ओ हाक् त्यागे" ‡, एयन्तस्य ल्यपि रूपम्। 'शीर्ष्णः' शिरसोऽन्तरे 'यदिदम्' अत्र विद्यमानं 'वीर्यम्' 'तदस्मिन्निदधाति'; आज्यस्वाहाकारयोर्वीर्यात्मकत्वादित्यर्थः ॥ २५ ॥

अथोत्तरार्द्धर्च्चसाध्या माहुतिं दर्शयन् तत्राप्युपयोग माह— "अथेति। "इदं तदिति। पूर्वम्, अन्तरे वीर्यनिधानार्थं कपाल-

* का० श्रौ० सू० १७. ५. १८।

† तै० सं० ६. ५. १०. १२।

‡ जु० प० ८ धा०।

भेदनात्, पुनः 'तत्' 'कपालं' 'सन्धाय' शिरस उपरितनं 'वीर्यम्' अत्र निहितवान्, "स वा अर्द्धर्चं मनुद्रुत्येत्यादिना * सूचितम्॥ ॥ २६ ॥

मन्त्रं दर्शयन् व्याचष्टे— "चित्रं देवाना मिति †। 'एषः' उपधीयमानः 'पुरुषः', 'असौ' परिदृश्यमानः 'आदित्यः' खलु; आदित्यस्य सर्वात्मकत्वात्। आदित्यमण्डलञ्च 'देवानां' रश्मीनां 'चित्र मनोकं' समुदायः। तथा सति 'अस्य' पुरुषस्योपधाने 'तदेतत् चित्रं देवानां मनोकन्' 'उदेति'; अत उच्यते—"चित्रं देवाना मुदगादनीकम्"–'इति', मन्त्रेणेत्यर्थः ‡। "चक्षुर्मित्रस्य वरुणस्याग्नेः"–'इति', एवमित्रादि देवताग्रहण मन्येषा मप्युपलक्षणम्। उभयान् प्रत्यस्य प्रकाशकत्व साधारण्यादिति दर्शितम्— "उभयेषा मिति। "उद्यन् वा इति। उदयमानः सन् 'एषः' आदित्यः 'इमान्' पृथिव्यादीन् लोकान् 'आपूरयति' प्राणैः समर्थयति, चेष्टयतीत्यर्थः। एतच्च तैत्तिरीयके श्रूयते— "असौ य आपूर्यति, स सर्वेषां भूतानां प्राणैरापूर्यति"–इति §। अत उक्तम्—'आप्राः'–इति, "प्रा पूरणे" ‖, लिटि रूपम्। "सूर्य आत्मा जगतस्तस्थुषश्च"–'इति', अनेन स्थावरजङ्गमात्मकस्य सर्वस्य जगतोऽयं सूर्यश्चेष्टकत्वेन अन्तर आत्मेति विवक्षित मित्याह—"एष ह्येति। 'जगत्' गच्छत्, जङ्ग-

---

* एतत्पूर्वस्या मेव कण्डिकायां ( ३७५ पृ० ) द्रष्टव्यम्।

†, ‡ वा० सं० १३. ४६।

§ तै० आर० १. १४. १. ३।

‖ अदा० प० ७७ धा०।

मात्मकं जगत्; तिष्ठत्, स्थावरात्मकम्। "अन्येभ्योऽपि दृश्यते"-इत्यत्र * "द्युतिगमिजुहोतीनां द्विर्वचनम्"-इत्यनुशासनात् † क्विपि द्विर्वचने जगदिति भवति॥ २७॥

अग्निहोमानन्तर मुपहितानां पुरुषशिरःप्रभृतीनां पशुशिरसा मुत्सर्गनामकैर्मन्त्रैरुपस्थानं विधत्ते— "अथेति ‡। विहितमन्त्रसाध्यस्योपस्थानस्य प्रयोजनाभिधानं प्रतिजानीते— "एतद्वा इति। 'एतत्' खलु प्रयोजन मित्यर्थः। तदेव दर्शयति — "यत्रैतानिति। 'यत्र' यस्मिन् प्रस्तावे 'प्रजापतिः' 'एतान्' पुरुषमुख्यान् 'पशून्' आलब्धु मैच्छत्, तदा 'आलिप्स्यमानास्ते अशोचन्'; आलम्भस्य शोकहेतुत्वात्। ततः 'तेषां' 'शुचं' शोकरूपं पापम् 'एतैः' वक्ष्यमाणैः उत्सर्गमन्त्रैः अपहतवान्। 'तथैव' 'अयम्' अपि यजमानः एतेनोपस्थानेन 'एषां' शोकरूपं पापम् 'अपहन्ति'। "मयु मारण्य मनु ते दिशामीत्यादिना § आरण्यपशूत्सर्गप्रतिपादनेन तेषा मुत्सर्गत्वम्; शोकोत्सर्गहेतुत्वाद्वा॥ २८॥

अथ पञ्चाना मपि शीर्षाणा मुपधानानन्तरम् उत्सर्गमन्त्रैरुपस्थान मिति स्वकीयं मतम्; तथैवोक्तत्वात्। अपरे पुनरत्रानुष्ठानक्रमे किञ्चिद्वैषम्य माचक्षते। तन्मतं दूषयितु मनुवदति — "तद्वैक इति। तथा कुर्वताञ्च तेषा माशय माह— "नेदिति। पूर्व मुपहितस्य पशोः शोक मुत्सारित मभिलक्ष्यैवो-

---

* पा० सू० ३. २. १७८।

† पा० ८. १. १४ सू० वा०।

‡ का० श्रौ० सू० १७. ५. १६।

§ तै० सं० ४. २. १०. १।

त्तरपशोरुपधानं स्यात्, अतस्तन्माभूदिति तथा कुर्वन्तीत्यर्थः। तन्मतम् दूषयति— "ते हेति। तथाविधाभिप्रायवन्तस्ते खलु याज्ञिकाः शोकरूपं पाप मभिलक्ष्यैव 'उपदधति'। यतः 'पूर्वस्य' पूर्वपशोः 'यां शुच मुत्सृजन्ति', 'ताम्' एव 'उत्तरेण सह उपदधति'; निवृत्तसजातीयानुवृत्तिभावादित्यर्थः॥ २९॥

अथैतेषा मेवोपस्थाने केषाञ्चिच्छाखिनां प्रकारविशेषं दूषयितु मनुवदति— "विपरिक्राम मिति। पशूनां 'शुच मूर्द्धा मुत्सृजाम इति', केचिद् विपरिक्रम्य विपरिक्रम्योपतिष्ठन्ते; उत्क्रमणपूर्वकत्वाद्विपरिक्रमणस्येति। तथोपस्थाने शोकः ऊर्द्ध एवोत्सृष्टो भवतीति तेनोपतिष्ठन्त इति भावः। तदपि दूषयति— "ते ह ते इति। तथाविधाभिप्रायवन्तः 'ते' शोकरूपं पापम् 'अनूद्यन्ति' विपरिक्रमणार्थ मुद्गमने क्षते शोकं प्रत्यनुगतवन्तो भवन्ति। अतो न तथा कुर्यात्। कथं तर्हि शोक ऊर्द्ध मुत्सृष्टो भवतीति तत्राह— "ऊर्द्धो हीति। 'एतेन' उपधानलक्षणेन 'कर्म्मणा' 'ऊर्द्धः' अद्वर्युरिति; उत्तरोत्तर मेतेषां शिरसा मुपधानात्। अतस्तेनैवम् 'ऊर्द्धाम् उत्सृजन्ति'। व्यत्ययेन बहुवचनम्, प्रयोगबहुत्वापेक्षं वा॥ ३०॥

अग्नेर्बहिर्देशे शोक मुत्सृजेदित्याह— "बाह्येनेति। अग्नेर्बाह्यदेशेनोपलक्षिते शुच मुत्सृजेदित्यर्थः। 'अग्नि मिति, षष्ठ्यर्थे द्वितीया व्यत्ययो द्रष्टव्यः। "इमे वै लोकाः'-इत्यस्याय मर्थः— अग्नेः प्रजापत्यात्मकत्वेन 'तत्' पृथिव्यादिलोकात्मनोक्तत्वात् तस्य बहिर्देशे शोकोत्सर्जनेन 'लोकेभ्यः' एव

शोको 'बहिर्द्धा' भवतीति। बाह्येनैवाग्नि मित्यनेनाग्निप्रदेशव्यतिरिक्तदेशे विधानाद् वेदिमध्येऽपि स्यादित्यत आह— "बहिर्वेदीति। वेद्या बहिः। "अपपरिबहिरञ्चवः पञ्चम्या"- इति * अव्ययीभावसमासः। बहिर्वेदि शोकोत्सर्गे वेद्याः कृत्स्नपृथिव्यात्मकत्वात् तस्या बहिरेव शोक उत्सृष्टो भवतीति दर्शितम्— "इयं वा इत्यादिना। 'उदङ्' उत्तरस्यां दिशि वक्ष्यमाणा मयुप्रभृतयः पशवोऽवतिष्ठन्त इति तत्र शोकनिधानाय उदङ्मुखस्तिष्ठनुत्सृज्यदित्याह— "उदङ् तिष्ठन्निति ॥ ३१ ॥

उत्सर्गमन्त्रैरुपस्थानम्, तत्र स्वाभिमतप्रकारं, देशविशेषम्, अङ्ग्चौरवस्थानविशेषञ्च प्रदर्श्य, उपधानक्रमेणैव पुरुषस्य शोकं पूर्व मुत्सृजेदित्याह— "पुरुषस्येति †। तत्र मन्त्रविशेषं प्रदर्शयन्, पदशो विभज्य व्याचष्टे— "इमं मा हिंसीरिति ‡। "द्विपादिति। "सङ्ख्यासुपूर्वस्येति § पादशब्दान्त्यस्य लोपः। 'हिरण्यशकलैर्वा एष सहस्राक्षः' इति, सहस्रशब्दो बहुत्वस्योपलक्षणार्थः; हिरण्यशकलाना मत्र सहस्रसङ्ख्याना मभावात्। अथवा उत्तरत्र सहस्रसङ्ख्याकैर्हिरण्यशकलैः प्रोक्ष्यमाणत्वात्, तदभिप्रायेण सहस्रसङ्ख्या। हिरण्यशकलानां प्रकाशकत्वेनाक्षित्वोपचारः— "आत्मा वै तनूरिति। तेनाधिष्ठितत्वादित्यर्थः। स्पष्ट मन्यत् ॥

---

* पा० सू० २. १. १२।

† का० श्रौ० सू० १७. ५. १६।

‡ वा० सं० १३. ४७।

§ पा० सू० ५. ४. १४०।

मन्त्रस्याय मर्थः— हे 'अग्ने!' 'हिरण्यशकलैः' 'सहस्राक्षः' 'मेधाय' 'चीयमानः' त्वं पशूनां मध्ये 'द्विपादम्' 'इमं' पुरुषं 'मा हिंसीः'। यदि तव भक्ष्यापेक्षास्ति, तर्हि 'आरण्यम्' 'किम्पुरुषम्' उत्सृजामि, 'तेन' किम्पुरुषेण 'आत्मानं' 'पोषयत्' 'संस्कुरुष्व'। 'ते' सम्बन्धिनी 'शुक्' 'मयु'' प्राप्नोतु ॥ २२ ॥

अथाश्वस्य शीर्षोत्सर्गमन्त्रं प्रदर्शयन्, पूर्ववद् व्याचष्टे— "अथेति *। "कनिक्रदो वा एष इति। 'एषः' अश्वः 'कनिक्रदः' अत्यर्थं क्रन्दिता 'वाजिनेषु' वेगवत्सु 'वाजी' अत्यर्थं वेगयुक्तः, अतो युक्तं कनिक्रद मितीत्यर्थः ॥

'गौरः' सिंहः। स्पष्टार्थ मन्यत् † ॥ २३ ॥

अथ गोः शीर्षोत्सर्गमन्त्रं प्रदर्शयन् व्याचष्टे— "अथ गोरिति ‡। "साहस्रो वा इति। गौरिति यत् 'एषः' 'साहस्रः' सहस्राक्षः, सजातीयधेनुद्वारा शतसङ्ख्याकक्षीरधारासम्पन्नः। अत एव 'उत्सः'। कुतः? तस्यानेकजलधारावाहित्वादस्य चानेकक्षीरधारावाहित्वात् उत्स इवोपचारः। "घृतं वा एषेति। 'अदितिः' अखण्डनीया, अदीना वा 'एषा' गौः, 'जनाय' 'घृतं दुहे' क्षीरादिद्वारा तस्य सम्पादनात्। अत्रापि सजातीयधेनुद्वारा घृतदोहनम्। तदपेक्षं चात्र स्त्रीलिङ्गम्। 'दुह इति "लोपस्त आत्मनेपदेष्विति § तकारलोपः। स्पष्ट मन्यत् ‖ ॥ २४ ॥

---

*, ‡ का० श्रौ० सू० १७. ५. १६।

† वा० सं० १३. ४८।

§ पा० सू० ७. १. ४१।

‖ वा० सं० १३. ४९।

"अथावेरिति। शोकोत्सर्गमन्त्रं प्रदर्शयन् व्याचष्टे—"उभयेषां हैष इति *। 'एषः' अविरूपः पशुः 'उभयेषां पशूनां' 'द्विपदां' मनुष्याणाम्, 'चतुष्पदाम्' अश्वादीनाञ्च त्वग्रूपम् भवति; स्वकीयत्वचा तेषा माच्छादनात्। मनुष्यास्तावच्छीतनिवारणायाविजेन कम्बलेन शरीर माच्छादयन्ति। चतुष्पादोऽश्वा बलीवर्दाश्च स्वभारवहने मार्दवाय पृष्ठे कम्बलेनाच्छादिता भवन्ति। "एतद्वेति। 'त्वष्टा' प्रजानां निर्माणादेव प्रजानां मध्ये 'एतद्रूपम्' अविरूपम् पशुं 'प्रथमं' 'विचकार' उत्पादितवान्। अत उक्तं "त्वष्टुरिति। विशदार्थमन्यत् † ॥ ३५ ॥

अथाजस्य मन्त्रं दर्शयन् व्याचष्टे— "अथेति। "यद्वै प्रजापतेः शोकादजायतेति। 'यत्' तेनाग्नेरेव शोकादजायत, तस्य तदात्मकत्त्वात्; अत एव प्रागुक्तम्— "अग्निर्वा एषोऽग्नेरध्यजायतेति। "प्रजापतिर्वा इति। सर्वोत्पादकत्वात् 'प्रजापतिर्ज्जनिता' खलु। स जातो अजः प्राक् प्रजापतिमपश्यत्, अत उक्तं "सोऽपश्यदिति ‡। "प्रकृत्यान्तःपादमव्यपरे"-इति § प्रकृतिभावात्, "एङः पदान्तादतीति ‖ पूर्वरूपत्वं न भवति। "तेन देवा इति। अजस्य वागात्मक-

* का० श्रौ० सू० १७. ५. १६।

† वा० सं० १३. ५०।

‡ मूले तु 'सोऽपश्यत्' इत्येव मदृष्टसर्वपुस्तकेषु।

§ पा० सू० ६. १. ११५।

‖ पा० सू० ६. १. १०६।

त्वम्; तज्जन्यत्वात्। तत् पुनः प्रागुक्तम्— "वाचोऽज मिति। 'देवाः' खलु 'अग्रे' वाच मिमा माश्रित्य देवत्व माप्नुवन्। 'वाचः' इति ल्यब्लोपे पञ्चमी *। स्तोत्रशस्त्रादिरूपया वाचा यज्ञनिष्पत्तेः, यज्ञस्य च देवत्वप्राप्तिहेतुत्वाद् वाच माश्रित्य देवत्वं प्राप्नुवन्नित्यर्थः †।

"उपमेध्यास इतीति। मेधार्हाः यज्ञार्हाः इत्यर्थः। "आज्जसेरसुगिति ‡ असुगागमः। शरभो नाम सिंहघातकः कश्चिन्मृगविशेषः §। स्पष्ट मन्यत् ॥ ३६ ॥

अथानुद्देश्यानां मयुप्रभृतीनां पशूनां शोकादेवोत्पत्तिम्, ब्राह्मणस्य तदभक्ष्यताञ्च दर्शयन्, दिग्विशेषे तेषां निधान माह — "तदाहु रिति ‖। 'तत्' तदा, पश्वालम्भानन्तरम्, 'प्रजापतिः' 'एतेषां' पुरुषादीनां 'पशूनां' 'यां शुचं' पशुपापरूपा मपहतवान्, 'ते' एव 'एते' मयुप्रभृतयः 'पञ्च पशवो' भवन्ति। 'तत्' तत्र पशुविषये वेदविदः 'आहुः', अतः 'ते' पशवः 'उत्क्रान्तमेधाः', तस्यैवार्थप्रदर्शनम् 'अमेध्या इति, एतस्यैव विवरणम् 'अयज्ञिया इत्यपि। अतश्च 'तेषां' मध्ये क मपि पशुं 'ब्राह्मणो नाश्नीयात्'। तथाविधाननाद्यान् पशून् 'एतस्यां दिशि'। एतस्या मिति अभिनयेनोत्तरदिशो निर्देशः। तत्र

---

* पा० १. ४. ३१ सू० १, २ वा०।

† वा० सं० ३. ५१.।

‡ पा० सू० ७. १. ५०।

§ "शरभोऽष्टापदस्त्मगविशेषः सिंहघाती"—इति वा० स० भा० महीधरः।

‖ का० श्रौ० १७. ५. २०।

निदधाति। 'तस्मात्' 'एतस्याम्' उत्तरस्यां 'दिशि' 'पर्जन्यः' 'न वर्षुकः' न वर्षति, 'यत्र' 'एते' पशवोऽवतिष्ठन्त इति कृत्वेत्यर्थः। उत्तरस्यां दिशि क्वचिन् मरुभूमौ पर्जन्यो न वर्षतीति प्रकृता मृगा अपि तत्रैव प्रचुरा इति सिद्धम् ॥ २७ ॥

उपस्थानानन्तरम्, पुनरग्निसमीप मागत्योपतिष्ठत इत्याह— "प्रत्येत्येति *। तत्र कारणम् प्रतिजानीते— "एतद्वा इति। "एतदयथेति। 'अग्नौ' 'सामिचिते' अर्द्धचिते। 'बहिर्वेद्येति 'यत्', 'तत् कर्म' यथायथम्, यथास्वम्; 'अयथायथम्' यथायथं न भवतीत्यर्थः, तथा कृतवान् भवति। अत उपस्थानेनाहिंसार्थं 'तस्मै' 'अग्नये' 'एतत्' निह्नवनं करोति। निह्नवन मपनयः †, बहिर्वेदिगमननिबन्धन मपराधं परिमार्ष्टीत्यर्थः ॥

उपस्थानमन्त्र आग्नेयो गायत्रोऽनिरुक्तो यविष्ठशब्दयुक्तश्च भवेदित्याह— "आग्नेय्येत्यादिना। अग्नेर्गायत्रत्वं षष्ठकाण्डे प्रदर्शितम् ‡। "अनिरुक्तयेति। अविस्पष्टदेवतया। यत्र देवताविशेषवाचकं पदं नास्ति, तदनिरुक्तम्। 'यविष्ठ'-शब्दस्तु गुणवचनः, न पुनरिन्द्रादिशब्दवत् कस्यचिद्देवताविशेषस्य वाचकः। अनिरुक्तत्वादेवास्याग्नेयत्वम्। अनिरुक्तो मन्त्र आग्नेयः प्राजापत्यो वा भवतीति अनिरुक्तस्य सर्वत्वम्, साधारण्यात्; तत् पुनर्देवताविशेषाप्रतिपादकत्वात्।

* का० श्रौ० सू० १७. ६. १।

† अत्र नानापुस्तकेषु नानाविधाशुद्धपाठा दृश्यन्ते।

‡ "तस्मादग्निर्गायत्र इति"—इति ६ का० १. १. १५।

"एतद्वेति। 'अस्य' अग्नेः 'यविष्ठ इति यत् एतत्' पदम्, तत् 'प्रियं' 'धाम' नामधेयम्। अथाग्नौ यविष्ठपदप्रवृत्तिनिमित्तं दर्शयति— "यद्वा इति। यतोऽय मग्निर्विराड्रूपत्वात् 'इदं सर्वं' कृत्स्न मपि जगत् 'अयुवत' मिश्रितवान्, व्याप्तवानित्यर्थः। 'तस्माद्' असौ अग्निः 'यविष्ठः'। 'अयुवतेति "यु मिश्रणामिश्रणयोः"–इत्येतस्य* लङि व्यत्ययेन शब्विकरणे रूपम्। 'यविष्ट इति, "यु मिश्रणे" †, तस्य पचाद्यचि ‡, युवशब्दादिष्ठन्प्रत्यये § रूपम्। इष्ठन्प्रत्ययस्य तद्धितत्वात्, तद्धितानाञ्च प्रातिपदिकादित्यधिकारात्, प्रातिपदिकात् स्वाद्युत्पत्तेः। इदं सर्वं मयुवत, तस्माद् यविष्ठ इत्यर्थः। प्रदर्शनमात्रे तात्पर्यम्, यु-धातोरिष्ठनि 'यविष्ठ'–शब्द इति ‖ प्रतिपाद्यते ॥ ३८ ॥

मन्त्रं व्याचष्टे—"त्वं यविष्ठेति ¶। हविरादेर्दातृत्वाद्यजमानो 'दाश्वान्'। "दाश्वान् साह्वानित्यादिना ** "दाशृ दाने"–इत्यस्माद् †† दाश्वान् शब्दो निपातितः। 'नॄः पाहीति "नॄन् पे"–इति ‡‡ नकारस्य रुः, "अत्रानुनासिकः पूर्वस्य तु वा"–

---

*, † अदा० प० २३ धा०।
‡ पा० सू० ३. १. १३४।
§ पा० सू० ४. ६. १५६।
‖ पा० सू० ५. ३. ६४।
¶ वा० सं १३. ५२।
** पा० सू० ६. १. १२।
†† भ्वा० उ० १८२ धा०।
‡‡ पा० सू० ८. ३. १०।

इत्यनुनासिकादेशः *। 'शृणुधीति, "श्रुशृणुपॄकृवृभ्यश्छन्दसि" -इति † हेर्धिरादेशः। "रक्षा तोक मिति। 'रक्षेति "द्व्यचोऽतस्तिङः"-इति ‡ दीर्घः। 'त्मनेति "मन्त्रेष्वाङ्यादेरात्मनः"-इत्यादिलोपः §। हे 'यविष्ठ!' अग्ने! त्वं 'दाशुषे' यजमानस्य। षष्ठ्यर्थे चतुर्थी ‖। 'नॄन्' मनुष्यान् 'पाहि', 'नः' अस्माकं 'गिरः' स्तुतिरूपा वाचः 'शृणु'। न केवलं यजमानसम्बन्धिमनुष्यपालनं त्वया कार्यम्, अपि तु आत्मना सहितं 'तोकं' प्रजासन्ततिं 'रक्ष' 'इति' मन्त्रार्थः ॥ ३९ ॥

उपस्थानानन्तर मग्निं पश्चाद्भागेनारुह्य, स्वयमातृण्णां प्रदक्षिणीकृत्य, गत्वा, अपस्याख्या इष्टका उपदध्यादित्याह — "आरुह्याग्नि मिति ¶। अपस्योपधाने प्रयोजनं दर्शयितुं तावदेतासा मबात्मकत्व माह— "आप एता इति। तत्प्रयोजन माह— "अथ वा इति। 'अथ' खलु आलम्भसमये 'एतेभ्यः' पुरुषादिभ्यः 'पशुभ्यः' 'आप उत्क्रान्ता भवन्ति', अतश्चापस्याना मुपधाने तासा मबात्मकत्वात् एतेषु 'पशुष्वेव' 'अपः' निहितवान् भवति। तासां पशुशिरःसु अव्यवधानेनोपधान माह— "अनन्तर्हिता इति। एकैकस्मिन् प्रदेशे

---

* पा० सू० ८. ३. २।
† पा० सू० ६. ४. १०२।
‡ पा० सू० ६. ३. १३५।
§ पा० सू० ६. ४. १४१।
‖ पा० २. ३. ६२ सू० १ वा०।
¶ का० श्रौ० सू० १७. ६. २।

पञ्च-पञ्चोपदध्यादित्याह— "पञ्च-पञ्चेति। पञ्च-पञ्च सर्वासु दिक्षूपधेया इत्याह – "सर्वत इति ॥ ४० ॥

प्रतिदिशं पञ्चाना मुपधाने विंशतिः सम्पद्यन्ते, तत्र याः पञ्चदश पूर्वा इष्टकाः, ता अपस्याख्या भवन्तीत्याह —"तद्या इति। पञ्चदशसङ्ख्याना मेवापस्यात्व मुपपादयति— "वज्रो वा इत्यादिना। अपां वज्रत्वं नैशित्याद्यर्थं तत्सेचनात् *। तदेव श्रूयते – "तस्मादिन्द्रोऽबिभेत्स प्रजापति मुपाधावच्छत्रुर्मेऽजनीति, तस्मै वज्रं सिक्त्वा प्रायच्छदेतेन जहीति †। पञ्चदशस्य वज्रात्मकत्वं वीर्यवत्त्वात्। तत् पुनः प्रजापतेर्वीर्यवत्प्रदेशादुत्पत्तेः। अत एव श्रूयते— "उरसो बाहुभ्यां पञ्चदशं निरमिमीतेत्यारभ्य, "तस्मात्ते वीर्यवन्तो (भवन्ति ‡ ) वीर्याद्ध्यसृज्यन्तेति §। यत एवम्, तस्माद्येन मार्गेण आपो यन्ति, तत्र पाप्मानं घ्नन्त्येव; अपां वज्रत्वात्। वज्र एव खलु तस्य भागस्य पाप्मान मपहन्ति। 'तस्मात्' पापहननादेव 'वर्षति' पर्ज्जन्यः। 'वज्रः पाप्मानम्' 'अपहनत्' मपहन्तु 'इति' 'अप्रावृतः' एव 'व्रजेत्' ॥ ४१ ॥

अपस्याभ्यः पञ्चदशभ्य उत्तराः पञ्चेष्टका विद्यन्ते, ताः छन्दस्या इत्याह – "अथेति। छन्दस्याना मुपधानेन पशूत्क्रान्तमांसप्रतिनिधानं भवतीत्याह— "पशवो वा इत्यादिना। पशूनां

---

* अत्र हि सर्वेष्वेव मद्दृष्टेषु पुस्तकेषु अशुद्धः पाठः।

† तै० सं० २. ५. २. ३।

‡ तत्र संहितायामेतत् पदं नाधीयत इति ध्येयम्।

§ तै० सं० ७. १. १. ७।

छन्दस्त्वं यज्ञसाधनत्वात्; अथवा जगत्यानीतत्वात्। एतत्तैत्तिरीयके श्रूयते— "जगती मुदपतश्चतुर्दशाक्षरा सती, साप्राप्य न्यवर्त्तत, तस्यै द्वे अक्षरे अमीयेताम्, सा पशुभिश्च दीक्षया चागच्छदिति *। "अन्न मु पशोर्मांस मित्यनेनान्नं पशव इत्येतदुपपादितम्। एवञ्च सति छन्दस्यानां पश्चात्मकत्वेन मांसरूपत्वात् आलम्भावसरे उत्क्रान्तानि मांसानि पुनरेतेषु प्रतिनिहितवान् भवति। तासा मव्यपस्यावदव्यधानेनोपधान माह— "अनन्तर्हित मिति। अपा मुदरमध्यवर्त्तित्वेन अन्तरत्वात् मांसानां ततो बाह्यत्वम्। तथैवापस्या अन्तराः, छन्दस्या बाह्या भवेयुरित्याह— "अन्तरा अपस्या इति। उक्तप्रकारेण पशुष्वापो मांसानि च सम्पादितानि॥ ४२॥

नैतावता तेषां कार्त्स्न्यं सम्पद्यते; किम्पुनस्ततोऽपि बाह्ययोस्त्वग्लोम्नोरपि कारणत्वेनान्नत्वात्। छन्दस्यानां चान्नात्मकत्वस्योक्तत्वात् उपधानेनैव तयोरप्युपधानं सम्पादित मिति, तदाह— "तदाहुरित्यादि। तत्रोत्तरं दर्शितम्— "अन्नं वाव पशोरिति। प्रकारान्तरेण पशूनां लोमसम्पत्ति माह— "अथो इति। कृष्णाजिनलोमानुविद्धया मृदा उखाया निर्माणात्, उखायाश्चाजालोमानि † सन्तीति, तान्येव पशूनां लोमानि भवन्ति। लोमाधारत्वेनोखाया अभिधानात् उखालोमानीत्यभिप्रेत्य "बाह्योखा भवतीत्यादिनोक्तस्यैवार्थस्योपपादनम्॥

---

* तै० सं० ६. १. ६. ४।

† 'उखायां यानि लोमानि'—इति घ-पाठः।

त्वग्लोमसम्पादने उक्तं पक्षद्वय मपि अभिमत मित्याह—"यदीति। 'यदि' 'इतरेण' अन्येन प्रकारेण तत्सम्पादनं भवति, तर्हि तथैवास्तु। अथ वा 'इतरेण' प्रकारान्तरेण यदि भवति, तर्हि तथैवास्त्विति, अन्योन्यापेक्षया उभयोरपीतरत्वम्। अपस्याद्युपधानेनान्नादिसम्पादनं केन विवक्षित मिति, तत्राह— "इति ह स्माह शाण्डिल्य इति। केनापि तेनाभिप्रायेणैव सुक्त मित्यत आह— "सर्वानिवेति। 'सर्वानेव पशून्' 'कृत्स्नान्' कार्त्स्न्येन 'संस्कुर्मः' सर्वावयवसम्पादनेन समृद्धान् 'कुर्मः' 'इति' अभिप्रायेण, तथोक्त मित्यर्थः॥ ४३॥

प्रकारान्तरेणाप्यपस्याना मुपधानं प्रशंसति— "यद्वेवेति। विस्रस्तावयवात् 'प्रजापतेः' 'आपः' 'आयन्' निर्गताः। ततः 'तासु' निर्गतासु 'अविशत्' अपविष्टवान् *। अपां निर्गमनेन दौर्बल्याद् गन्तु मक्षमः †, तथैवापविष्टवानित्यर्थः। ततश्चापवेशनसाधनत्वात् अपस्या 'विंशतिः' सम्पन्नाः। यद्यपि "तद्याः पञ्चदश पूर्वास्ता अपस्याः"–इत्युक्तम् ‡, तथापि छन्दस्यासाहित्येनात्र विंशतिरित्युक्तम्। सर्वासां वापस्याशब्देनाभिधानं भूयोलिङ्गात् "स्वष्टीरुपदधातीतिवत् §। अथ वा "तद्या अस्यैतेभ्यश्छन्दोभ्य आप आयन्निति ‖ वक्ष्यमाणत्वात्, सर्वा

---

* 'उपविष्टवान्'—इति ङ-पाठः।

† 'मक्षमो भूत्वा'—इति ज-पाठः।

‡ इहैव पुरस्तात् ४१-कण्डिकारम्भे ( ३८२ पृ० ) द्रष्टव्यम्।

§ "स्वष्टीरुपदधाति यथास्वष्ट मेव अवरुन्धे"—इति तै० सं० ५. ३. ४. १६।

‖ इहैवोपरिष्टात् ६१-कण्डिकां ( ३६७ पृ० ) द्रष्टव्यम्।

अप्यपस्या भवन्तीति। आपो निर्गमनावसरे 'अस्य अङ्गुलिभ्योऽध्यस्रवन्'। निर्गच्छन्तीना मपा मस्य प्रजापतेः अन्ततो निर्गमनाद्, अङ्गुलीनां चान्तत्वादिति ॥ ४४ ॥

एवं सति "स यः स प्रजापतिर्व्यस्रंसतेति। 'सोऽय मेव', 'सः' इदानीम् 'अग्निश्चीयते'। 'अथ' प्रजापतेः सकाशाद् 'याः' आपः निर्गताः, 'ता अपस्याः'। ततश्चैतासा मत्रोपधाने ततो निर्गता अप एव 'प्रतिदधाति' ॥ ४५ ॥

अथ क्रमेण तासा मुपधाने मन्त्रान् प्रदर्शयन् व्याचष्टे— "अपां त्वेमन्नित्यादिना *। यदा हि एष वायुरितश्चेतश्च वाति, तदा 'आपः' 'यन्ति' चलन्ति; अतश्च वायुरनेन यन्त्याप इति व्युत्पत्त्या 'एम' †। "इण् गतौ"-इत्यस्मात् ‡ "अन्येभ्योऽपि दृश्यन्ते"-इति § मनिन् प्रत्ययः। स च व्यत्ययेन करणे द्रष्टव्यः। "एमन्नादिषु छन्दसि पररूपम् वक्तव्यम्"-इति ‖ पररूपत्वम् ॥ ४६ ॥

"अपां त्वोद्मन्निति ¶। "यत्र ह्योति। आपो यत्र प्रदेशे उदत्यस्तिष्ठन्ति, तत्र ओषधयो जायन्त इति, अधिकरणव्युत्पत्त्या 'अपा मोद्मन्नोषधयः'। "उन्दी क्लेदने"-इत्यस्मात् ** पूर्ववत्

* का० श्रौ० सू० १७. ६. २।

† वा० सं १३. ५३. १।

‡ अदा० प० ३५ धा०।

§ पा० सू० ३. २. ७५।

‖ पा० ६. १. ७० सू० वा०।

¶ वा० सं० १३. ५३. २।

** रु० प० १० धा०।

मनिन् प्रत्ययः। छान्दसे अनुनासिकलोपे, गुणे च श्रोश्म-न्निति भवति। पूर्ववत् पररूपत्वम् * ॥ ४७ ॥

"अपां त्वा मिति † । "अभ्रं वा अपां भस्मेति। 'अभ्र' मेघः, स चाप्सु निर्गतासु निस्सारत्वादपाम्भस्मेत्युच्यते। एवं भस्म मेघः। "भस्मन्निति "सुपां सुलुगित्यादिना ‡ सप्तम्या लुक्, "न ङिसम्बुद्ध्योः"-इति § न-लोपाभावः ॥ ४८ ॥ ४९ ॥

"अपां त्वायन इति ‖। "इयं वा अपा मयन मिति। सर्वा अप्यापः पृथिवी मधिष्ठायैव प्रवहन्तीति। "तद्या इति। 'तत्' तदा विस्रंसनावसरे खलु 'अस्य' प्रजापतेः 'एतेभ्यः' वाय्वादिभ्यो 'रूपेभ्यः' 'आपः' निर्गताः, तथाविधाः 'ताः' अप एव 'अस्मिन्' प्रजापतौ प्रतिदधाति। न केवल मपा मेव प्रतिधानम्, अपि तु 'एतेभ्यः' येभ्यः 'रूपेभ्यः' 'आपः' निर्गताः, तेषा मपि तदा निर्गतत्वात् तान्यपि पुनरस्मिन् योजयति ॥

उक्तमन्त्रसाध्योपधानाः पञ्चेष्टकाः पूर्वस्यां दिशि उपदध्यात्। एवं वक्ष्यमाणमन्त्रसाध्योपधाना अपीष्टकाः पञ्च-पञ्च दक्षिणादिषु दिक्षु उपधेयाः ॥ ५० ॥

"अर्णवे त्वेति ¶। "प्राणो वा अर्णवः इति। अर्णो जलम्,

---

* इहैव ४६-कण्डीभाष्यशेषो द्रष्टव्यः।

† वा॰ सं॰ १३. ५३. ३।

‡ पा॰ सू॰ ७. १. ३९।

§ पा॰ सू॰ ८. २. ८।

‖ वा॰ सं॰ १३. ५३. ५।

¶ वा॰ सं॰ १३. ५३. ६।

तद्वान्। अर्णःशब्दात् मत्वर्थीये व-प्रत्यये "अर्णसो लोपश्च"-इति * सकारलोपः। अर्णवत्वं च प्राणेन जलस्य चीयमानत्वादिति ॥ ५१ ॥

"समुद्रे त्वेति †। "तदेष श्लोकोऽभ्युक्त इति। "मनसः समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनन्"-इत्यस्मिन्नर्थे 'एषः' वक्ष्यमाणो मन्त्रः 'अभ्युक्तः' इति प्रतिज्ञा। तत्र "ये समुद्रादित्यारभ्य, यत्र निर्वपणं दधुः"-इत्यन्तो मन्त्रः ‡। एतस्मिन् मन्त्रे स्वय मेव प्रकृतोपयोगीनि पदानि व्याचष्टे— "मनः समुद्र इति। 'समुद्रादिति पञ्चम्यन्तस्य पदस्यार्थो 'मनः'। तीक्ष्णाभिरभ्रिभिरित्यस्य वागर्थः— "वाक् तीक्ष्णाभ्रिरिति। 'निर्वपण मित्यस्य च 'त्रयी' ऋग्यजुस्सामलक्षणा 'विद्या' अर्थः। पुनः "तदेष श्लोक इत्युपसंहारः। अत उक्तप्रकारेण 'समुद्रो मन इति, मनस्येव 'ताम्' इष्टकां 'सादयति' ॥ ५२ ॥

"सरिरे त्वेति §। "वाग्वै सरिर मिति। सरणवत्त्वेन वाक् सलिलं खलु; अतो वाचि तां सादितवान् भवति ॥ ५३ ॥

"अपां त्वेति ‖। "तत्र हीति। 'तत्र' चक्षुषि, 'सर्वदेव

---

* पा० ५. २. १०६ सू० वा०।

† वा० सं० १३. ५३. ७।

‡ "ये समुद्रान्निरखनन् देवास्तीक्ष्णाभिरभ्रिभिः।
सुदेवो ऽअद्य तद् विद्याद् यत्र निर्वपणं दधुः॥"
—इतीहैव मूले ( ३८६ पृ० ) द्रष्टव्यम्।

§ वा० सं० १३. ५३. ८।

‖ वा० सं० १३. ५३. ६।

आपः' 'चियन्ति' निवसन्ति खलु, अतः 'चक्षुरपां चयः' ॥ ४५ ॥

"अपां त्वा सधिषीति *। अत्र 'अपां सधिः'-इति सधिशब्देन स्थान मुच्यते; श्रोत्रस्यान्तरार्द्रीभावात्। एतच्च तैत्तिरीयके श्रूयते— "तस्मादार्द्रा अन्तरतः प्राणा इति † ॥ ५५ ॥ ५६ ‡ ॥

"अपां त्वा सधस्थ इति §। 'सधस्थ' इति, "सध मादस्थयोश्छन्दसि"-इति ‖ सह-शब्दस्य सधादेशः। आपोऽस्मिन् सम्भूय तिष्ठन्तीति अन्तरिक्ष मपां सधस्थम् ॥ ५७ ॥

"अपां त्वा योनाविति ¶। "समुद्रो वा अपां योनिरिति। समुद्रस्य सकाशादपा मुत्पत्तेः 'अपां योनिः समुद्रः' ॥ ५८ ॥

"अपां त्वा पुरीष इति **। "सिकता वा अपां पुरीष मिति। भुक्तस्य निस्सारोऽंशो लोके पुरीषशब्दवाच्यः; तद्वत् सिकताना मपि निस्सारत्वादपाम्पुरीषत्वम् ॥ ५९ ॥

"अपां त्वा पाथसीति ††। "अन्नं वा इति। 'पाथः' सारांशः, अन्नस्य तत्सम्पाद्यत्त्वेन तत्सारत्त्वादन्न मपाम्पाथः ॥ ६० ॥

"गायत्रेणेति ‡‡। "गायत्रेण त्वा छन्दसा सादयामीत्यादिभिः

---

* वा० सं० १३. ५३. १०।

† तै० सं० ६. २. ११. ८।

‡ वा० सं० १३. ५३. ११।

§ वा० सं० १३. ५३. १२।

‖ पा० सू० ६. ३. ९६।

¶ वा० सं० १३. ५३. १३।

** वा० सं० १३. ५३. १४।

†† वा० सं० १३. ५३. १५।

‡‡ का० श्रौ० सू० १७. ६. ३।

पञ्चभिर्मन्त्रैः * उत्तरस्यां दिशि छन्दस्या उपदध्यात्। गायत्रीत्यादिषु स्वार्थिकोऽण् प्रत्ययः। स्पष्टार्थ मन्यत् ॥ ६१ ॥

अथासा मपस्याना मङ्गुल्यात्मकत्व माह— "ता एता अङ्गुलय इति। "ता अस्याङ्गुलिभ्योऽध्यस्रवन्"-इत्युक्तत्वात् † 'ताः' अपस्याः 'अङ्गुलयः' इत्यर्थः। उक्त मेवाङ्गुल्यात्मकत्व मुपपादयति— "ताः सर्वत उपदधातीत्यादिना। तत्र "नानोपदधातीति, पृथक्-पृथगुपदधाति, उपधानमन्त्राः पृथक्-पृथग् भवेयुरित्यर्थः। "सकृदिति। पञ्चानां पञ्चानां सकृत् सादनमन्त्रः; न तु उपधानमन्त्रवत् प्रतीष्टक मित्यर्थः। एवं च सति तदिष्टकानां स्वरूपं, समानसम्बन्धं करोति। 'तस्मात्' अङ्गुलयः पञ्च 'समानबन्धनाः' एकस्मिन्नेव हस्ते पञ्च-पञ्च सम्बध्यन्त इत्यर्थः ॥ ६२ ॥ २ [५. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

---

* वा० सं० १३. ५३. १६—२०।

† इहैव ४४-कण्डी (३८४ पृ०) द्रष्टव्या।

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् ,
सप्ताब्धीन् * पञ्चसीरीं-†-स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः ‡ सिङ्गणार्यौ § ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः ,
कार्पासोयं कृपावान् गुडकृत मजडो ‖ राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा ¶ लवणज मनृणः शार्करं चार्कतेजाः ,
रत्नाद्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
सप्तमकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

॥ इति सप्तमकाण्डे चतुर्थप्रपाठकश्च समाप्तः ** ॥

---

* 'पञ्चाब्धीन्'—इति ठ-पाठः । † 'सप्तसीरीं'—इति ठ-पाठः ।
‡ 'सायणः' स्यात् ? § स्यात् 'सिङ्गनार्यौ' ?
‖ 'मजडं'—इति ठ-पाठः । ¶ 'प्राज्यबुद्धिर्'—इति ठ पाठः ।
** इत उत्तर मिह क-पुस्तके "कण्डिकासङ्ख्या ७५"—इति, ख-पुस्तके-ऽन्त्यपत्रं नास्ति , ग-घ-पुस्तकयोः "कण्डिकासङ्ख्या १००"—इति । तत्र १ ब्रा० ३८ क०, २ ब्रा० ६२ क० ; तदासां सङ्कलनयास्मिन् प्रपाठके १०० कण्डिकाः सम्पद्यन्ते ॥

